धर्मो विश्वस्य जगतः प्रतिष्ठा

प्राज्ञपाठशालामण्डलग्रन्थमाला

# मीमांसाकोषः

सप्तमो भागः

(व-ह)

संपादकः

ब्रह्मीभूतः केवलानन्दसरस्वती

मार्गशीर्षः शुक्लः १ भौमवासरः शकः १८८८

Prājña Pāṭhashālā Maṇḍala Grantha Mālā

# MĪMĀṂSĀKOṢAḤ

Part VII



*Edited by*

The Late Kevalānandasaraswatī

1966 Rs. 50

# प्रकाशकस्य निवेदनम्



अयं सप्तमोऽन्तिमश्च भागो मीमांसाकोषस्य । अस्मद्गुरुचरणैः रचितोऽयं कोषोऽस्मिन् भागे हकारेण समाप्तिं गच्छति । गुरुचरणान्तेवासिना मीमांसाभूषणेन आहिताग्निना ताम्वे इत्युपाख्येन दत्तात्रेयशास्त्रिणा अस्य भागस्य संस्कारः संपादितः । विशेषतः सर्वेषां भागानामादितोऽन्तपर्यन्तं संपादनं मुद्रणं प्रकाशनं चास्मत्सहकारिणा कार्यकारिसंपादकेन श्रीरङ्गनाथशास्त्रिणा वझायासेन निर्वर्तितम् । अस्य भागस्य मुद्रणव्ययार्थं भारतसंघराज्यशिक्षामन्त्रणालयेन महाराष्ट्रराज्यशासनशिक्षाविभागेन च वित्तानुदानं कृतमिति तदुभयं हार्दिकीं प्रशंसामर्हति ।

गुरुचरणैस्तु अस्य कोशस्य विरचनार्थं कस्मादप्यन्यस्मात् वित्तानुदानमस्वीकृत्यैव, एतद्विरचनं स्वाध्यायरूपं तप इत्येवं मत्वा, बहवः संवत्सरा अस्मिन्नेव कार्ये समाहितचित्तैर्व्यतीताः । गुरुचरणर्णोपाकरणमस्य कोशस्य समाप्त्या निःशेषं संपन्नमिति कृत्वा अस्मत्प्राज्ञपाठशालामण्डलमात्मानं कृतार्थं मन्यते ।

अस्मिन् महाकोशे गुरुचरणविरचिता पूर्वमीमांसासूत्रवृत्तिः अधिकरणाद्यसूत्राक्षरानुक्रमेण अधिकरणशः समाविष्टाऽस्ति । सा इत उद्धृत्य पृथक्तया मीमांसादर्शनसूत्रानुक्रमेण प्रकाशिता चेद्भविष्यति मीमांसादर्शनाध्ययनरसिकानुपकरिष्यतीति मत्वा तस्याः पृथक् प्रकाशनेऽस्मन्मनसि संकल्पोऽस्ति । वित्तानुकूल्ये सोऽपि संकल्पः साफल्यं गच्छेदित्याशास्महे ।

कोशेऽस्मिन् स्वीकृतवर्णक्रमविषयकं विवरणं तृतीयभागे द्रष्टव्यम् ।

अधिकरणादिसंख्या— सप्तमेऽस्मिन् भागे भाष्याधिकरणानि १५६, संकर्षाधिकरणानि ५४, केवलानन्दीवृत्त्यधिकरणानि १९१, तौतातिताधिकरणानि ९, न्यायाः २०६, लघुसिद्धान्ताश्च ६२०७ भवन्ति ।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ९३५, संकर्षाधिकरणानि ३२२, केवलानन्दीवृत्त्यधिकरणानि ( पूर्वमनवधानादगणितानि १९, मिलित्वा ) ९००, तौतातिताधिकरणानि ८९, न्यायाः १४२२, लघुसिद्धान्ताश्च २८४८७ इति ।

लक्ष्मणशास्त्री जोशी, तर्कतीर्थः
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

मार्गशीर्षः शुक्लः १
शकः १८८८

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च ।

अद्वैत— अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता ।

अद्वैत. चं— अद्वैतसिद्धेः टीका लघुचन्द्रिका ब्रह्मानन्दी नाम ।

अलंकारः— भाट्टालङ्कारः नाम मीमांसान्यायप्रकाशस्य टीका अनन्तदेवविरचिता । चौखम्बायां १९२१ सने मुद्रितः ।

आचारमयूखः— श्री. ज. र. घारपुरेसंपादितः, मुंबई ।

आपध— आपस्तम्बधर्मसूत्रम् । प्रश्नः, कण्डिका, सूत्रं इति अङ्कत्रयम् ।

आपस्तम्बाचार्यः— प्रसिद्धः कल्पसूत्रकारः ।

आभरणम्— शांकरशारीरकभाष्यस्य टीका । अध्याय- पाद- सूत्राङ्काः । क्वचित् तृतीयोऽङ्कः अधिकरणस्य ।

आर्षेयब्राह्मणम्— सामवेदीयम् ।

आश्व. गृ— आश्वलायनगृह्यसूत्रम्, तत्रत्या नारायणवृत्तिश्च ।

आश्व. श्रौ— आश्वलायनश्रौतसूत्रम् । पुण्यपत्तनस्थानन्दाश्रमे मुद्रितम् ।

इ— इत्यादि ।

उद्योत— व्याकरणमहाभाष्यस्य टीका ।

उपदेशसाहस्री— श्रीशंकराचार्यप्रणीता । रामतीर्थः टीकाकारः । प्रकरणश्लोकाङ्कौ । गद्यं पद्यं च ।

ऋजु— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता । चौखम्बासीरीज् १९२९ सने मुद्रिता ।

ऋसं— ऋग्वेदसंहिता । मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम् ।

ऐआसा— ऐतरेयारण्यकस्य सायणभाष्यम् ।

ऐब्रा— ऐतरेयब्राह्मणम् । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः, सूत्रं इत्यङ्कत्रयम् ।

ऐब्रासा— ऐतरेयब्राह्मणस्य सायणभाष्यम् । अध्याय-खण्ड-सूत्राणामङ्काः । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् ।

कठोप— कठोपनिषद् ।

कणादसूत्रम्— वैशेषिकदर्शनम् । अध्याय-आह्निक-सूत्राणामङ्काः ।

कणिका— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता । काशी मेडिकल्हॉल्मुद्रणालये १९०७ सने मुद्रिता ।

कर्क— कर्काचार्यः, कात्यायनश्रौतसूत्रस्य भाष्यकारः ।

कल्पतरु— भामत्याः टीका । अमलानन्दसरस्वतीप्रणीतः, १९१७ सने मोहमय्यां निर्णयसागरे मुद्रितः । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् ।

कस्तूरि— कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्तिः । १९०८ सने मैसूरनगरे मुद्रिता । सा च भाट्टदीपिकापुस्तके एव मुद्रिता ।

कातीयसूत्रम्— कात्यायनश्रौतसूत्रम् ।

कास— काठकसंहिता ।

कु., कुतूहलम्— अध्वरमीमांसाकुतूहलवृत्ति श्रीवासुदेवदीक्षितविरचिता । श्रीरङ्ग–वाणीविलासे मुद्रिता। अध्याय , पादः , अधिकरणम् , सूत्र इत्यङ्कचतुष्टयम्।

के— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

कैउ— कैवल्योपनिषत् ।

कैयटः— व्याकरणमहाभाष्यस्य टीकाकार । काश्यां मुद्रितः ।

कौ., कौस्तुभः— मीमांसाकौस्तुभः खण्डदेवप्रणीतः । चौखम्बायां १९२९ सने मुद्रितः । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम्, पृष्ठाङ्कश्च ।

कौब्रा., कौषीतकिब्राह्मणम्— पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम्।

चतुर्ग्रन्थी— महामहोपाध्यायश्रीअनन्तकृष्णशास्त्रिभिः प्रणीता न्यायामृत–अद्वैतसिद्धि–न्यायामृत-तरङ्गिणी-लघुचन्द्रिकाणां चतुर्णां ग्रन्थानां निष्कर्षरूपा ।

चान्द्रिका— अद्वैतसिद्धेः टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता ।

जै— जैमिनिद्वादशलक्षणी । अध्यायः, पादः, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् ।

जैब्रा— जैमिनीयब्राह्मणम् ।

टुप् — टुप्टीका नाम वार्तिकं कुमारिलभट्टप्रणीतम्। पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३२ सनादौ मुद्रिता ।

तत्त्वप्रकाशिका— परिभाषेन्दुशेखरटीकायाः भूतेः टीका । २००२ सवति काश्यां मुद्रिता ।

तत्त्वबोधिनी— सिद्धान्तकौमुद्याः टीका निर्णयसागरीया १९२९ सने मुद्रिता ।

तन्त्ररत्नम्— टुप्टीकायाः पार्थसारथिप्रणीता टीका । लिखिता । अध्यायः, पादः, अधिकरणम्, सूत्रं चेति अङ्कचतुष्टयम् ।

ताण्ड्य— ताण्ड्यब्राह्मण पञ्चविंश नाम । अध्यायः, खण्डः, सूत्रं चेति अङ्कत्रयम्।

ताण्ड्यसा— ताण्ड्यब्राह्मणस्य सायणप्रणीत भाष्यम् ।

तैसं— तैत्तिरीयसंहिता । काण्डम्, प्रपाठकः, अनुवाकः इत्यङ्कत्रयम् ।

तैसंसा— तैत्तिरीयसंहितायाः सायणभाष्यम् । पुण्यपत्तने आनन्दाश्रमे मुद्रितम् ।

तौता— तौतातितमततिलक- भवदेवप्रणीत- मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः । काश्यां मुद्रितः ।

दमी — दत्तकमीमांसा श्रीनन्दपण्डितकृता ।

द्र०— द्रष्टव्यम् ।

धर्मसिन्धुः— श्रीकाशीनाथोपाध्यायविरचितः ।

निरुक्त— यास्काचार्यप्रणीतं निरुक्तम् । अध्यायः खण्डश्च ।

निर्णयसिन्धुः— श्रीकमलाकरभट्टविरचितः ।

न्या. माला— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता, चौखम्बायां मुद्रिता ।

न्यायनि— न्यायनिर्णयः नाम शाङ्करशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता । अध्याय-पाद-सूत्राङ्काः ।

न्या. सू— न्यायदर्शनसूत्रम् । अध्यायः, आह्निकम्, सूत्र इति त्रयोऽङ्काः ।

पं— पद्धतिः ।

पञ्चिका— प्रकरणपञ्चिका श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी । अनेकप्रकरणात्मको ग्रन्थः । चौखम्बाया मुद्रितः ।

पराक्रमः— उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः । लिखित. । पत्रम्, पृष्ठं इत्यङ्कद्वयम् ।

**परि**— परिभाषा । अमाङ्कः ।

**परिभाषेन्दुः**— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्या २००२ संवति मुद्रितः ।

**परिमल**— भामत्याटीकायाः कल्पतरोः टीका । अप्पय्यदीक्षितविरचितः मोहमय्यां निर्णयसागरे १९१७ सने मुद्रित ।

**पा**— पाणिनि व्याकरणाचार्यः प्रसिद्धः । अध्यायः, पादः, सूत्र चेति अङ्कत्रयम् ।

**पुरुषार्थचिन्तामणिः**— श्रीविष्णुभट्टविरचितः । मोहमय्यां मुद्रितः ।

**पृ**— पृष्ठम् ।

**प्र पञ्चिका**— प्रकरणपञ्चिका श्रीशालिकनाथप्रणीता । काश्यां विद्याविलासयन्त्रालये १९०४ सने मुद्रिता ।

**प्र. वि**— प्रभाकरविजय नन्दीश्वरविरचितः । कलकत्तायां १९२६ सने मुद्रितः ।

**बाल**— बालमीमांसाप्रकाशः शङ्करभट्टप्रणीतः । काश्यां विद्याविलासमुद्रणालये १९०२ सने मुद्रित ।

**बिन्दु**— न्यायबिन्दु तत्त्वबिन्दुपाख्यवैद्यनाथप्रणीतः, मुम्बई गुजरातीमुद्रणालये १९१५ सने मुद्रित ।

**बृहती**— शाबरभाष्यस्य प्रभाकरमतानुसारिणी टीका । नव्यप्राभाकरमतमत्र । चौखम्बायां १९२९ सने मुद्रिता ।

**बृहस्पतिः**— बृहस्पतिस्मृति ।

**बौध**— बौधायनधर्मसूत्रम् । प्रश्न., पटल, सूत्र च ।

**ब्रसू**— ब्रह्मसूत्रम् । अध्यायः, पादः, सूत्र इत्यङ्कत्रयम् । अङ्कचतुष्टये सति तृतीयोऽङ्कः अधिकरणस्य ।

**भगी**— भगवद्गीता । अध्यायः श्लोकश्च ।

**भट्टसोमेश्वरः**— तन्त्रवार्तिकटीकायाः न्यायसुधायाः कर्ता ।

**भा**— शाबरभाष्य आनन्दाश्रमे मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् । क्वचित् पृष्ठाङ्कः अधिकः ।

**भाट्ट**— भाट्टदीपिका नव्यमीमांसकखण्डदेवप्रणीता । मैसूर १९०८ सने मुद्रिता । अध्याय., पादः, अधिकरणमिति अङ्कत्रयम् ।

**भाट्टालंकारः**— मीमांसान्यायप्रकाशस्य अनन्तदेवविरचिता टीका ।

**भामती**— श्रीवाचस्पतिमिश्रप्रणीता शारीरकभाष्यस्य टीका । मुम्बई, निर्णयसागरे १९१७ सने मुद्रिता ।

**भावनाविवेकः**— मण्डनाचार्यप्रणीतः काश्यां १९२३ सने मुद्रितः ।

**भाष्यम्**— शाबरभाष्यम् ।

**भूति**— परिभाषेन्दुशेखरस्य टीका श्रीतात्याशास्त्री– पटवर्धन– प्रणीता । काश्यां २००२ विक्रमसंवति मुद्रिता ।

**मणि**— भाट्टचिन्तामणिः गागाभट्टविरचितः । तर्कपादमात्रम् । चौखम्बायां १९०० सने मुद्रितः ।

**मण्डन**— मण्डनमिश्रकृता मीमांसानुक्रमणी चौखम्बायां १९२९ सने मुद्रिता, मण्डनाचार्यश्च ।

**माघ**— माघविरचित शिशुपालवध नाम महाकाव्यम् । सर्ग. श्लोकः इत्यङ्कद्वयम् ।

**मिताक्षरा**— याज्ञवल्क्यस्मृतिटीका श्रीविज्ञानेश्वरविरचिता ।

**मीको**— मीमांसाकोश ।

**मीन्या**— मीमांसान्यायप्रकाश श्रीआपदेवप्रणीतः । चौखम्बायां १९२० सने मुद्रित ।

**मीमांसाजीवरक्षा**— प्राभाकरमतानुसारिणी शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके अन्ते काश्या १९०४ सने मुद्रिता ।

**मुरारि** — अङ्गत्वनिरुक्तिकर्ता । आनन्दाश्रमीये मीमांसादर्शने तृतीये भागे अन्ते १९३१ सने मुद्रिता ।

**मेधातिथिः**— मनुस्मृतेः भाष्यकारः ।

**याज्ञ., यास्मृ**— याज्ञवल्क्यस्मृति । अध्याय , श्लोकः इति द्वौ अङ्कौ ।

**रत्न**— तन्त्ररत्नम् । पार्थसारथिमिश्रप्रणीतम् । टुप्टीकावार्तिकस्य टीका । लिखिता । अध्यायः, पादः, अधिकरणम् , सूत्र इत्यङ्कचतुष्टयम् ।

**रत्नमाला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बाया मुद्रिता ।

**रत्नाकर**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका, पार्थसारथिमिश्रप्रणीता । चौखम्बाया १८९८ सने मुद्रित ।

**रसायनम्**— विधिरसायन अप्पय्यदीक्षितप्रणीतम् । चौखम्बाया १९०१ सने मुद्रितम् ।

**रहस्य**— भाट्टरहस्य श्रीखण्डदेवप्रणीतम् । शाब्दबोधविषयकम् । काञ्चीनगरे मुद्रितम् ।

**वा**— तन्त्रवार्तिक आचार्यकुमारिलभट्टविरचित शाबरभाष्यस्य विवरणात्मकम् । पुण्यपत्तने आनन्दाश्रमे भाष्येण सह १९३१ सने मुद्रितम् । अध्याय , पादः, अधिकरणम्, सूत्र चेति अङ्कचतुष्टयम् ।

**वाक्यार्थ**— वाक्यार्थमातृकावृत्ति शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके एव अन्ते १९०३ सने मुद्रिता ।

**वि**— जैमिनीयन्यायमालाविस्तरः सायणमाधवाचार्यप्रणीतः । पुण्यपत्तने आनन्दाश्रमे १९१६ सने मुद्रितः । अध्यायः, पादः, अधिकरण चेति अङ्कत्रयम् ।

**विवि**— विधिविवेक मण्डनाचार्यप्रणीतः । काश्या मेडिकलहॉलमुद्रणालये १९०७ सने मुद्रित ।

**वृ**— मीमांसासूत्रवृत्ति सुबोधिनी नाम रामेश्वरसूरिविरचिता । काश्या मेडिकलहॉलमुद्रणालये १९२३ सने मुद्रिता ।

**वैजयन्ती**— महादेवकृता सत्याषाढश्रौतसूत्रवृत्तिः । पुण्यपत्तने आनन्दाश्रमे १९०७ सने मुद्रिता ।

**वैद्यनाथः**— शाबरभाष्यीयतर्कपादस्य टीकाकारः । आनन्दाश्रमे १९२९ सने मुद्रिता वैद्यनाथी नाम ।

**वैद्यनाथी**— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

**वैया. भू**— वैयाकरणभूषणसारः ।

**वै सार. कारिका**— वैयाकरणभूषणसारस्था कारिका ।

**व्यवहारमयूखः**— श्री ज र. घारपुरेप्रकाशितः, मुम्बई ।

**शंकर**— शंकरभट्टकृतः मीमांसासारसंग्रहः । काश्या विद्याविलासमुद्रणालये प्रकरणपञ्चिकापुस्तकान्ते १९०४ सने मुद्रितः ।

**शब्दकौस्तुभः**— भट्टोजीदीक्षितप्रणीतः ।

**शांभा**— शांकर भाष्यम् । अध्यायः , पादः , सूत्रं इत्यङ्कत्रयम् । चतुरङ्कत्वे तु तृतीयोऽङ्कः अधिकरणस्य ।

**शांश्रौ**— शाङ्खायनश्रौतसूत्रम् । अध्यायः , खण्ड , सूत्रं च । कलिकाताया १८८८ सने मुद्रित सभाष्यम् ।

**शा**— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता । निर्णयसागरे १९१५ सने मुद्रिता । अध्यायः , पादः , अधिकरण चेति अङ्कत्रयम् ।

शास्त्रप्रकाशिका— बृहदारण्यकोपनिषच्छाङ्करभाष्यगतवार्तिकस्य आनन्दगिरिकृता टीका आनन्दाश्रमे मुद्रिता ।

शेखर— परिभाषेन्दुशेखरः नागेशप्रणीत । काश्यां २००२ संवति मुद्रितः भूत्यादिसहितः ।

श्राद्धमयूखः -- श्री. ज. र. घारपुरेप्रकाशितः, मुम्बई ।

श्रीकर— ब्रह्मसूत्रभाष्यकारः शैवमतानुसारी ।

श्लोवा— श्लोकवार्तिकं आचार्यकुमारिलभट्टविरचितम् । तर्कपादः । चौखम्बायां १८९८ सने मुद्रितम् ।

संस्कारकौस्तुभः-- श्रीअनन्तदेवविरचितः निर्णयसागरे मुद्रितः ।

संकर्ष— सङ्कर्षकाण्डम् । भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्तिः । काश्यां मेडिकलहॉल-मुद्रणालये १८९४ सने मुद्रिता ।

संक्षेपशारीरकम्— रामतीर्थकृतटीकासहितम् । अध्यायः, श्लोकः इति अङ्कद्वयम् ।

संग्रहः — न्यायसंग्रहः । लिखितः ।

सत्याश्रौ— सत्याषाढीय श्रौतसूत्रम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सत्याषाढः — तैत्तिरीयहिरण्यकेशिसत्याषाढीयकल्पसूत्र आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सद्सं— सर्वदर्शनसंग्रह ।

सना. ध. प्र — सनातनधर्मप्रदीपः । श्रीकुकरमुण्डेकरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीतः ।

समयमयूख.— श्री ज. र घारपुरेसंपादित, मुम्बई ।

साहस्री— भुवनेशलौकिकन्यायसाहस्री । मुम्बई वेङ्कटेश्वरे १८३० शके मुद्रिता । साहस्र्यां यो न्यायक्रमाङ्को निवेशितः स एवास्माभि. प्रदर्श्यते ।

सि. कौ. -- सिद्धान्तकौमुदी भट्टोजीदीक्षितप्रणीता । निर्णयसागरे १९२९ सने मुद्रिता ।

सिद्धान्तचन्द्रिका— तर्कपादस्थशास्त्रदीपिकायाः टीका रामकृष्णप्रणीता निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता ।

सिद्धान्तदर्शनम्— निरञ्जनभाष्यसमेतम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सिद्धिव्याख्या— अद्वैतसिद्धेः टीका ।

सु, सुधा— न्यायसुधा, तन्त्रवार्तिकस्य टीका । भट्टसोमेश्वरविरचिता राणकापरपर्याया । चौखम्बायां मुद्रिता । अत्र पृष्ठाङ्का एव केवलमुपन्यस्ताः । यत्र च 'सु. ३।७' इति स्यात्तत्र सुधाया. तृतीयाध्यायस्य सप्तमाद्यपादात्मके भागे ग्रन्थान्ते मुद्रिते पृष्ठ अङ्क इत्यर्थ । तत्र भागे भिन्न पृथगेव अङ्का मुद्रिता आदित आरभ्य ।

सोम-- सोमनाथी मयूखमालिका नाम शास्त्रदीपिकाया टीका अर्थवादाधिकरणमारभ्य द्वादशाध्यायान्ता । निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता । अत्र अध्यायः, पादः, अधिकरणं इति अङ्कत्रयम् ।

# शुद्धिपत्रकम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३६३९ | २ | ८ | बर्हिव | बर्हिवें |
| ३६४१ | ,, | ६ | श्रतौ | श्रुतौ |
| ३६४३ | ,, | १५ | मिधान | मिधानं |
| ३६४४ | १ | ,, | शेपपाच्च | शेपाच्च |
| ,, | २ | १४ | पादकं | पदिकं |
| ३६५२ | १ | १ | त्राथ | त्रार्थ |
| ,, | ,, | ४ | श्रति | श्रुति |
| ,, | ,, | १७ | श्रतेः | श्रुतेः |
| ,, | २ | २० | श्रत्य | श्रुत्य |
| ३६५३ | १ | ४ | प्यरन्य | प्यन्य |
| ३६६० | ,, | ६ | स्मति | स्मृति |
| ,, | ,, | ६ | श्रत्य | श्रुत्य |
| ,, | ,, | १७ | शिताथ | शितार्थे |
| ,, | २ | २८ | स्मते | स्मृते |
| ३६६१ | १ | ८ | श्रति | श्रुति |
| ३६६५ | ,, | १३ | श्रति | श्रुति |
| ,, | २ | ३ | श्रत्य | श्रुत्य |
| ,, | ,, | २४ | श्रति | श्रुति |
| ३६६६ | १ | १० | अनमी | अनुमी |
| ,, | ,, | २० | दशन | दर्शन |
| ,, | २ | १४ | स्मति | स्मृति |
| ३६६८ | १ | २ | मेवकं | मेवैकं |
| ३६७३ | ,, | ५ | श्रसंख्या | श्रुतसंख्या |
| ३६७४ | २ | ७ | योनम: | योगम |
| ३६८५ | ,, | ६ | रथत | रथंत |
| ३७०० | ,, | २१ | तिस्रभिः | तिसृभिः |
| ३७०६ | ,, | १ | कमव | कर्मैव |
| ३७०९ | ,, | २२ | भ्रवाणे | भ्रुवाणे |
| ३७४७ | ,, | २६ | दवेन | देवेन |
| ३७९९ | १ | ७ | ऐता | एता |
| ,, | २ | ८ | चरो | चरौ |
| ३८०८ | १ | ३३ | अस्तुन् | अक्नून् |
| ३८२५ | २ | २४ | द्युति | द्युति |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३८२६ | १ | १९ | मतान्य | मुतान्य |
| ३८२७ | २ | ११ | मदः | भेदः |
| ३८५३ | १ | ६ | चतद | चैतद |
| ३८६७ | " | ३ | मिलन्द्रि | मिलेन्द्रि |
| " | " | ११ | सवः | सर्वैः |
| " | २ | १ | रिक्त | रिक्त |
| ३८७२ | १ | ६ | चत्य | चैत्य |
| ३८७३ | २ | ३ | तत्मात्त | तस्मात्त |
| ३८७४ | " | १५ | हुमि | हुरमि |
| ३८७७ | १ | ३ | ब्रुवाणा | ब्रुवाणा |
| ३८७९ | २ | २१ | सगयो | सर्गयो |
| ३८८७ | १ | " | शास्त्र | शास्त्रे |
| ३८८८ | " | १९ | नषा | नैषां |
| " | २ | १३ | चाह्यभ्यः | वाह्येभ्यः |
| ३८९८ | १ | १५ | थैवेति | स्थैवेति |
| ३९२२ | " | १० | पद यें | पदार्थे |
| " | " | २० | शस्यै | शस्यैव |
| ३९२३ | " | ३२ | मना | मन्त्रा |
| ३९२५ | २ | ८ | घद्दर्म | धर्मं |
| ३९३१ | " | १२ | दशना | दर्शना |
| ३९३४ | १ | २० | लिद्धयय | सिद्धयर्थं |
| ३९४१ | २ | ३० | औपत्ति | औत्पत्ति |
| ३९४२ | " | २ | कम्मी | कुम्भी |
| " | " | ८ | शृग | शृङ्ग |
| " | " | २४ | धम | धर्मे |
| " | " | २६ | शते | शृते |
| ३९४६ | " | २८ | काय | कार्ये |
| ३९७३ | " | २९ | भति | श्रुति |
| ३९७५ | " | ६ | स्मृतिर्क | स्मृतिकं |
| ३९७६ | १ | १ | धम | धर्मे |
| ३९९९ | " | २४ | आहृत्ये | आकृत्ये |
| ४००५ | " | १५ | मध्र | महत्व |
| ४०१० | २ | १० | नैमत्ति | नैमित्ति |
| ४०२७ | " | ४ | षोडशि | आप्यस-षोडशि |
| ४०२९ | १ | २२ | इयुक्तम् | इत्युचम् |
| ४०३५ | " | २८ | रित्या | रीत्या |
| ४०५२ | २ | ८ | द्ववचनं | द्ववचनं |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- | --- |
| ४०६५ | १ | ६ | सौर्य | सौर्य |
| ४०९० | " | १ | ज्ञोतिः | ज्योतिः |
| ४०९६ | २ | २७ | चेत्। | चेत्। ४७ ॥ |
| ४१०० | | | ५००० | ४१०० |
| ४१०१ | | | ५००१ | ४१०१ |
| ४१०२ | | | ५००२ | ४१०२ |
| ४१०३ | | | ५००३ | ४१०३ |
| ४१०४ | | | ५००४ | ४१०४ |
| ४११५ | १ | २५ | प्रकान्तं | प्रक्रान्तं |
| ४१२७ | " | ११ | मूंध्रा | मूर्ध्ना |
| " | २ | २६ | मूंध्रा | मूर्ध्ना |
| ४१४२ | " | १४ | प्रधा | प्राधा |
| ४१४३ | १ | ३२ | सखड | सखण्ड |
| ४१५३ | " | २० | उर्जे | ऊर्जे |
| ४१७३ | " | १५ | जुहोति | जुहोति |
| ४१८६ | २ | ३० | एकैकी | एकैको |
| ४१९९ | १ | २० | ब्रह्मणी | ब्रह्मणो |
| ४२०४ | " | १९ | कृष्टते | ह्रियते |
| ४२०५ | " | ३३ | पोऽस्यति | पोऽवस्यति |
| ४२०७ | २ | ११ | प्रकान्ता | प्रक्रान्ता |
| ४२३५ | " | १५ | ** सर्वस्यारे | * सर्वस्यारे |
| ४२४२ | " | २० | पद्य | पशु |
| ४२४३ | " | ५ | मपरि | सुपरि |
| ४२५४ | १ | १३ | स्रग्दण्ड | स्रुग्दण्ड |
| ४२७८ | " | १७ | ॠक् | ऋक् |
| ४२८३ | " | ३० | कमति | कमिति |
| ४२८६ | " | ७ | श्लोके | श्लोकेन |
| ४३२१ | " | १ | ऋल्पर्य | मत्यर्थ |
| ४३३९ | २ | २८ | धारयति | धारयति |
| ४३४० | " | २६ | घातम् | शृतम् |
| ४३५८ | " | ७ | वाल्मीक | वल्मीक |
| ४३५९ | " | २९ | फल्न्त | फलान्त |
| ४३७३ | " | २१ | थन्या | श्रुत्वा |
| ४३७९ | १ | १२ | पृथ | पृथक् |
| ४३८३ | २ | ७ | चुर्गन | चूर्गन |
| ४४१० | १ | ३४ | मात्रयि | मात्रयि |
| ४४२१ | २ | २८ | प्रश्ना | पश्ना |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४४२७ | २ | ४ | तत्रार्थं | तत्रार्थं |
| ४४२८ | " | ३ | प्रयवा | प्रन्यवा |
| ४४४० | १ | ३३ | चेदे | वेद |
| ४४४७ | " | २३ | स्वतःम | स्वतःप्रा |
| ४४५१ | " | १९ | समावाये | समवाये |
| ४४५२ | २ | १६ | प्रयणी | प्रायणी |
| ४४६७ | १ | ९ | प्रतिवि | प्रतीति |
| " | २ | १२ | पर्वाय | पर्याय |
| ४४८३ | " | ३१ | स्वहा | स्वाहा |
| ४४८५ | १ | १३ | भग्नि | अग्नी |
| ४४९० | " | १ | हविपा | हविषा |
| ४४९७ | २ | ३० | वो अहुते | तोऽहुते |
| " | " | १४ | कल्पात्या | कल्पाया |
| ४४९९ | " | २५ | ख्यास्यात् | ख्या स्यात् |
| ४५०६ | १ | ५ | उज्ञल | उज्ज्वल |
| ४५१३ | २ | २६ | उदपेच्यो | उपदेदयो |
| ४५१४ | १ | १३ | हिरय | हिरण्य |
| ४५१७ | " | ३३ | भत्व | अश्व |
| ४५२५ | " | " | देवत्ता | देवत्ता |

• विधिव्यापारः। सर्वत्र हि भावनातद्विशेषणार्थातिरिक्तेऽर्थे विधिव्यापारो नास्ति इति उत्तराधिकरणे वक्ष्यामः। भा. ३।१।६।१२ पृ. ६९१. • विधिव्यापारं विनैव यत् पुरुषस्याभिलषितं तस्य विधीयमानसाधनं प्रति उद्देश्यत्वमात्र विधिगम्यम्। सोम. २।१।४.

• विधिव्यापारसंस्पर्शपरिमाणं अन्वेष्टव्यम् ( ' दशापवित्रेण ग्रह संमार्ष्टि ' इत्येवमादौ ), यद् विधिनेव संस्पृष्टं तत् कर्तव्य नेतरत् इत्यवधारणात्। भा. ३।१।७।१३ पृ. ७००–७०१.

• विधिशक्तिः आख्यातविशेषाणां मन्त्रत्वेन तिरोधीयते इति न नियमः। भा. २।१।६।१० पृ. ४३१, • विधिशक्तिः गुणे संचरति। ३।३।१०।२१ पृ. ८६९, • विधिशक्तिः नामपदे नास्ति। १।४।३।३ पृ. ३३२. • विधिशक्तिः प्रतिबध्यते यच्छब्देन ' न ता नशन्ति ' इत्यादौ। आमन्त्रण विभक्त्या– ' अहे बुध्निय मन्त्रं मे गोपाय ' इत्यादौ। उत्तमपुरुषेण ' दामि गृह्णामि ' इत्यादौ। यदिशब्देन ' यदि सोममपहरेयुः ' इत्यादौ। ' येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात्। विधिशक्तिः प्रणश्येत्तु ते सर्वेऽनभिधायकाः॥ ' भा. २।१।६।२१ पृ. ४३२। सुधा– ' आत्मनि प्रेरणाऽयोगान्निमित्तत्वाभिधानतः। विधिशक्तिविहन्तृ स्यात् यच्छब्दादिचतुष्टयम्॥ ' पृ. ६६८. • ' विधिशक्त्या गृहीतं यत् तत्सर्वं हि विवक्षितम्। तदेव तु परित्यक्तं व्याख्येयमविवक्षितम्॥ ' भा. ३।१।७।१३ पृ. ७०२.

• विधिशक्त्यभावः अर्थवादः। पराक्रमः. ५।२.

• विधिशक्तिक्षयः यच्छब्देन, उत्तमपुरुषेण, संबोधनविभक्त्या च भवति। ' यस्तोभय हविर्गतिमार्छेत् ' इत्यत्र यच्छब्दः। ' बर्हिर्देवसदनं दामि ' इत्यत्र उत्तमपुरुषः। ' आग्नीत् अग्नीन् विहर ' इत्यत्र, हे ' अग्नीत् ' इति संबोधनम्। वि. ३।३।६.

• विधिशक्तिविघातकम्— ' सिद्धत्वद्योतनात् वक्त्राभिमुख्यासंभवाद् विधौ। आत्मनि प्रेरणायोगान्निमित्तत्वाभिधानतः॥ विधिशक्तिविहन्तृ स्याद्यच्छब्दादिचतुष्टयम्। प्राप्तयोगेऽपि तत्रापि क्वचित्स्यादपि हन्तृता॥ ' यच्छब्दः, आमन्त्रणविभक्तिः, उत्तमपुरुषः, यदिशब्दश्चेति चतुष्टयम्। सु. पृ. ६६८.

• विधिशतेनापि तथा पुरुषो न हि प्रवर्तते यथा लोभेन। भा. ३।४।१०।२८ पृ. ९६०.

• 'विधिशब्दाश्च'। १।२।४।४५॥ इत्यत्र 'अग्ने गृहपते सुगृहपतिः ' इत्यादिमन्त्रेषु ' शतं हिमाः ' इत्यादिशब्दाना ' शतं त्वा हेमन्तान् इन्धिषीय इति वावैतदाह ' इत्यादिवाक्यशेषाः मन्त्राणां विवक्षितार्थत्वे लिङ्ग इति व्यवस्थापितम्। कु. १।२।१।१८ पृ. ३०. • न च गौणोऽर्थो विधिशब्दात् अवगम्यते। भा. १०।२।१७।४७.

• विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना। १०।४।१२।२३॥

दर्शपूर्णमासयोः ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' इति श्रुतम्। अष्टाकपालस्य पुरोडाशस्य अग्निर्देवता। अग्नेश्च अग्नि, शुचिः, पावकः, धूमकेतुः, कृशानुः इत्यादीनि नामधेयानि। तथा सति आवाहनादिनिगदमन्त्रेषु ' अमुष्मै इदं न मम ' इति त्यागमन्त्रे च कतमन्नामधेयं वक्तव्यं इति विचारे सिद्धान्तमाह। मन्त्रत्वे इत्यत्र सत्वन्यय. सार्थे, मन्त्रे इत्यर्थः। निगदमन्त्रेषु त्यागमन्त्रे च विधिशब्दस्य विधिवाक्यगतस्य अग्निशब्दस्यैव भावः स्यात् उच्चारणं कर्तव्य नान्यस्य पर्यायशब्दस्य। यस्मात् तेन अग्निशब्देनैव चोदना विधिः प्रवृत्त। तस्मात् विधिगतदेवताबोधकशब्देनैव त्यागे निगदेषु च निर्देशः इति सिद्धान्तः।

शेषाणां चोदनैकत्वात् तस्मात् सर्वत्र श्रूयते । २४ ॥

विधिशब्दस्य मन्त्रत्वे देवताप्रकाशकशब्दस्यैव आवाहनादिनिगदेषु उच्चारण इति सिद्धान्ते हेतुन्तरमाह । यस्मात् शेषाणां शेषभूतानां मन्त्राणां चोदनैकत्वात् एकचोदनागतशब्दसंयुक्तत्वात् विधिशब्दस्य मन्त्रत्वे भाव, तस्मात् सर्वत्र अयाट्—उच्चिति-स्वाहाकारेष्वपि विधिगतशब्द एव श्रूयते । तस्मात् आवाहनादिनिगदेषु याज्यो अयाडादिनिगमेषु चेति सर्वत्र अग्निशब्द एव उच्चारणीय' इति । फे.

* 'विधिशब्दस्य मन्त्रत्वे भाव स्यात्तेन चोदना' (१०।४।१२।२३) । आवाहनादौ येन केनचित् पर्यायेण देवताभिधानसिद्धेर्निविधिगतान्यादिशब्दानादरः इति पूर्वपक्षयित्वा, 'आग्नेयोऽष्टाकपाल' इति विधिगतेनाग्निशब्देन देवताया हविःसंबन्धविधानात् मन्त्रार्थे देवतोद्देशे विधिगतस्यैव शब्दस्योच्चारणं कार्यं इति तत्र सूत्रे सिद्धान्तितम् । सु. पृ ६४३. * 'विधिशब्दस्य मन्त्रत्वे भाव स्यात्' इति दशमे (१०।४।१२।२३) विधिमात्रप्रमाणिका देवता इत्युक्तम् । याल पृ १२२. * 'विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना' (१०।४।१२।२३) इति दशमाधिकरणन्यायेन आवाहनादिविषये निगमे मन्त्रकार्ये विधिगतस्यैव शब्दस्य उच्चारणमवधार्यते । सु पृ. ६५१, * 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्०' इति दशमाधिकरणन्यायेन द्रव्येऽपि देवतावत् विधिगतस्यैव शब्दस्य प्रयोगनियमः । पृ ४६८, * आग्नेयादियागाङ्गभूतेषु आवाहनादिषु निगमस्थानेषु किं येन केनचित् पर्यायेण देवता अभिधेया अथ विधिगतेनैव शब्देनेति संदेहे, येन केनचिदर्थाभिधेयनियमे प्राप्ते, देवताया: प्रतिग्रहादिव्यापाराभावात् स्वरूपेण कर्मसमवायानुपपत्ते: शब्देन अग्निमुद्दिश्य हविस्त्यजेत् इति विधिपर्यालोचनात्, येन शब्देनेत्यपेक्षाया बुद्धिस्थाग्निशब्दानियमे कारणाभावात् अग्निशब्देनैव अग्निमुद्दिशेत् इति विधिगतेनैव शब्देन देवतात्वविधानात् मन्त्रकार्ये तस्यैवोच्चारणं कार्यं इति 'विधिशब्दस्य मन्त्रत्वे भाव. स्यात्तेन चोदना' इतिसूत्रोक्तदाशमिकन्यायेन (१०।४।१२।२३) विधिगतप्रयोगानुसारेणैव विकृतौ देवतापदानि उह्यमानानि प्रयोक्ष्यन्ते । पृ. २८२. * चेतनाचेतनसाधारण्येन अर्थस्यैव देवतात्वं दशमे ('विधिशब्दस्य मन्त्रत्वे० ') वक्ष्यते । कौ. २।१। ६।१५ पृ ८९ * देवतापदानि तावत् 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्०' इत्येतेन न्यायेन सर्वाणि साधुत्वसमतान् पर्यायान् परित्यज्य विधिगतप्रयोगानुसरणेनैव तद्वाक्यशेषवाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते । वा. १।३।८।२४ पृ. २६३, * न चान्यशब्दोच्चारणे तेषां (विश्वेषां देवानां) देवतात्वं भवति 'विधिशब्दस्य मन्त्रत्वे भाव.०' इति वक्ष्यति । २।१। १।२३ पृ ७३८. * यदा तु दाशमिकाधिकरणवश्यमाणरीत्या ('विधिशब्दस्य मन्त्रत्वे० ') विधिगतशब्दविशिष्टस्य अर्थस्य तादृशशब्दमात्रस्य वा देवतात्वम्, तदा क प्रसङ्ग. शब्दान्तरस्य । भाट्ट. ६।१।५. त्यागादौ विधिगतशब्देनैव देवताप्रकाशन कार्यम् ॥

☞ विधिशब्दाधिकरणम् ।

विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना । १०।४।१२।२३॥

भाष्यम्— स्तो दर्शपूर्णमासौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तत्रेदमाम्नायते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । सन्ति चाग्नेरभिधानानि, अग्नि शुचि. पावक: धूमकेतुः कृशानुर्वैश्वानर. शाण्डिल्य· इत्येवमादीनि । तत्र सन्देह: वाचिषु निगमेषु किं येन केनचिदग्ने. शब्देनाभिधान कर्तव्यमुत विधिशब्देन अग्निशब्देनेति । किं प्राप्तम् ? येन केनचिदिति । कुत ? अग्न्यर्थनिर्देशात् । अग्न्यर्थो देवता अग्न्यर्थेन पुरोडाश. सबद्धय । स येन शब्देन शक्यते कर्तु पा । त्यागकाले उद्देष्टव्या । सा येन शब्देन शक्योद्देष्टुम्, तेनोद्देष्टव्या । सैषा शब्दानामन्यतमेन शक्योद्देष्टुम् । तस्माद्येन केनचिद्वाचिषु निगमेषूद्देश. कर्तव्य इति । एव प्राप्ते, ब्रूम. । विधिशब्देनैव अग्निशब्देन उद्देष्टव्या, नान्येन शुच्यादिना इति । कुत. ? तेन चोदना । तेन विधिशब्देन अस्य हविष. एकवचोदना

भवति। कथमिव? आग्नेयः कर्तव्य इत्यग्निरस्य देवता कर्तव्येत्यर्थः।

का पुनरियं देवता नाम। एकं तावन्मतम्, या एता इतिहासपुराणेष्वाख्यायिकाः संकीर्त्यन्ते नाकसदः, ता देवता इति। उच्यते। तासु देवतासु, अश्वादीनां शार्दूलादीनां वा न ग्रहः। स्मर्यते च शास्त्रान्तरेण देवतान्तरम् 'कालेभ्यो भवति, मासो देवता, संवत्सरो देवता' इति।

अपरं मतम्, येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते 'अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता' इत्येवमादिषु, तेऽत्र देवताशब्देनोच्यन्ते इति। तथाप्यश्वादीनामनुपपन्नमेव। किंच सामान्यवचनस्य शब्दस्य लौकिके व्यवहारे अभावात् अर्थस्याप्रसिद्धिः स्यात्। तस्मात् सूक्तभाजो हविर्भाजश्च देवताः। काः सूक्तभाजः? 'इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव॥' (ऋग्. १।९४।१) इति। हविर्भाजः आग्नेयमष्टाकपालं निर्वपेत्, अग्नीषोमीयमेकादशकपालमिति।

आह। यदि हविर्भाजो देवताः कपालानामपि देवतात्वं प्राप्नोति। तान्यपि हविर्भाञ्जि। एवं तर्हि या हविर्भाग् देवता, या प्रति तादर्थ्यं हविषः। सूक्तस्याप्येवमेव। अपि च देवताशब्दः स्मर्यते। अग्निदेवत्यं सूक्तम्, अग्निदेवत्यं हविरिति। तथा अतिथिदेवत्यम्, पितृदेवत्यमिति। एवं मूर्तानाममूर्तानां चेतनानाम् अचेतनानां श्रुत्या कञ्चिदर्थं प्रति तादर्थ्येन सम्बन्धीयमानानां देवतात्वं भविष्यति। सामान्यवचनं चोपपत्स्यते। किमत्र। भवेदेवम्। यस्या वाचकं शब्दमुद्दिश्य त्यक्तव्यं हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते, सा देवता भवति तत्र। ननु एवं सति गुणाः येन केनचिदपि शब्देन निर्देशः करणीयः। अथोच्यते। भवेदेतदेवम्, यद्यग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत। अर्थोऽपि हि तत्स्मार्थं प्रत्याय्येत। न तु अत्राग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्यते। यत्र ह्यर्थे कार्यमाशास्यते, तत्र शब्दोऽर्थप्रत्यायनार्थो भवति, यथार्थेन प्रयोजनम्। यत्र पुनः शब्द एव कार्यम्, तत्र कार्यसम्बन्धार्थः शब्द एव प्रत्याययितव्यः। देवतायाश्च यज्ञसाधनभावो न रूपेण भवति। केन तर्हि? सम्बन्धिना शब्देन। यथा 'अध्वर्युर्हस्ताभ्यामुपकरोति' एवं 'देवता शब्देनोपकरोति'। यथा 'होतुः पाणी द्विर्लेपेनोपस्तृणाति' इति पाणिसम्बन्धे अपि होतैवोपकरोति, एवं सम्बन्धिना शब्देनोपकुर्वती देवता उपकारिणी गम्यते। देवताया अप्युपकारिण्याः चोदितायाः शब्दस्यैव यज्ञे समवायः। तस्माच्च शब्दोऽर्थप्रत्यायनार्थमुच्चारितः। स चार्थः पुनः शब्दः प्रत्याययेदिति लक्षितलक्षणा हि तथा स्यात्। किं तर्हि? शब्द एव हविषा सम्बध्यते। तत्सम्बन्धादर्थोऽपि देवता भविष्यति। यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते, सा देवता। शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञायते। इह तु शब्द एव कार्यं सम्भवति। तस्मान्नार्थप्रत्यायनार्थः शब्द इति।

तदुक्तं वृत्तिकारेण। न वा शब्दपूर्वको हि अर्थसम्प्रत्ययस्तस्मादर्थनिष्पत्तिरिति। एवं चेदग्निशब्देन हविषः सम्बन्धः। नास्ति प्रसङ्गः शुन्ध्यादीनां शब्दानामिति। तस्मात् मन्यन्ते विधिशब्द उपादातव्य इति। उच्यते। ननु शब्द एव देवता प्राप्नोति। अथोच्यते। नैतदस्माभिः परिहर्तव्यम्। न हीदमुच्यमानमस्मत्पक्षं बाधते। सुतरां शुन्ध्यादीनामप्रसङ्ग इति।

टुप्—अस्य अधिकरणस्य गाथसन्धो वक्तव्यः। पूर्वपक्षे न विशिष्यते। सिद्धान्ते पर्यायशब्दो बाध्यते। इन्द्रादीनां यद्यर्थो विद्यते लोकव्यवहारे, यथा गवादीनाम्, ततः पर्यायशब्दानामप्रसङ्गो भवेत्। न त्वर्थो विद्यते। इन्द्रादीनामप्रत्यक्षत्वात्। उच्यते। इन्द्रशब्द उच्चरिते किमपि प्रतीयते सामान्येन। तथोपपदान्वयव्याहारात् स्मरणाच्चेन्द्रादीनामर्थो विद्यते। यथा प्राची दिगिति न प्रत्यक्षेण प्रतीयते, नानुमानेन। शब्दादेव प्रतीयते। इन्द्रशब्देन च यदुच्यते, शक्रशब्देन च तदेवोच्यते इति लोकस्मरणम्। अनादि च स्मरणं न शक्यं पर्यनुयोक्तुम्। यथा प्रत्यक्षेण रूपमनुभूयमानं न शक्यते पर्यनुयोक्तुम्, किमर्थमनुभूयते इति। एवमिहार्थोऽनुसन्धेयः। सोऽर्थ एव देवता। तस्य च वाचकः शब्दः। स

अपर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधाय पर्यवस्यति । तस्यां च अवस्थायां विधिगतस्य शब्दस्य संनिहितस्य परित्यागे कारणाभावात् तदुच्चारणमेव विधीयते न शब्दान्तरस्य । तस्मात् विधिशब्दनियम इति ।

सोम— पूर्वत्र यथा आवापोद्वापयोः संयोगः, एवं इह देवतानिर्देशो विधिशब्देनैव कार्य इति संदेहे प्रमाणाभावात् येन केनचिच्छब्देन देवतानिर्देशः कार्य इत्युत्थितेः संगतिः । लक्षणसंगतिस्तु वाक्यप्रसङ्गात् पर्यायशब्दस्याप्यपर्यवसानात् विचारस्य इति ( शेषः ) । सूत्रार्थस्तु— मन्त्रवत् मन्त्रपदेवतावाचकशब्दोच्चारणासंभवे विधिगतस्य अग्निशब्दस्य भावः उच्चारणं स्यात्, यतः तेन विधिशब्देन हविःप्रकल्पचोदनेति ।

वि— 'पर्यायेणापि देवोक्तिर्विधेयेनैव पदेन वा । अर्थाभेदादादिमोऽन्त्यः शब्दपूर्वान्वयित्वतः ॥'

भाट्ट— सर्वत्र 'आग्नेयोऽष्टाकपालः' इत्यादौ किं विधिगत एव देवताशब्दस्त्यागादावुच्चारणीयः, अथवा नायं नियम इति चिन्तायाम्, न तावच्छब्दस्यैव देवतात्वम्, यदि अर्थमनङ्गीकृत्याङ्गीकृत्य वा उच्यते । न तावदाद्यः, अग्न्यादिशब्दानामर्थपरत्वस्य लौकिकवैदिकयोः प्रसिद्धत्वात् अर्थपरत्वाभावे अग्न्यादिशब्दानां प्रातिपदिकसंज्ञाभावेन विभक्त्यनुत्पत्तेश्च । नान्त्यः । अर्थाभिधाने तस्यैव देवतात्वोपपत्तौ अग्न्यादिपदे शब्दलक्षणायां प्रमाणाभावात् । न च तत्र स्वत्वप्रागभावप्रध्वंसोद्देश्यत्वरूपदेवताया असंभवः, द्रव्यत्यागकालीनोच्चारणकर्मत्वरूपस्य तस्य शब्दधर्मत्वादिति वाच्यम्, तदुद्देश्यत्वोच्चारणकर्मत्वे प्रमाणाभावेन द्रव्यत्यागकालीनज्ञानकर्मत्वरूपस्य तस्यार्थेऽप्युपपत्तेः । न च ज्ञानस्यापि शब्दोच्चारणाधीनत्वमेवेत्येवं नियमोऽस्ति । इत्यादिसंकल्पदर्शनादिनाऽपि स्मरणोपपत्तेः । अतः शब्दोच्चारण एव प्रमाणाभावे विधिगतशब्दनियमस्य दूरापास्तत्वमेव ।

अस्तु चोद्देश्यत्वस्य उच्चारणघटितत्वम्, तथाप्युच्चार्यमाणशब्दप्रतिपाद्यत्वेन देवतात्वमिति न तस्यार्थे अर्थभेदः । न च तथाप्युच्चार्यमाणशब्दविशेषापेक्षायां श्रुतत्वाद्विधिगतशब्दस्यैव नियमो भविष्यतीति वाच्यम्, श्रुतशब्दस्यार्थं विधाय चरितार्थस्य शब्दनियामकत्वानुपपत्तेः । आकाङ्क्षायाः वाचकपदमात्रग्रहणेनापि शान्तेः । इतरथा द्रव्यवाचिपदस्थलेऽपि यत्र— 'व्रीहीणां मेध सुमनस्यमानः' इत्यादौ विकृतौ नैयग्रवादिचरुषूहप्रसक्तिः तत्र विधिगतशब्दनियमापत्तेः । यद्यपि च द्रव्यस्य स्वरूपेणैव कर्मणि समवायः, देवतायास्तु शब्दद्वारेणेत्येतावानस्ति तयोर्भेदः, तथापि श्रुतशब्दस्यार्थं विधाय चरितार्थस्य शब्दविशेषापेक्षायामनुपस्थितत्वात्तस्यैव नियमे तुल्यत्वमेव ।

किञ्चैवं यत्र पर्यायशब्दद्वयप्रयोगः, यथा— 'अग्नये पावकाय' इत्यादौ, तत्र पदद्वयप्रयोगो भवतः कथं सिध्येत् । तत्र द्वयेषामेकशब्दनियमस्यैवोपपत्तौ शब्दद्वयनियमे प्रमाणाभावः । अतो न क्वापि त्यागादौ विधिगतशब्दनियमः । इति प्राप्ते, न तावदुच्चारणमन्तरेणैव ज्ञानमात्रेणार्थस्य देवतात्वम्, तथात्वे 'अग्नये पावकाय' इत्यादावर्थस्यैकेनापि पदेन विधानसंभवे पदद्वयवैयर्थ्यापत्तेः । अत एव यद्यपि पुराणादिपर्यालोचनया पावकपदमग्निविशेषवाचि, तथापि तेनैवाग्नित्वसमानाधिकरणविशेषधर्मोपस्थित्युपपत्तेः अग्निपदवैयर्थ्यापत्तिः । अतः शिष्टाचारानुरोधेन च शब्दोच्चारणमावश्यकमेव । अत एव 'प्रजापतिं मनसा ध्यायेत्' इत्यादावेव तदभावो वाचनिकः । 'सामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो वदेत् । संकीर्त्य देशकालादि तुभ्यं संप्रददे इति ॥ न ममेति स्वस्वत्वाया निवृत्तिमपि कीर्तयेत्' । दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः ॥' इति हेमाद्रिधृतवृद्धवसिष्ठवचनाद्ययमर्थो निर्णीयते । अतश्च लाघवाद्द्रव्यत्यागकालीनविहितशब्दोच्चारणकर्मत्वमेव देवतात्वं न तु निरुक्तज्ञानकर्मत्वम्, न वा त्यागकालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वं गौरवात् । अत्र माद्यन्तिक— यत्किञ्चिच्छब्दोच्चारणमात्रापादितसदसद्व्यवहारार्थं निहितैवेति । इदमेव च तद्धितार्थः । अतः प्रधानभूतद्रव्यलोपेनाग्न्यादिप्रातिपदिके चतुर्थ्यन्ततामध्यपतीत्य तस्यैव देवतात्वं विधिना विधीयते । एवं च पदद्वयस्थले उभयोरपि समुच्चयेन देवतात्वम्, समुच्चयश्चैकवाक्यतयोच्चारणादिना बोध्यः । अर्थस्य तु आनुषङ्गिक-

तया प्रतीतेः आवश्यकत्वात् तादृशशब्दप्रतिपाद्यत्वरूप मात्रं देवतात्वमपि अर्थसिद्धमिति न तत् शास्त्रेण विधीयते ।

एतेन शब्दस्यार्थस्यैव देवतात्वम्, देवतात्वं च त्याग-कालीनोच्चारणकर्मीभूतशब्दप्रतिपाद्यत्वम्, तच्च 'अग्नये पावकाय' इत्यादौ एकस्मिन्नेवार्थे तत्तच्छब्दघटितं देव-तात्वद्वयम्, तयोश्चावयोपादानात् समुच्चितम्, तेन न तत्र एकपदोच्चारणावृत्तिरित्यपास्तम्, गुणभूतदेवतात्वे तद्धितादिशक्तिकल्पनाया गौरवात्। उक्तार्थस्यान्यलभ्य-त्वाच्च।

एतेनैव 'शब्दविशिष्टार्थे एव प्रातिपदिकलक्षणा-मङ्गीकृत्य तस्यैव निरुक्तदेवतात्वेऽन्वय.' इति न्यायसुधा-कृत्स्वारस्यमपि अपास्तम्, तद्धितादिपदशक्यतावच्छे-दके गौरवात्। अतः शब्द एव वाक्यार्थान्वयीति नान्य-शब्दप्रयोगप्रसक्तिस्त्यागकाले । आवाहनादिमन्त्रेषु तु पठितत्वादेव नान्यशब्दप्रयोग इति निर्विवादमेव । तत्र-त्यामिदं परं न शब्दलक्षणा शब्दतदर्थस्यापि तत्प्रति-पाद्यत्वसम्बन्धेन यागसम्बन्धात्तस्यैव शक्त्याऽन्यादिवेन स्मरणोपपत्ते.। अस्य चाधिकरणस्य लक्षणोपयोग्यभिमा-धिकरणोपोद्घातता स्फुटमेवेति ।

मण्डन— 'विधिशब्दस्तु मन्त्रे स्यात्।' विधि-शब्दः विधिवाक्यगतदेवतावाची शब्द. इत्यर्थः ।

शंकर— 'विधिशब्दो देवतायाम्।' १५.

● यस्य यावन्तं शब्दमुद्दिश्य स्मृत्या वा हवि-स्त्यज्यति इति संकल्प. क्रियते सा देवता भवति इति विधिशब्दाधिकरणे देवतालक्षण वक्ष्यते । मु. पृ ७८२.

● विधिश्रुतिः इतरश्रुतिभ्यो बलीयसी । विधि-श्रुत्या व्याख्यातत्वपरत्वाय आग्नेयीश्रुतिसंकोचस्य अपेक्षित-त्वात् (आग्नेय्या आग्नीध्र) तस्याश्च पुरुषप्रवृत्तिहेतु-त्वेन श्रुत्यन्तरेभ्यो बलीयस्त्वात् न आग्नेयीश्रुतिसंकोचो दोषः । मु पृ. ११२९. ● विधिश्रुतिरेव पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसंबन्धमात्र बोधयति । मीन्या.

● विधिसंनिधौ श्रुतायाः निन्दायाः निषेधाकल्पनेन विधेयस्तुत्यर्थत्वं दशमे वक्ष्यते (१०।८।४।७)। मु. पृ. ६१.

● नहि विधिसंभवे समस्तवाक्यानुवादत्वं युक्तम्। वा. ३।८।२०।५२ पृ. १०२४, ● मुख्यविधिसंभवे लक्षणया न स्तुतिः प्रतिपत्तव्या । १।२।२।१९ पृ. १३४.

● विधिसहस्रेणापि अवाक्यार्थप्रतिपादनशक्तेः आधातुमशक्यत्वम्। सोम. १।२।१ पृ. ६.

● 'विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र सन्दिग्धमितरेणावधार्यते ॥' वा. १।४।१३।२४ पृ. ३६५.

● विधीयमानं हि दुर्बलं विरुद्धं बाध्यते नानु-गुणम्। वा. ३।३।६।१७ पृ. ५९३. ● अज्ञातवत् ज्ञाप्यते विधीयमानोऽर्थः, ज्ञातवदनूद्यते गुणसम्बन्धा-र्थम्। नच सकृदुच्चार्यमाणः ज्ञातवत् अज्ञातश्च भवितु-मर्हति । भा. ३।१।६।१२ पृ. ६९०, ● विधीय-मानस्य अन्या वचनव्यक्तिः, गुणेन सम्बध्यमानस्य चान्या । ३।१।६।१२ पृ. ६९०.

● विधृती । 'अरत्निमात्रे विधृती करोति' दर्श-पूर्णमासयोः । ते च परिभोजनीयाद् बर्हिषः कर्तव्ये न तु वेदिस्तरणार्थाद् बर्हिषः । ३।८।१७।३३. ● आतिथ्याया इध्मे 'ऐक्षव्यौ विधृती' इत्युक्तम्। ऐक्षव्यौ काशपिञ्जूले, न तु इक्षुपत्रे । (याज्ञिकास्तु इक्षुपत्रे एव स्वीकुर्वन्ति । के.) । शा. १।३।५. ● कुशा. धारक दर्भद्वयम्। तच्च वेद्यामास्तृते बर्हिषि उपरि प्रसार्य मूले प्रस्तरः आसाद्यते तदुपरि च जुहूः आसाद्यते । विधृत्योरधस्तात् उपभृत् अग्रोपरि च ध्रुवा । शा. सोम. १।३।५.

Z विधृतिपवित्राधिकरणम्। विधृतिः पवित्रं च लौकिकाद् बर्हिषः कार्यम्॥

विरोधे च श्रुतिविरोधादव्यक्तः शेषे । ३।८।१७।३३ ॥

भाष्यम्— दर्शपूर्णमासयोरामनन्ति 'समावप्रच्छि-न्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति' । तथा 'अर-

रिनमात्रे विधृती करोति ' इति । तत्र संशयः किं वेदिस्तरणार्थाद्बर्हिषो विधृतिपवित्रे, उतान्यत इति । किं तावत् प्राप्तम् ? वेदिस्तरणार्थाद्बर्हिषः कार्ये । किं कारणम् ? तद्धि प्रकृतम्, धर्माश्चाविशेषात् सर्वबर्हिषामर्थेन । तस्मात्तत इति प्राप्ते, ब्रूमः । अन्यतः क्रियेत । कुतः ? विरोधात् । कथं विरोधः ? श्रूयते हि ' त्रिधातु पञ्चधातु वा वेदिं स्तृणाति ' इति । तच्चेनाऽऽस्तीर्यते, कथं तद्विधृतिपवित्रं क्रियेत । न हि संभवत्येकं स्तरणाय विधृतिपवित्राय च । तदेतदुपदिष्टवचनमनेकगुणत्वं चोभे अप्यसंभाविनी प्रतिज्ञाते स्याताम् । तस्माच्च ततः क्रियेतेति । यदि न ततः, कुतस्तर्हि । अन्यत्त एवंजातीयकः शेषे । अस्ति तत्र परिभोजनीयं नाम बर्हिः, ततः कर्तव्यम् ।

वा—— इदानीं प्रकृतान्यपि नातीव सर्वार्थतेत्येतत्साधयति । यथा लूनस्य बर्हिषस्त्रिधातु पञ्चधातु वेति सकलस्य स्तरणविधानात् अशक्योऽन्यविनियोग इति सामान्यभूतो विधृतिपवित्रार्थो दर्भविधिरन्यो द्रष्टव्यः । धातुरिति स्तरणचयोऽभिधीयते ।

शा—— इदानीं प्रकृतावपि नातीव सर्वार्थता इत्युच्यते । दर्शपूर्णमासयोर्विधृत्यर्थं पवित्रार्थं च यत् बर्हिः तदपि धर्मवत् स्यात् अविशेषादिति प्राप्ते, ब्रूमः । धर्मवतः कृत्स्नस्य बर्हिषो यथा लूनस्य सन्नद्धस्य आसादितस्य आस्तरणे विनियोगात् नान्यत्र विनियोगः संभवतीति बलादसंस्कृतादेव पवित्रादि कार्यम् ।

सोम——सूत्रार्थस्तु– त्रिधातु श्रुतिविरोधात् इति संस्कृतस्य स्तरणादन्यत्र विनियोगे विरोधे सति शेषे विधृत्यादिकार्ये अन्यतो धर्मरहितः परिभोजनीयः स्यादिति ।

वि—— ' यद्बर्हिस्तत्पवित्रार्थं न वाऽऽवसलभ्य सम्भवात् । संस्कृतं स्तरणे क्षीणं पवित्रं त्वन्यतो भवेत् ॥ '

भाट्ट—— प्रकृतावपि न समन्त्रकबर्हिर्लवनादिधर्माणां प्रकृत्यपूर्वसंबन्धिबर्हिर्मात्रार्थत्वम्, अपि तु हविरासादनार्थबर्हिरर्थत्वमेव । अत एव पवित्रविधृत्यादिबर्हिषि नैते संस्काराः । ' त्रिधातु पञ्चधातु वा बर्हिर्लुनाति ' इति विहितलवनसंस्कृतस्य बर्हिषः तथैव सन्नद्धस्यासादितस्य ' त्रिधातु पञ्चधातु वा बर्हिः स्तृणाति ' इति वचनेन सर्वस्यैव स्तरणे विनियोगात् । अमन्त्रकलवनमात्रसंस्कृतस्य परिभोजनीयबर्हिषः प्राकृततदितरसर्वकार्यार्थत्वेन तत एव पवित्रादिकरणोपपत्तेः ।

मण्डन—— ' नोपात्तदर्भौ विधृती पवित्रे । '

शंकर—— ' पवित्रविधृती तद्वत् । ' (तद्वत्– यूपावटबर्हिवत् ) ।

* विधेयम् । ' तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ' । श्लोवा. अनुमानं ११०.

¶ विधेयं स्तूयते वस्त्विति न्यायः । अयं न्यायः तत्तद्विग्रहावच्छिन्नेशध्यानादिस्तुतये तदन्यविग्रहावच्छिन्नेशापकर्षवर्णनविषये अवतरतीति । साहस्री. ७८६.

* न च यत् प्राक् वचनाद् गम्यते, तद् विधेयं भवति । भा. ६।१।५।२३. * यद्यदुपादीयते तत्तत् विधेयं इति तन्त्रव्यवहारः (तन्त्रे व्यवहारः) । बृहती. पृ. ३०. * यद्विधेयमवधार्यते तदेव स्तोतव्यम् । वा. ३।४।११।२०, * विधेयस्य कर्मणः पापफलदत्वासम्भवः । ३।४।१०।२८ पृ. ९५८.

* विधेयान्वयः । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयः शब्दस्वभावसिद्धः । भाट्ट. १०।८।१.

* विधेयार्थभेदे वाक्यभेदो भवति । ' ग्रहं समार्ष्टि ' अत्र ग्रहस्य एकत्वस्य च विधेयत्वे ' ग्रहं संमृज्यात्, तं चैकम् ' इति वाक्यभेदप्रसङ्गः । वि. ३।१।७.

* विधेयगता संख्या विवक्षिता भवति । यथा– ' यजेत ' इति । अत्र विधेयकर्तृगता एकत्वसंख्या विवक्षिता । एकं यागं द्वौ न कर्तुं शक्नुतः । वि. ६।२।२.

* विधेयतद्विशेषणव्यतिरिक्तप्रशंसाद्वारा विधेयप्रशंसार्थः कश्चित् अर्थवादः यथा– ' अभिघार्याश्चैव ग्रहाः नाभिघार्या इति यदभिघारयेत् तद्रुद्रायास्ये पशून्निदध्यात्, यन्नाभिघारयेत् न तद्रुद्रायास्ये पशून् निदध्यात्, तन्न मुख्यं अभिघार्या एव न ह्यनभिघृतं हविरस्ति ' इति । बाल. पृ. ५२.

* विनियोगः ' गायत्र्यच्छन्दसः ' इत्यादेर्मन्त्रस्य नानाच्छन्दस्के । ३।२।१८।४२-४३. मीको. पृ. १७२७ ' छन्दोऽधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः तादर्थ्येनोपनम् । सु पृ. ११९३. * विनियोगस्तु सामर्थ्यानुसारीति । वा. ३।३।७।१४ पृ. ८२९. * विनियोगः प्रकरणेन । ३।३।८।११. मीको. पृ. २६६४ ' प्रकरणाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः प्रवृत्तिजनकीभूतज्ञानविषयीभूतधर्मरूप. काम्यनैमित्तिकोभयसाधारण एव । भाट्ट. ६।३।१. * विनियोगः मन्त्रानुवाकस्य यथालिङ्ग ग्रहणादौ ज्योतिष्टोमे । वि. ३।२।९. * विनियोगः मनोतामन्त्रस्य गौणेऽर्थे । भाट्ट. ३।२।१. * विनियोगः मन्त्राणां मुख्येऽर्थे । ३।२।१।१-२. मीको. पृ. २९१३ ' बर्हिर्न्याय. ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः लवनमन्त्रस्य मुख्ये बर्हिषि एव । भा. ३।२।१।१-२. * विनियोगः श्रुत्या । को ३।१।४।७-१०. * विनियोगः समाख्यया । ३।३।६।१३. ' समाख्योऽधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः सूक्तवाकस्य अर्थानुसारेण दर्शपूर्णमासयोः । भाट्ट. ३।२।६. * विनियोगः सूक्तवाकनिवेदाख्यस्य दर्शपूर्णमासयोः वाक्यस्य प्रकरणात् प्राबल्येन । भा. ३।३।७।१४ पृ. ८५३. * विनियोगः स्थानेन । ( स्थानमिति क्रमस्यैव नामान्तरम् ) । ३।३।५।१२. मीको. पृ. १५०९ ' क्रमाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * विनियोगः ' इन्द्राग्नी ' इति आह्वानमन्त्रस्य आह्वाने दर्शपूर्णमासयो. । ३।२।३।५-९. मीको. पृ. १०२२ ' आह्वानाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * ' उत्पत्तिविनियोगयोः विनियोगो बलवान् ' इति न्यायसूत्र ( ३।३।२।९ ) इत्यधिकरणम् । वा. ३।३।२।९ पृ. ८३८. * यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः पदार्थाः प्रयोगविधिना विधीयन्ते तथा श्रुत्यर्थादिभिर्विनियुक्तत्वात् क्रमोऽपि प्रयोगविधिना विधीयते । न च शक्यैः श्रुतिलिङ्गादिभिरेव क्रमस्य विनियोगनियमः । अविषयत्वात् पदार्थविनियोगमात्रनियामकत्वेन क्रमस्य पाठादिश्रुत्यर्थादिभिः विनियोगेऽप्यविरो-धात्, यथाक्रममेतेषामपि तार्तीयिकान्तर्भावस्य वक्तुं शक्यत्वाच्चेति भावः । सोम. ५।१।१.

* विनियोगानुसारेण मन्त्रार्थः । ' यथाविनियोगं मन्त्रार्थान् मन्त्रविदो वर्णयन्ति ' । बृहती. पृ. २७०. ( विनियोगवशेन च अनेकार्थः अस्मात् प्रत्येतव्यः इति अतो भवति अनेकार्थः मन्त्रः । ऋजु. )

* विनियोगकारणानि श्रुतिः लिङ्गं वाक्यमिति उक्तानि । भा. ३।३।४।११. * विनियोगकारणानि श्रुतिः लिङ्गं वाक्यं प्रकरणं स्थानं समाख्यानं इति उक्तानि । तेषां समवाये किं बलीय इति चिन्त्यते । ३।३।७।१४ पृ. ८२२.

* विनियोगविधिः । अङ्गताबोधको विधिः विनियोगविधिः । यथा ' दध्ना जुहोति ' इति । नियमपरिसंख्याविधी प्रायेण विनियोगविधयावेव । मणि. पृ. ९९. * विनियोगविधिः अनुष्ठापकाद्यान्युत्पत्तिविधिस्तु अतथाविधत्वात् गुणः । वि. ३।४।२. * विनियोगविधिः द्विविध.— क्रत्वर्थः पुरुषार्थश्च । तत्र क्रत्वर्थः यथा ' व्रीहीन् प्रोक्षति ' इत्यादिः । पुरुषार्थः यथा— द्रव्यार्जनविधिः । बाल. पृ. १३. * अङ्गप्रधानसम्बन्धबोधको विधिः विनियोगविधिः । यथा ' दध्ना जुहोति ' इति । अत्र होमः प्रधानं दधि अङ्गम्, तयोः सम्बन्धः अनेन विधिना बोध्यते । मीन्या. * इष्टसाधनत्वबोधको विधिः विनियोगविधि । भाट्ट. ११।२।१ पृ. १५१. * विनियोगाभिधानात्मिका श्रुतिः विनियोगविधिः । वा. ३।३।४।११ पृ. ८१७.

* विनियोगविधिसहकारीणि षट् प्रमाणानि । श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि । मीन्या.

* विनियोगविधिसिद्धिः । लिङादयः खलु विधौ समर्थन्ते, विधि. प्रवृत्तिप्रयोजकव्यापारः । तत्र ते धातोः परे श्रूयमाणाः स्वार्थस्य भावनायाः कर्मीभूतं भाव्यमुपनयन्ति । धात्वर्थस्य भावनाऽनुरञ्जनस्य समीहितार्थप्रवृत्तभावनाभाव्यस्य समीहितसाधनत्वं समीहितभावनासाधनत्वं वा तद्रूपस्य तस्य स्वतो-

ऽलाभात् श्रुत्यैवाभिदधाति इति विनियोगार्थत्वम् । फलवद्वाक्योपात्तत्वेन हि तादर्थ्यप्रतिपादनम् । कणिका पृ २७७

* विनियोगवेदधर्म कर्तव्य न उत्पत्तिवेदधर्म । वा ३।१।२।९ पृ ८१४.

* विनियोगश्रुत्या अङ्गप्रधानपरिच्छेदात् अन्यत्र विधयार्थत्वमनुवादत्वम् । सु पृ १००

* विनियोगसाधारण्यविधिर्यथा- 'यदाहितव्याया बर्हिरनुपसद्य तदग्नीषोमीयस्य' इति । यथा वा बर्हिष बर्हिषमाणा च, वेद्या वेदिधर्माणा च विधि अङ्ग प्रधानसाधारण । बाल पृ २०

* विनियोगसामर्थ्यात्मक लिङ्गम् । वा ३।३। ४।११

* कारकविभक्तिश्रुतेरेव विनियोगहेतुत्वम् । सु पृ १२०९

* विनियोजकानि प्रमाणानि षट् (प्रमाण शब्द वैदिकोपदेशपर) — श्रुतिर्लिङ्ग वाक्य प्रकरण क्रम समाख्या चेति तानीमानि । बाल पृ ८

* श्रुत्यादिभेद तादर्थ्यप्रतिपादनरूपेण शेषस्य विनियोजकानि इति तद्विवेकार्थं शेषलक्षणम् । वा ३।१।२।२ पृ ६७८, * अगत्या हि तेनैवोत्पत्ति तेनैव च विनियोग क्रियते ('पशुमालभेत यजेत्' इत्यत्र अपेक्षया) । सत्या तु गतौ विनियोजकस्य उत्पत्तिविध्यर्थापत्त्युपपत्तेः अन्येनैवोत्पत्तिताना च विधिविनियोगाना विनियोगसामर्थ्यमात्रमेव ज्ञायते । १।३।११।२६ पृ ६१०

* विनियोजकत्व अधिकारलक्षणस्य प्रकरणस्य, आनन्तर्यलक्षणस्य क्रमस्य, रूढिशब्दलक्षणायाश्च समाख्याया नाभ्युपगम्यते । सु पृ ११९३, * विनियोगत्व, पदसन्निधौ वाक्यसन्निधौ शब्दसन्निधि संनिधौ योगिकशब्दे च अवसीयते । पृ ११०३

* विनियोजकवेदस्वर उत्पादकवेदस्वरात् बलवान् । आधाने गेयानि सामानि सामवेदे उत्पन्नानि, सामवेदस्य स्वर उच्चैस्त्वम् । तेषा साम्ना विनियोगस्तु यजुर्वेदेन कृत । यजुर्वेदस्य स्वरस्तु उपांशुत्वम् । (अत) आधाने गेयानि सामानि उपांशु गेयानि । वि ३।३।१

**विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् । ६।५।८।१८ ॥**

दर्शयागकाल सत्या दर्शेष्टिरारब्धा । निर्वापे प्रवृत्ते मुष्टिद्वय निरुप्त प्राकृतदेवतायै । एतावति काले अभ्युदितश्चन्द्रो दृष्ट । तथा सति किं कर्तव्यमिति विचार । तत्राह । विनिरुप्ते अर्धनिरुप्ते चतुर्मुष्टिमध्ये मुष्टिद्वये निरुप्ते, चन्द्रोदये ज्ञातेऽपि मुष्टीना चतुर्मुष्टीना पूर्वदेवताया सकाशात् अपनय न कर्तव्य । मुष्टिद्वय यथा पूर्वदेवता उद्दिश्य निरुप्त तथा अवशिष्टमुष्टिद्वयमपि पूर्वदेवता उद्दिश्यैव निरुप्तव्यम् । तद्गुणत्वात् निर्वापगुणत्वात् देवतानाम् । निर्वापस्य च चतुर्मुष्टयात्मकस्य एकत्वात् । तस्मात् अर्धनिर्वापोत्तर चन्द्रोदयज्ञानेऽपि चतुर्मुष्ट्यात्मको निर्वाप प्राकृतीभ्यो देवताभ्य स्यात् इति पूर्व पक्ष ।

**अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् । १९॥**

दर्शयागकाल सत्या दर्शेष्टिरारब्धा । निर्वापे प्रवृत्ते मुष्टिद्वय निरुप्त प्राकृतदेवतायै । एतावति च काले चन्द्र उदितो दृष्ट । तथा सति अवशिष्टस्य मुष्टिद्वयस्य अप्राकृतेन प्राकृतभिन्नेन वैकृतेन देवताविशेषेण अभिनवा संयोग कर्तव्य । प्रथम मुष्टिद्वय 'अग्नये जुष्ट निर्वपामि' इति निरुप्तम्, उत्तर मुष्टिद्वय तु 'अग्नये दात्रे जुष्ट निर्वपामि' इति निर्वप्तव्यम् । तत्स्थानीयत्वात् वैकृतदेवताना प्राकृतदेवतास्थानीयत्वात् । तस्मात् निर्वापशेष वैकृतीना संयोगेन कर्तव्य । इति द्वितीय पूर्वपक्ष । हिशब्द अवधारणार्थं सन् पक्षान्तर सूचयति ।

**अभावाद्वेतरस्य स्यात् । २० ॥**

दर्शयागकाल सत्या दर्शेष्टिरारब्धा । निर्वापे प्रवृत्ते मुष्टिद्वय अग्नये प्राकृतदेवतायै निरुप्तम् । एतावति काले अभ्युदितश्चन्द्रो दृष्ट । तथा सति अवशिष्ट मुष्टिद्वय तूष्णीमेव निर्वप्तव्य स्यात् । इतरस्य अवशिष्टस्य निर्वापस्य देवतासंयुक्तस्य अभावात् । इदानीं न प्राकृत देवतामुद्दिश्य निर्वप्तु शक्यते न वैकृती इति तूष्णी

चेत्तत्र भवेदुभयबाधनम् ॥ एवमप्रतिपत्त्यैव तुल्यैषा मिश्रतामति । तेनोभयाप्रमाणत्वात्पुत्तिके- वाप्रमाणता ॥ सेयमत्यन्तमन्याय्या द्वयोरप्यनव- स्थिति । अव्यवस्था न युक्ता हि व्यवस्था यत्र लभ्यते ॥' सर्वत्रैव ह्येकरूपत्वावधारणेन निरु पितरूप व्यवहर्तु शक्यम् । ' तेन यस्य प्रमाणत्व प्रमाण सर्वदाऽस्तु तत् । यस्यापि त्वप्रमाणत्वम प्रमाण तदुच्यताम् ॥' तदेव तु कदाचित्प्रमाण कदाचिदप्रमाणमिति न कथचिदपि विश्रम्भ स्यात् तदेतद्व्रीहियवश्रुत्योरत्यन्तापरिहार्यत्वादवश्यमापतितम् । ' न हि तत्रैकरूपत्वे चिह्न किंचिद्व्यवस्थितम् । येनैकत्र प्रमाणत्व स्यादन्यत्राप्रमाणता ॥ श्रुति- स्मृत्यो पुन स्पष्ट व्यवस्थाकारणद्वयम् । येन श्रुते प्रमाणत्व स्यात्स्मृतेश्चाप्रमाणता ॥ स्वरूपेण तयोस्तावत्प्रमाणत्वाप्रमाणते । ततोऽन्यापेक्षया स्यातामप्रामाण्यप्रमाणते ॥' यो यस्य स्वरूपाश्रयो धर्म प्राप्त स बलवता कारणान्तरेण विपर्यय प्रति पद्यते । न च श्रुतिजनितप्रत्ययस्य स्मृतिजनितो बाध कस्य प्रतिपद्यते । ' स्मार्तस्य बाधक श्रौतो बलव स्यात्प्रतीयते । प्रत्यक्षे चानुमाने च प्रागेतद्व्यव धारितम् ॥ श्रुतिलिङ्गे यथा चेष्टे व्यवस्थितबला बले । सन्निकृष्टविकृष्टार्थे तथैवेह श्रुतिस्मृती ॥ स्मृत्या प्रतीयते यावत् श्रुत्या तावत्प्रमीयते । विरुद्धधर्मतामेको न च धर्म प्रतीच्छति ॥ न च शीघ्रहतेऽर्थेऽस्ति चिरादागच्छतो गति । अश्वेर पहृत को हि गर्दभै प्राप्तुमर्हति ॥ स्मृत्या चार्थं परामृश्य यावत्तद्विषया श्रुतिम् । अनुमातु प्रवर्तेत तावत्सोऽर्थोऽन्यतो गत ॥ किं कर्तव्यमितीद च कर्ता यावदपेक्षते । प्रमाण लभते तावत्प्रमिते तत्र जायते ॥ युगपत्प्रमिमीयाता यदि चार्थं श्रुतिस्मृती । अगृहीतविशेषत्वात्स्याता तुल्यबले तत ॥ यद्वा यावच्छ्रुतेरर्थ साक्षादेव प्रतीयते । तस्मिन्नेव क्षणे मूल कल्पयेत्स्मृति श्रुतिम् ॥ ततोऽर्थविप्रकर्षेऽपि प्रमाणत्वेन तुल्यता । भवे- देव श्रुतिस्मृत्योरर्थ श्रुतिपरिग्रहात् ॥ यत

स्मृत्या गृहीतेऽपि चिरेण श्रुतिकल्पना । जायते कल्प्तया तस्मात्सा बाध्येताप्रतिष्ठिता ॥ स्मृति मूलानपेक्षा हि स्मृतित्वादेव हीयते । तदपेक्षा पुन श्रुत्या बाध्यते मूलवर्जिता ॥ ' एव तावद् द्विकल्पपदमनारूढाया एव स्मृतेरयो बाधप्रकार । ' द्वितीयेन प्रकारेण विकल्पपदवीं गता । आपन्ना पाक्षिक बाधमत्यन्तं बाध्यते स्मृति ॥ ' तदर्थ पाक्षिक बाधमत्यन्तं बाध्यते स्मृति ॥ ' तदर्थं यति । विकल्प तु वदन्पक्षे तावत् श्रुतिप्रामाण्यमभ्यु पैतीति । तदा च स्मृत्यप्रामाण्यमवश्यभावि तस्याश्च प्रामाण्यकल्पनाया न श्रुतेरिव तदध्यारोप । ' किं तु तस्या प्रमाणत्व श्रुतिमूलत्वकारितम् । यतस्त स्मादतन्मूला तदानीं साऽवधार्यते ॥' श्रुतिमूलत्व- विच्छेदोत्तरकाल च प्राङ्निराकृतमूला तदोपलम्भादविगान स्मृतपुरुषप्रणीतत्वनिर्णयाच्च नित्यत्वद्वारनिर्मूलत्वासभवा- दवश्यभावि विप्रलम्भाभिप्रायादि किंचिदेक मूलमाप द्यते । ' श्रुति मुक्त्वा च यन्मूल स्मृतेरन्यत्प्रक- ल्प्यते । तेनैवास्या प्रमाणत्वमत्यन्त प्रतिहन्यते ॥' व्रीहिश्रुतिपरिग्रहकाले हि यवश्रुतेरभूतमेवाप्रामाण्यमध्या- रोपितम् । तत्प्रयोगान्तरवेलाया तुल्यसाम्प्रदायिकाम्नाय मानत्वेन सन्निकृष्टविप्रकृष्टार्थत्वादिविशेषाभावेन च पुन सहजेन प्रामाण्येनाभिभूयते । ' न तु स्मृते प्रमाणत्व विच्छिन्नश्रुतिमूलत्वात्पुनरस्त पुनरुज्जीवितु क्षमम् । भ्रान्त्यादिहेतुभि ॥ ' न हि एकस्या एव स्मृते प्रत्यक्षश्रुत्यर्थापरिग्रहकाले अनुमितश्रुतिमूलत्व तत्परि- ग्रहाश्रयणे तु भ्रान्त्यादिमूलत्वमिति विरुद्धावधारणाऽव कल्पते । आह । सत्य यदि प्रथममेव विकल्पकारी श्रुत्यर्थं परिगृह्य द्वितीयादिप्रयोगे स्मृत्यर्थपरिग्रहणायोप- तिष्ठेत । ' ततस्तदुक्तमार्गेण प्रतिहन्येत सर्वदा । न त्वेतस्य प्रसङ्गोऽस्ति स्मृते पूर्वपरिग्रहे ॥ ' यो हि श्रुति प्रथममश्रुत्वा श्रुतिमेवैका पश्यति तस्या- प्रतिहतश्रुत्यनुमाने वृत्त । ' न पश्चात् श्रूयमाणाऽपि श्रुति स्यात्प्रतिबन्धिका । गर्दभेनापनीतं हि दूरेऽप्यश्वैरनादृत ॥ ' न चैष नियमोऽस्ति जिज्ञासुभि स्मृतिविरुद्धा श्रुतिरेव प्रथम श्रोतव्येति । ' बहुजिज्ञाससमानाना कदाचित्किंचिदापतेत् ।

पूर्वपश्चाद्विभागेन न तद्वैलुबलाबलम् ॥ आद्ये प्रपाठके येन व्रीहिशास्त्रं प्रतीयते । द्वितीये यवशास्त्रं च न तत्प्रति दुर्बलम् ॥ स्वशाखाविहितैश्चापि शाखान्तरगतान्विधीन् । कल्पकारा निबध्नन्ति सर्व एव विकल्पितान् ॥ सर्वशाखोपसंहारो जैमिनेश्चापि संमतः । न तु पूर्वावबुद्धोऽर्थो बाधेतैवोत्तरं विधिम् ॥ ' तस्मात्पौर्वापर्यश्रवण मनाश्रित्य ' न चैकं प्रति शिष्यते ' इत्यनेन न्यायेन सर्वपुरुषान् प्रति नित्यावस्थितसमस्तपठ्यमानस्मर्यमाणवेदशाखावयवज्ञानैर्जिज्ञासुभिः आत्मीयशक्तिमात्रकारित पूर्वापरग्रहणविभागैरेकवाक्यगतपूर्वोत्तरवर्णपदवत् बलाबलमनपेक्ष्य मातापितृप्रणीतोपदेशवन्निर्विचिकित्समेव प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा हि— ' पूर्वप्राप्तौ प्रमाणत्वं परत्वेनाप्रमाणताम् । प्रसज्यमानिकामेवं कोऽध्यवस्येत्सचेतनः ॥ इत्थं च भ्रान्तिमूलत्वप्रसङ्गे कल्पिते स्मृतेः । अविरोधेऽपि हि श्रुत्या प्रामाण्यं दुर्लभं भवेत् ॥ सर्वैव श्रुतिमूलाऽतः सर्वा या भ्रान्तिमूलिका । स्मृतिरेवं निरूप्येत न तु स्यान्मूलसंकरः ॥ ' उच्यते । यद्यपि पूर्वोपलब्धया स्मृत्या श्रुतिमनुपलभमानस्य प्रतिबन्धरहितश्रुत्यनुमानं क्रियेत तथाऽपि कालान्तरे श्रुतिं श्रुत्वा तत्प्रतिपक्षस्मृतेः बाधाध्यवसानादवश्यंभाविश्रुतिमूलत्वविच्छेदवशेन मूलान्तरसंचरणम् । ' ततश्च पूर्वविज्ञानं मिथ्यैतदिति चिन्तयन् । आदावेवाप्रमाणत्वं स्मृतेरित्यध्यवस्यति ॥ ' यो हि कूटकार्षापणेन कंचित्कालमज्ञो लोकमध्ये व्यवहरति न तेन विवेकज्ञानजनितव्युत्पत्तिनाऽपि तथैव व्यवहर्तव्यम् । न चास्य तदानीन्तनज्ञानमात्रबाधबुद्धिर्भवति । ' समानविषयत्वाद्धि पूर्वेषामपि बाधनम् । न हि तेषाममिथ्यात्वे मिथ्येदानीन्तनं भवेत् ॥ ननु च प्रागवस्थायां श्रुतिर्येनानुमीयते । सैवेदानीं विरुद्धेति गम्यते न पुनः स्मृतिः ॥ ' नैतदेवम् । प्रतिप्रयोगं प्रमाणपर्यालोचनात् । यदि ह्येक प्रयोगमात्रालोचनेनैव प्रयोगान्तराण्यप्यनुतिष्ठेयुस्ततो येन व्रीहिशास्त्रमप्रमाणीकृत्य यवाः परिगृह्येरन् स यावज्जीवं तैरेव यजेतेति नैव प्रतिपुरुषमुभाभ्यां विकल्पमानाभ्यां व्यवहारः सिध्येत् । तेन यावत्प्रयोगभाविप्रमाणालोचनवशात्पूर्वानुमितां श्रुतिं कश्चिदप्यशृण्वन् पुनरपि स्मृतिमेवोपलभ्य कर्तृसामान्यलिङ्गेनैव श्रुतिमनुमिमानः प्रत्यक्षया श्रुत्या आक्षिप्तचित्ततया तत्प्रामाण्येनान्यथानुपपद्यमानेन स्मृत्यप्रामाण्यं कल्पयन्पूर्वावधारितमूलप्रत्ययमेव प्रतिपद्यते न पूर्वकल्पितमूलस्याप्रामाण्याध्यारोपम् । अपठ्यमानतयैवास्य सुलभावज्ञानत्वात् । ' यच्चैतदनवस्थानं त्वया मां प्रति चोद्यते । भवतोऽपि तदस्त्येव तेनाचोद्यत्वमेवं तत् ॥ यदा ह्यादौ श्रुतिं श्रुत्वा स्मृतेर्नान्याऽनुमीयते । तदाऽन्यमूलतापत्तेरेकान्तेनैव बाध्यते ॥ कालान्तरेऽपि यो बाधः स्फुटत्वेनावधार्यते । यत्नेनाप्यप्रमाणत्वं कृतं तन्न निवर्त्यते ॥' पूर्वस्मृतिग्राहिणा च स्वयं प्रथमचेतयमानानामपि पुरुषान्तरस्य श्रुतिश्रवणप्राथम्यबलेन बाधस्तावतोऽनुवर्तते एव । ' पुरुषान्तरबाधोऽपि नैवाल्पं भ्रान्तिकारणम् । न हि द्विचन्द्रदिङ्मोहौ न बाध्येते नरान्तरैः ॥ ' ननु परश्रुतेरपि तर्हि प्रमाणत्वेन परिगृह्यमाणायाः पुरुषान्तरबाधस्तदानीमस्तीति मिथ्यात्वप्रसङ्गः । ' उच्यते पठ्यमानत्वादुन्मज्जननिमज्जने । सर्वान् प्रति तयोस्तुल्ये विशेषोऽन्यो न गृह्यते ॥ स्मृतिस्तु यावतां पुंसां प्रथमं गोचरीभवेत् । तावता सर्वदाऽभावान्नाप्रामाण्येन मुच्यते ॥ अप्रामाण्यपदं चैकमस्त्येवं प्रथमं स्मृतेः । तावता लब्धमिथ्यात्वान्न श्रुतिं बाधितुं क्षमा ॥ अध्यारोप्येत मिथ्यात्वमुज्ज्वलायाः श्रुतेः पुनः । लब्धमेव स्मृतौ तच्चेत्किमर्थं कल्प्यते श्रुतेः ॥ ' विरुद्धयोर्हि श्रुतिस्मृत्योर्विकल्पप्रसङ्गेनावश्यकल्पनीयेऽन्यतरस्याप्रमाणत्वे यावच्छ्रुतौ पटाच्छादनन्यायेन कल्पयितुमारभ्यते तावत्स्मृतौ स्वरूपाश्रयं कल्पितमेवोपलभ्य संशयच्छेदे जाते न कदाचिदप्यभूताप्रामाण्याध्यारोपकल्पनोपपत्तिः । ' ननु श्रुत्यविरुद्धाया श्रुतिमूलत्वनिश्चयः । अनुमानादपि प्राप्स्यन् केनचित्प्रतिबध्यते ॥ तस्मात्कारणवैषम्यान्नोभयत्रैकरूपता । सिध्येन्मूलव्यवस्था हि प्रतिपक्षानुसारिणी ॥ '

भ्रान्त्यादिमूलत्वमापादयति । तादृशा च सकृदपि श्रौतं विज्ञानमनुज्ञातमध्यारोप्यमाणव्यामोहाविषयत्वाच्च कदाचिदप्रामाण्यं त्यजतीत्यपाक्षिकस्याभिधानम् । एवं केवलाप्रमाणतरपक्षग्रहस्तस्य पुनरुज्जीवनासंभवादपाक्षिकं च सर्वथेतरस्मरणमित्याह– पाक्षिकं चेति वा । विकल्पवादिमतमपाक्षिकत्ववादेन श्रुतिप्रामाण्यपक्षे स्मार्तश्रुतिकल्पनायामकृतायां मूलान्तरसंक्रान्तेः सर्वकालाप्रमाणतरप्रसङ्गः । एकदाऽपि च लब्धप्रामाण्यावकाशा श्रुतिर्दुर्बलप्रतिपक्षतया न कदाचिदपि व्यामोही भविष्यतीति समर्थयमानः ' यदैव हि तस्यैकस्मिन् पक्षे मूलम् ' इत्याह । ' नहि प्रमाणपाठत्वं शक्यं कल्पयितुं श्रुतेः । दुःश्रुतत्वप्रविज्ञानमूला त्वापद्यते स्मृतिः ॥'

' तेन नैतत्पक्षे विज्ञानम् ' इति प्रमाणविज्ञानमभिप्रेत्योक्तम् । 'व्यामोहात्पक्षान्तरम्' इति । व्यामोहकल्पनातः प्रमाणाभावपक्षान्तरसंक्रमणं प्रतिषेधति । यद्वा स्मार्तज्ञानमेव दुर्विचारितव्यामोहात् प्रामाण्यपक्षान्तरं न संक्रान्तमिति । दुःश्रुतत्वादिमूलत्वेन श्रुतिविरोधं दर्शयति– ' तुल्यकारणत्वात् ' इति । बलीयः प्रतिपक्षनिराकरणत्वसमर्थदैव श्रुत्यनुमानप्रतिरूपात् न स्मृतेः प्रामाण्यपक्षसंक्रान्तिः । ' अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात् ' इति । उपरिष्टादितरेतरविरोधविवरणाद्विरोधमेवेतरेतराश्रयमाह–'परस्परविरुद्धे हि विरुद्धाव्यभिचारिवत् । प्रमाणे यत्र दृश्येते तत्रान्येनैव निर्णयः ॥ ' प्रमाणशब्दस्य ज्ञानसमानाधिकरणत्वेन मानोपमस्युडन्तत्वेन वा नपुंसकलिङ्गत्वात् वेदाः प्रमाणं स्मृतयः प्रमाणमितिवत् प्रमाणे स्मृती स्पर्शनं व्यामोह इति भवितव्यम् । करणविशेषविवक्षया वा अभिधेयलिङ्गवचनानुवृत्तौ ल्युडन्तात् ङीबिति ङीपि प्राप्ते प्रामाण्यं स्मृताविति प्रयोक्तव्यम् । तमिममुभयभ्रष्टं भाष्यकारप्रयोगं समर्थयमानैः एवमनुगमः कृतः । ' प्रमाणमयते याति मूलभूतां श्रुतिं यतः । क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यते ॥ तत्र यद्यपि नित्यत्वात्क्विल्लोपः प्रथमं भवेत् । यल्लोपोऽपि भवेदेव वलादिप्रत्ययाश्रयः ॥ न च वर्णाश्रयत्वेन यल्लोपो न भविष्यति । व्योर्वलीति यल्लोपो हि वलादिप्रत्ययाश्रयः ॥ यद्वा योगविभागेन वेर्यवस्य च लुप्यते । वकारश्च यकारश्चेत्येवं लोपो भविष्यति ॥ यल्लोपे च कृतेऽकारो यः शुद्धः परिशिष्यते । तदन्तावधिकारपश्चात्तटाप्क्रियते स्त्रियाम् ॥ अकः सवर्णे दीर्घत्वं परयोरन्तरङ्गतः । सर्वेणापि ततः कृत्वा प्रमाणेत्यनुगम्यते ॥ ' तदेतदितराश्रयं भवतीत्युक्तम् । ' यद्वा श्रुत्यप्रमाणत्वात्स्मृतेः प्रामाण्यमिष्यते । सिद्धाच्च तत्प्रमाणत्वात् श्रुत्यप्रामाण्यकल्पना ॥ तथा श्रुतिप्रमाणत्वात्स्मृत्यप्रामाण्यकल्पनम् । तदप्रामाण्यसिद्ध्या च श्रुतिप्रामाण्यनिश्चयः ॥' तदिदं विकल्पवादिन उभयनेतरेतराश्रयप्रसङ्गैकान्त्यवादिनस्त्वन्यतरत्र । ' तत्रान्यतः परिच्छेदाद्वाच्यं हेत्वन्तरं स्फुटम् । भाष्यकारस्त्विहोक्त्यैवं तयोरेकैकमुक्तवान् ॥ ' ' तत्र स्पर्शनस्य बलवं मूलं कल्प्यं स्मृतेः ' इति । नैयायिकन्तापक्षनहेतुत्वाभिप्रायेणान्यतः परिच्छेदोऽभिहितः । प्रकृतयोरपि च यत्कृतमितरेतराश्रयत्वं तद्व्यतिरिक्तधर्मदर्शनाभिधीयमाने भवत्येवान्यतः परिच्छेदः । ' स्वतः स्थितात्प्रमाणत्वात् श्रुतेः स्यात् कल्पमूलता । ' स्मृतेः श्रुत्यनुमापकप्रामाण्यात्कल्प्यमूलता ततश्च प्रत्यक्षश्रुत्यप्रामाण्यकल्पनायत्त स्मृतेः प्रामाण्यं तद्बलेन च श्रुत्यप्रामाण्यं कल्पयत इतरेतराश्रयत्वमपरिहार्यम् । ' न चाध्यारोप्यमाणाऽपि श्रुतेः स्यादप्रमाणता । न च तस्यामसिद्धायां स्मृतिप्रामाण्यसंभवः ॥ यद्वदन्त्यं पराजित्य यः प्रविष्टातुमिच्छति । हस्तिना पादयोर्धीव संतिष्ठेताचिरादसौ ॥ ' एवं तावत्स्मृतिप्रामाण्यं कल्पयन्नेव तद्वादी पराजीयते । यदा तु श्रुतिप्रामाण्यगतमितरेतराश्रयत्वमालोच्यते तदा तत्रापि प्रतिपक्षभूतस्मृत्यप्रामाण्यापेक्षया निरपवादप्रामाण्यावधारणसिद्धेः पराधीनत्वात् पूर्वसिद्धश्रुत्यप्रामाण्यलिप्सायाम् ' सिद्धमेवाप्रमाणत्वं स्वरूपाश्रयमादितः । क्षणमात्रमपि प्राप्य श्रुतिः प्रामाण्यमश्नुते ॥ ' तेन यत्तदाद्ये पदे अननुमितावस्थाया श्रुतायामपातक्षणमात्रे स्मृतेः अप्रामाण्यं दृश्यते तावतैव लब्धप्रमाणभावा श्रुतिः सर्वदा

ख्यातम् । 'ततश्च श्रुतिमूलत्वाद्भाष्योदाहरणं न तन् । विकल्प एव हि न्याय्यस्तुल्यकक्षप्रमाणतः ॥ विरुद्धत्वे च बाधः स्यान्न चेहास्ति विरुद्धता । न हि वेष्टनमात्रं नः स्पर्शश्रुत्या विरुध्यते ॥ यदि द्व्यङ्गुलं मध्ये विमुच्योत्तरभागतः । वेष्टयेतौदुम्बरी तत्र किं नाम न कृतं भवेत् ॥ सर्वा वेष्टयितव्येति न ह्येवं सूत्रकृद्वचः । न ह्यस्याः क्रियते कैश्चित्कर्णमूलेषु वेष्टनम् ॥ परिशब्दोऽपि यस्तत्र सर्वतो वेष्टनं वदेत् । तद्वर्जितसमन्तत्वे सोऽर्थवानेव जायते ॥ लोभमूलं च यत्तस्याः कल्प्यते सर्ववेष्टनम् । सल्लोभः सुतरां सिध्येन्मूलाग्रपरिधानयोः ॥ अन्तरीयोत्तरीये हि योषितामिव वाससी । स्मरेत्कौशेयजातीये नोद्भातैकं गुणैर्विना ॥ प्राक् च लोभादिह स्पर्शः कुशैरेवान्तरीयते । वेष्टितैषा कुशैः पूर्वं वाससा परिवेष्टयते ॥ कुशवेष्टनवाक्ये च न किंचिद्धेतुदर्शनम् । नियमेऽपि च तद्दृष्टं नैवोर्ध्वदशवाससः ॥ क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् । न च तस्याप्रमाणत्वे किंचिदप्यस्ति कारणम् ॥ यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः । अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते ॥ शान्तिपुष्ट्यभिचारार्था ह्येकब्रह्मर्त्विगाश्रिताः । क्रियास्तया प्रमीयन्तेऽन्याप्येवाऽऽत्मीयगोचराः ॥ न चायमपि यज्ञाङ्गविधिः शान्त्यादिशास्त्रवत् । अतोऽस्यापि प्रमाणत्वं पुरुषार्थेन वार्यते ॥ न ह्येतद्यजमानस्य नर्त्विजामुपदिश्यते । सर्वेभ्यः पुरुषेभ्यो हि भोज्यान्नत्वमिदं श्रुतम् ॥ वाक्यान्तरैर्निषिद्धं यद्दीक्षितान्नस्य भोजनम् । तस्यैव श्रूयते पश्चादभ्यनुज्ञाविधिद्वयम् ॥ अग्नीषोमीयसंस्थायां क्रीते वा सति राजनि । सोऽयं कालविकल्पः स्यादाशौचच्छेदकालवत् ॥ ननु चाशौचकालोऽपि धर्मपीडाद्यपेक्षया । अतः समविकल्पत्वं नैव तस्यापि संमतम् ॥ यस्य ह्यल्पेन कालेन शुद्धिर्भोज्यान्नताऽपि वा । न तस्मात्तावता शुद्धो दीर्घकालत्वमाश्रयेत् ॥ एकरात्रे त्रिरात्रे वा शुद्धस्य ब्राह्मणस्य च । अशुद्धिरनुवर्तेत दशरात्रं कथं पुनः ॥ पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वा । प्राग्दशाहात्कथं तस्य सद्सद्भावकल्पना ॥ एवं प्राक् पशुसंस्थानादीक्षितान्नविशुद्धता । अस्ति नास्तीति चेत्येवं सहते नावधारणम् ॥ स्यादेतद्येन यः कालः पुरस्तात्परिगृह्यते । तस्यासावेव होमस्य प्रागूर्ध्वोदयकालवत् ॥ युक्तं समविकल्पत्वमुदितानुदितत्वयोः । न काचिदत्र पूर्वोक्ता सदसत्त्वविरोधिता ॥ न चानुदितहोमोक्तावुदितोक्तिरनर्थिका । क्लेशक्षयव्ययादीनां नातिरेकोऽत्र कश्चन ॥ इह त्वल्पेन कालेन शुद्धेर्या दीर्घकालता । न वर्धयेदघाहानि साऽनेनापि निवार्यते ॥ क्लेशप्रायं च तं पक्षं नाऽऽश्रयेतैव कश्चन । ततोऽनङ्गीकृते तस्मिन् स्यात्तद्वाक्यमनर्थकम् ॥ तेनतें विषयान्यत्वान्न विकल्पोऽवकल्पते । स चोक्तो धर्मपीडात्ययस्तत्र चाह्नामवर्धनम् ॥ दन्तजातानुजातान्यकृतचूडेषु च क्रमात् । चितिक्रिया त्र्यहैकाहास्तत्र चाह्नामवर्धनम् ॥'

तथा गौतमेनाप्युक्तम्– राज्ञा च कार्यविघातार्थं ब्राह्मणाना च स्वाध्यायानिवृत्त्यर्थमिति । 'अथवाऽन्तर्यदाऽऽशौचनिमित्तं किंचिदापतेत् । तत्र शेषेण या शुद्धिस्तच्छेषोऽयं भविष्यति ॥ न वर्धयेदघाहानि निमित्तादागतान्यपि । पूर्वस्यैव हि कालस्य प्रसङ्गेन तदङ्गता ॥ प्रवृत्तोऽनपवृक्तश्च दशरात्रादिकोऽवधिः । अन्तः पतितमाशौचं स व्याप्नोति स्वसंख्यया ॥ वितत्य दश संख्या हि तान्यहानि व्यवस्थिता । शक्नोत्येव परिच्छेत्तुमन्तराशौचमागतम् ॥ शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेते यथाश्रुति । नन्वेवं भोजनस्यास्ति विषयावधिकारणम् ॥ तत्र दीर्घावधिर्व्यर्थः स्यादल्पावध्यनुज्ञया । तस्मादिहापि वैषम्यहेतुर्वाच्योऽवधिद्वये ॥ अत्राप्यसंभवे तस्य दीक्षिते वा ददत्यपि । तन्नियुक्तकदत्तान्नं भोज्यं सोमक्रये कृते ॥ आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।

द्वैपायनादयश्च आहुः— 'परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' (मैत्रः— हिंसारहितः)

यानि च प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणस्वव्याख्यानादिब्रह्मयज्ञनिमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेशः । यो वा कश्चिन्मेधावितया शीघ्रमेव वेदचतुष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञानाभियोगमपरित्यजन् ग्रहणान्तं वेत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तं प्रति द्वादशाष्टचत्वारिंशद्वर्षपक्षाश्चनेनैव स्मरणेन पूर्वपक्षीकृतावियिति नातीव श्रुतिविरुद्धत्वेनोदाहर्तव्यौ । 'तेन नैव श्रुतिस्मृत्योर्विरोधोऽतीव दृश्यते । श्रुत्योरेव ह्यसौ दृष्टः क्वचिद्वा नैव विद्यते ॥ तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते । यदि वा बाध्यमानत्वमुक्तं बाह्यं स्मृतीः प्रति ॥'

एतद्धि जैमिनिनाऽत्यन्तं हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते । 'यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते । तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥' व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिद्यावज्जीवमप्येकमेव पक्षमाश्रित्य व्यवहरेन्न स कदाचिदप्युपालम्भास्पदं गच्छेत् । 'ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् । तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥' यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्यापाराणि तेषु श्रुत्यनुमानव्यवधानसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विश्रम्भणीयमिति श्रद्धाविशेषेण ग्राह्यतरार्थं विज्ञायते । सूत्रार्थोऽप्येवं योजयितव्यः । श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षमपेक्षावर्जितं यस्य वाऽपेक्षणीयमन्यन्नास्तीत्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणशब्दमनुषङ्गेण संबन्ध्य यदनपेक्षं तत्तावत्प्रमाणं स्यादिति तदानींतनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते ।

ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्कायां सत्यामेवात्यन्तनिराकरणपक्षः परिग्रहीष्यते । न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः । यदा तु कश्चित् शाखान्तरे स्मरणमूलं श्रुतिरपि प्रत्यक्षी भविष्यति तदोभयोस्तुल्यबलत्वाद्विकल्पो भविष्यत्येव । नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धं शाखान्तरगतमप्यग्राह्यं स्यात् । सत्यम् । 'वार्तामात्रेण तद्यावत्तावन्नैव ग्रहीष्यते । यदा तु श्रवणं प्राप्तं तदाऽस्मान्न विशिष्यते ॥ अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते । नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥'

सोम— पूर्वाधिकरणे सर्वस्मृतीनां प्रामाण्यमुक्तम्, इदानीं विरुद्धानामप्रामाण्यमुच्यते इति परस्परविरोध इति शङ्का परिहरन्नापवादिकीं संगतिं दर्शयति । सूत्रार्थः— श्रुतिविरोधे यस्मानान्तरानपेक्षं श्रुतिवाक्यं तदेव प्रमाणं स्यान्न तु स्मृतिवाक्यम्, यस्मादसत्येव विरोधे स्मृतेः श्रुत्यनुमापकत्वमिति ।

वि— 'औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः । अमितिर्वेति सन्देहे, मितिः स्यादष्टकादिवत् ॥ औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः । विरोधान्मूलवेदस्याननुमानादमानता ॥, प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात् । अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत् । अस्त्वेवमप्यनुष्ठानं स्पृश्यपक्षानुरोधतः ॥'

भाट्ट— श्रुतिविरुद्धानामपि 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनां श्रुतिमूलकत्वाविशेषात् प्रामाण्यम् । न च 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरोधात् तदनुपपत्तिः । परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशो दर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्, तद्वदेव विकल्पेन विरोधस्य परिहर्तुं शक्यत्वाच्च । न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षा निवर्तते, येन कल्पनामूलोच्छेदनात् विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात् । न वा शैत्योष्ण्ययोरिवात्र विषययोरत्यन्तविरोधः, येनौष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणबाधः स्यात् । न त्वेतदस्ति, विकल्पेन द्वयोः संभवात् । इति प्राप्ते—

तथैव प्राणपीडायां क्रीतराजकभोजनम् ॥ इत्येवमप्रमाणत्वमुक्तमन्यप्रकारकम् । अथ पानापदि स्नातो विश्वामित्र श्वजाघनीम् ॥' उच्यते—'एक विनाऽप्यनुज्ञानान् क्रियते मत्य-संभवात् । क्रियतेऽनुज्ञया त्वन्यद्विशेषश्च तयो र्महान् ॥ सामान्येनाभ्यनुज्ञानाद्विशेषश्च विधि-ष्यते । विशेषोऽत्यन्तनिर्दोषः क्षोपदोषेतरक्रिया ॥ तथा च मनुनाऽप्युक्तमापद्धर्मगत प्रति । तत्रत्य-पापदोषाणामन्ते शौचं भविष्यति ॥ धर्मेण येन केनेह मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥' इति । 'धर्मश्च प्रथमं तावत्प्रायश्चित्तात्मको भवेत् । ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥'

यत्तु क्रीतराजकभोज्यान्नवचन तत्पुरुषमप्रति निर्दोषत्वज्ञापनार्थमेव भवति । तत्रापि तु 'प्रभुः प्रथम-कल्पस्य योऽनुकल्पेन वर्तते । स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम् ॥' इति निश्चितत्वात् समस्तदोषान्तरेणापि लोकयात्रादिप्रयोजनेन भोक्तव्यम् । 'यदि वा कालनैयत्यादभक्ष्यमविकल्पयो' । अयं भेदस्त्वपरवस्थानादविरोधोऽयथार्थते ॥ दीक्षितान्नभ-भोज्यं स्यादक्रीते राजनि ध्रुवम् । क्रीते त्वभोजनं नाम मनः कर्म नियम्यते ॥ यथैवाश्राद्ध-भोजित्वं यथा वाऽमांसभक्षणम् । श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते ॥ श्राद्धमन्वदर्शाद्दं हि नियोगेन निषिध्यते । प्रतोद्दिष्टं सदैकेषां न तु पित्र्यं कदाचन ॥' तथा श्राद्धभोजित्वनियमः स्वर्गायेति विज्ञायते । तथा पञ्चदशीचतुर्दश्यष्टमीषु मांस-भक्षणमैथुनादिक्रियाप्रतिषेधात् गृहस्थस्यान्यत्र कामचारे प्राप्ते तदकरणनियम श्रेयसे विहित । यथाऽऽह 'न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥' इति ।

नन्वत्र वाक्यद्वयदर्शनात्तत्र यथोक्तपृथक्त्वं युक्तमिह त्वेकमेव दीक्षितान्नभोजनप्रतिषेधवाक्यं कथं अनुज्ञया प्रतिषेधति तदुक्तकाले च प्रागग्नीषोमीयसमाप्तेर्नि-श्रेयसेन नियच्छतीति । तदुच्यते—'स्याद्वाक्यद्वय-मेवैतदयथिद्वयकल्पितम् । यः पूर्वः प्रतिषेधोऽत्र संस्थितः क्रीतराजके ॥ परोऽवधिः पुनस्तत्र नैकवाक्यत्वमुच्यते । द्वितीयात्वाद्दत्तानुज्ञादर्शनात्तेन गम्यते ॥ अभोजनविधिर्नूनमन्यो ऽप्यान्तरालिकः । न हि पूर्वमनुज्ञाते स्यादनुज्ञान्तरं पुनः ॥ परणाऽभ्यनुज्ञाते निश्चिते किमनुज्ञया ॥' यथा मन्त्रयोरन्यतरेणैव यदि यजमानेन यजेतयोगि न्यायमनुज्ञातमेवेति निर्णयमन्ये प्रथमशब्देन तदानी-न्तनप्रमाणानुज्ञाप्रकाशनं न क्रियते तथेह क्रीतराजका-भ्यनुज्ञानभोजनानुज्ञायामग्नीषोमीयसमाप्तौ पुनरन्य-स्मिन्नादर्शे नियमेन प्रतिषेधान्तरेण वा चारितार्थ्यानुज्ञा-नार्थमित्यवगम्यते । 'प्रतिषिद्धाभ्यनुज्ञा च विकल्पे-नैव युज्यते । पर्युदस्ताभ्यनुज्ञानं तस्मादिदं व्यव-स्थया ॥' दीक्षितान्ननिषिद्धभोजननियमो हि श्रेयो-र्थित्वे विधीयते । 'पाश्चात्त्यभोजनानुज्ञा नान्यथा ह्युपपद्यते । अदृष्टार्थप्रसिद्धत्वाच्च विधिश्चाप-निष्यते ॥ एवं विषयनानात्वादविरोधाद्बाध-नम् ।'

अन्नाचरणादिशब्दवं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरनिरूपणनिबन्धनाद्धर्मान्तरनियमनतसमवाद्बा विरोधाभाव । तथा हि—'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । सामर्थ्याश्रमयोरन्यत-मङ्गीकृत्यैतदुच्यते ॥' गौतमेनापि 'द्वादशवर्षा-ण्येकवेदब्रह्मचर्यं चरेत्' इति प्रथमकल्पमाधु गार्हस्थ्य-प्रतिपत्त्यर्थमुक्त्वा द्वितीयकल्पे द्वादश प्रतिवेदं वा सर्वे निन्यष्टाचत्वारिंशत्परिग्रहः कृतः । 'तत्रैवं श्रूयते चक्तुं येऽन्धपङ्ग्वादयो नराः । गृहस्थत्वं न शक्यन्ति कर्तुं तेषामयं विधिः ॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा । तैरवश्यं ग्रहीतव्या तेनाऽऽदावेतदुच्यते ॥ जपकुर्वाणकेनैव यावत् कालो बहुस्ततः । संप्राप्य स्नातमूयत्वं पवित्रैः क्षीणकल्मषैः ॥ सर्वाश्रमातिरिक्तेन स्वाध्यायेनैव शोधितः । लोकैरप्याश्रमाचारैरतिमिश्रं गमि-ष्यति ॥'

द्वैपायनादयश्च आहुः— ‘ परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ’ ( मैत्रः— हिंसारहितः )

यानि च प्रतिदिनप्रयुज्यमानऋग्यजुःसामब्राह्मणकल्पव्याख्यानादिग्रहणधारणनिमित्तानि फलानि तत्वविद्भिः पुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि अवध्यानमात्राधिकृतब्रह्मचारिपरिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेशः । यो वा कश्चिन्मेधावितया क्षीप्रमेव वेदचतुष्टयमप्यधीत्य यथोपपत्तिकालं तदर्थज्ञानाभियोगमपरित्यजन् ग्रहणान्तं वेत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तं प्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षावनेनैव स्मरणेन पूर्वपक्षीकृताविति नातीव श्रुतिविरुद्धत्वेनोदाहर्तव्यौ । ‘तेन नैव श्रुतिस्मृत्योर्विरोधोऽतीव दृश्यते । श्रुत्योरेव ह्यसौ दृष्टः क्वचिद्वा नैव विद्यते ॥ तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते । यदि वा बाध्यमानत्वमुक्तं वाच्यं स्मृतीः प्रति ॥ ’

एतद्धि जैमिनिनाऽत्यन्तं हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते । ‘ यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते । तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥ ’ व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिन्नायत्तीत्रमप्येकमेव पक्षमाश्रित्य व्यवहरेत् स कदाचिदप्युपालम्भास्पदं गच्छेत् । ‘ ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् । तथापि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥ ’ यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्यापाराणि तेषु श्रुत्यनुमानव्यवधानसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विश्रम्भणीयमिति श्रद्धाविशेषेण ग्राह्यतरत्वं विज्ञायते । सूत्रार्थोऽप्येवं योजयितव्यः । श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षमपेक्षावर्जितं यस्य वाऽपेक्षणीयमन्यन्नास्तीत्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणशब्दमनुषङ्गेण सम्बन्ध्य यदनपेक्षं तत्प्रमाणं स्यादिति तदानीन्तनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते ।



ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्काया सत्यामेवात्यन्तनिराकरणपक्षः परिग्रहीष्यते । न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः । यदा तु कश्चित् शाखान्तरे स्मरणमूलं श्रुतिरपि प्रत्यक्षी भविष्यति तदोभयोस्तुल्यबलत्वाद्विकल्पो भविष्यत्येव । नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धं शाखान्तरगतमप्यग्राह्यं स्यात् । सत्यम् । ‘ वार्तामात्रेण तद्यावच्चावज्ञैव ग्रहीष्यते । यदा तु श्रवणं प्राप्तं तदाऽस्मान्न विशिष्यते ॥ अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते । नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥ ’

सोम— पूर्वाधिकरणे सर्वस्मृतीनां प्रामाण्यमुक्तम्, इदानीं विरुद्धानामप्रामाण्यमुच्यते इति परस्परविरोध इति शङ्का परिहरणापवादिकी संगतिं दर्शयति । सूत्रार्थः— श्रुतिविरोधे प्रमाणान्तरानपेक्षं श्रुतिवाक्यं तदेव प्रमाणं स्यान्न तु स्मृतिवाक्यम्, यस्मादसत्येव विरोधे स्मृतेः श्रुत्यनुमापकत्वमिति ।

वि— ‘ औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः । प्रमितिर्वेति संदेहे, मितिः स्यादष्टकादिवत् ॥ औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्षवेदतः । विरोधान्मूलवेदस्यानुमानादप्रमाणता ॥, प्रत्यक्षानुमितश्रुत्योर्यदा व्याघातदर्शनात् । अप्रमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत् । अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥ ’

भाट्ट— श्रुतिविरुद्धानामपि ‘ औदुम्बरी सर्वा वेष्टयितव्या ’ इत्यादिस्मृतीनां श्रुतिमूलकत्वाविशेषात् प्रामाण्यम् । न च ‘ औदुम्बरीं स्पृष्ट्वोद्गायेत् ’ इति प्रत्यक्षश्रुतिविरोधात् तदनुपपत्तिः । परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशो दर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्, तद्वदेव विकल्पेन विरोधस्य परिहर्तुं शक्यत्वाच्च । न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षा निवर्तते, येन कल्पनामूलोच्छेदनात् विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात् । न वा शैत्योष्ण्ययोरिवात्र विषययोरत्यन्तविरोधः, येनौष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणबाधः स्यात् । न त्वेतदस्ति, विकल्पेन द्वयोः सम्भवात् । इति प्राप्ते—

भाष्यकारैरेवं सिद्धान्तितम्– सर्वत्रानुमाने अनु-
मेयजिज्ञासायाः कारणत्वात् प्रत्यक्षश्रुत्या च स्पर्शविधाने-
नावेष्टितरवरूपेण औदुम्बर्याः परिच्छिन्नत्वात् जिज्ञासा-
ऽभावेन नोदुम्बरीवेष्टनविषयकश्रुत्यनुमानप्रसरः । तथा
प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्र लोभादिदर्शनम्, यथा
'वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णाति' इत्यादौ
तत्रापि न श्रुतिकल्पनं कल्पहेतोरेव मूलत्वोपपत्तेरिति ।
वार्तिककारस्तु— न जिज्ञासाया अनुमित्यङ्ग-
त्वम्, अन्यत्र जिज्ञासायामपि तदुदयात् सत्यपि वा
तस्याः कारणत्वे अनमितिविषयश्रुतेर्जिज्ञासितत्वाच्च
प्रत्यक्षश्रुतिविरोधाभावेऽपि लोभादिमूलकत्वाङ्गीकारे च
अष्टकादिस्मृतेरपि तदापत्तेः । अतश्च प्रत्यक्षश्रुतिविरोधे-
ऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलकत्व-
कल्पनोपपत्तेर्युक्तमेव प्रामाण्यम् । परन्तु यावच्छ्रुतिदर्शन
वेष्टनं नानुष्ठेयम्, अर्थवादानुगृहीतविधिमूलकत्वस्यापि
स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य संभावितत्वात् ।
तस्य चोन्नयनस्य प्रत्यक्षश्रुतिविरोधे आभासत्वसंभवात् ।
अतश्च यावच्छ्रुतिदर्शनं अननुष्ठानलक्षणं अप्रामाण्य-
मित्यभिप्रायं सूत्रमिति प्राह ।

यद्वा— शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेर्वेददर्शन-
समनेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वम्, तन्मूल-
भूतवेदश्चेदानीं प्रलीनः, इति प्राप्ते— शिष्टत्रैवर्णिकाना
धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् प्रत्यु-
ताप्रमाणत्वेनैव तेषां स्मरणात् वेदाप्रामाण्यवादिभिरेव
च तत्प्रामाण्यस्वीकारात् वेदमूलकत्वकल्पनाऽनुपपत्तेर-
प्रामाण्यमिति सूत्रार्थः ।

मण्डन— 'श्रुत्या विरुद्धा स्मृतिरप्रमाणम् ।'

शंकर— 'न तत् श्रुतिविरोधतः ।'

• विरोधाधिकरणं विषयान्तरासंभवात् अनङ्गी-
कृतमपि केनचित् शाक्यादिग्रन्थस्य वेदमूलत्वसंभावना-
मात्रेण आशङ्क्य तन्निराकरणार्थत्वेन व्याख्यातम् । सु.
पृ. २२८. • प्रामाण्याप्रामाण्यविचारो न फलविचारः
किन्तु अधिकरणाङ्गविचार एव । अतश्च विरोधे सत्यपि
प्रामाण्यव्युत्पादनात् विरोधाधिकरणेन ( शिष्टाकोपा-
धिकरणस्य) आपवादिकी संगतिः अस्मिन् पक्षे द्रष्टव्या ।

सोम. १।३।४. • विरोधाधिकरणस्य शाक्यादि-
ग्रन्थविषयत्वम् । ( वार्तिकमते ) । सु. पृ. २२८.
• विरोधाधिकरणे च उभयोरपि स्मृत्याचारयोः
श्रुतिविरोधे प्रामाण्यमपोदितम् । कौ. १।३।४।८ पृ.
५४. • विरोधाधिकरणे विरुद्धस्मृतिप्रामाण्यापवादेन
अविरुद्धस्मृतिप्रामाण्यं निरपवादमुक्तम् । सु. पृ. २०४.
• विरोधाधिकरणे शाक्यादिग्रन्थानां अप्रामाण्यं च्युत्पा-
दितम् । कौ. १।३।३।७. • विरोधाधिकरणे सर्ववेष्टन-
स्मृत्युदाहरणमुपन्यस्तम् । सु. पृ. २२७. • वार्तिक-
कारमते विरोधाधिकरणे शाक्यादिग्रन्थानां वेदमूलत्वा-
समनेन अप्रामाण्यं प्रतिपादितम् । तदधिकरणाक्षेपोऽपि
कल्पसूत्राधिकरणे पूर्वपक्षे ( कृत. ) । कौ. १।३।६।
११. • स्मृत्यधिकरणे एवाचारप्रामाण्यस्यापि व्युत्पा-
दितत्वात् विरोधाधिकरणे तस्यापि स्मृतिवत् वेदविरोध-
विषये प्रामाण्यं अपोदितम् । सु. पृ. २०७.

• यद्वा नात्र ( शिष्टाकोपाधिकरणे १।३।४ )
विरोधाविरोधमात्रं विचार्यते, किन्तु सत्यपि विरोधे
द्विराचमनादीनां धर्मित्वेन बलीयस्त्वादबाधः उत
प्रामाण्यदौर्बल्याद् बाध. इति विरोधाधिकरणापवादार्थं
विचार्यते । सु. पृ. १७४.

• स्मृतेः श्रुतिविरोधे तावत् विरोधाधिकरण-
न्यायेन श्रुत्यकल्पनम् । कौ. १।३।३।७.

• विरोधाधिकरणभङ्गटीकाव्याख्यानान्ते सोमे-
श्वरेणोक्तम्– मन्त्रकल्पो देवताविधि. अश्वदानफल-
विधिश्च । बाल. पृ. १९.

• भाष्यकारीयविरोधाधिकरणभङ्गावसरे श्रुति-
विरुद्धानामपि स्मृतीनां प्रामाण्यं व्यवस्थापितं परन्तु तत्र
विकल्पेन उभयानुष्ठानसंभवात् प्रामाण्यम् । कु. १।१।
५।८ पृ. ६४.

• 'विरोध एव क्वास्ति क्व नास्ति' इत्येवं
विरोधाधिकरणविषयव्याप्त्यर्थत्वमस्या– (१।३।४)
धिकरणस्य इति तेनास्य संगतिः । सोम. १।३।४.

• विरोधावगतिः । द्वयी हि विरोधावगतिः, सहा-
नवस्थानं वा छायाऽऽतपवत्, परस्परपरिहारो वा
भावाभाववत् । कणिका. पृ. ११२.

सू विरोधिनामेकश्रुतौ नियमः स्याद् ग्रहणस्यार्थवत्त्वाच्छरवत् श्रुतितो विशिष्टत्वात् । १०।७।१६।५१ ॥

विरोधिनां पदार्थानां मध्ये एकश्रुतौ एकस्य अन्यतमस्य श्रवणे नियमः स्यात् नियमविधिस्त्व स्वीकार्यम् । ग्रहणस्य अन्यतमश्रवणस्य अर्थवत्त्वात् सफलत्वसिद्धेः । श्रुतिनः श्रुत्या विशिष्टत्वात् विहितत्वात् चोदकप्राप्तान् बाधेरन् । यथा वाजपेये 'खादिरो यूपो भवति' इति खादिरस्य नियमः, पालाशादेश्च बाधः । तथैव यथा 'यवमयो मध्यमः पुरोडाशः' इति श्रुतेः यवानां नियमः, व्रीहीणां बाधः । शरवत् यथा 'शरमयं बर्हिर्भवति' इत्युक्तेः शराणां नियमः, कुशानां बाधः तद्वत् । इति सिद्धान्तः ।

उभयप्रदेशादिति चेत् । ५२ ॥

पूर्वपक्षी शङ्कते । उभयोः खादिरपालाशयोः, बृहद्रथन्तरयोः, व्रीहियवयोर्वा प्रदेशात् चोदकेन उपदेशात् न पालाशरथन्तरव्रीहीणां निवृत्तिः सम्भवति । तस्मान्न नियमः किंतु विकल्पः ।

शरेष्वपि । ५३ ॥

उक्त-पूर्वपक्षिणः शङ्कायां सिद्धान्ती प्रतिबन्द्या प्रतिवदति । यदि उभयोपदेशात् पालाशादिषु न निवृत्तिः तर्हि शरेष्वपि न निवृत्तिः स्यात् तत्रापि विकल्पः प्रसज्येत । इति ।

विरोध्यग्रहणात् तथा शरेष्विति चेत् । ५४ ॥

पूर्वपक्षी शरदृष्टान्तं शोधयति । न शरेषु दोषः । विरोध्यग्रहणात् विरोधिनां ग्रहणाभावात् कुशाविरोधिषु शरेषु अङ्गीक्रियमाणेषु शराविरोधिनां कुशानां ग्रहणं सम्भवति । तत्र शरेषु तथा कुशानिवर्तकत्वं स्यात् ।

तथेतरस्मिन् । ५५ ॥

सिद्धान्ती समाधत्ते । तर्हि इतरस्मिन् खादिरादौ पालाशादिविरोधिनि अङ्गीक्रियमाणे खादिरादिविरोधिनः पालाशादयः अङ्गत्वेन ग्रहीतुं शक्याः । तस्मात् खादिरादीनां नियमः, पालाशादीनां निवृत्तिः ।

श्रुत्यानर्थक्यमिति चेत् । ५६ ॥

पुनः पूर्वपक्षी शङ्कते । विरोध्यग्रहणात् पलाशादीनां निवृत्तौ स्वीकृतायां श्रुत्यानर्थक्यं श्रुतेः चोदकस्य खादिरपलाशोभयप्रापकस्य अनर्थकत्वं प्रसज्येत । तस्मात् न पलाशादीनां निवृत्तिः किंतु विकल्पः । इति चेत् ।

ग्रहणस्यार्थवत्त्वादुभयोरप्रवृत्तिः स्यात् । ५७॥

सिद्धान्ती आह । 'खादिरो यूपो भवति' 'बृहत् पृष्ठं भवति' 'यवमयो मध्यमः पुरोडाशः' इति खादिरबृहद्यवानां ग्रहणस्य विधानस्य अर्थवत्त्वात् सफलत्वसिद्ध्यर्थं उभयोः खादिरपलाशयोः, द्वयोरपि एव बृहद्रथन्तरयोः यवव्रीह्योश्च अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् । किंतु खादिरादीनां नियमः पलाशादीनां निवृत्तिः इति सिद्धान्तः । के.

• विरोधिनां च न सह प्रवृत्तिः । भा. १०।७।१९।६६.

• विरोधित्वाच्च लोकवत् । १०।७।१९।६६ ॥

एकस्मिन् कार्ये ये विकल्पेन साधकाः ते परस्पर विरोधिनः । तेषां न सह प्रवृत्तिः विरोधित्वात् । लोकवत् यथा 'मत्स्यान् न पयसा समश्नीयात्' इति मत्स्यैः पयो निरस्यते तद्वत् । इति न्यायः । पृ. १०।७।१९।६६.

• विलापनं आज्यधर्मः । भा. ३।१।४।७.

• विलेशः । अथ आचेयच्छन्दस्काः ऋच उपास्मामहे ततो गीति विलेशयाम । (अधिकपरिमाणासु ऋक्षु सामगाने ऋक्शेषे सामादर्शनं विलेशः) । भा ९।२।४।२१. • विलेशः अल्पस्य न्यूनता । वि. ९।२।४. • विलेशः साम. ऋगपेक्षयाऽल्पत्वम्, यदि न्यूनच्छन्दस्कायामृचि उत्पन्नं साम अधिकच्छन्दस्कायामृचि गीयेत तदा अल्पं साम ऋक्परिपूरणाक्षमं स्यात् । रत्नायनम् । पृ. ८७.

• विवक्षाऽविवक्षयोः भेदे समवासमवविचारः मीको पृ. १६२९–१६३१ 'ग्रहन्याय' इत्यपि स्थले द्रष्टव्य. ।

• विवक्षाबीजं विधेयत्वमेव, नोपादेयत्वं तद्विशेषणता वा इति मञ्जूषिकाया (मञ्जूषा– 'पुनः

पिबेत्' इत्यस्य विवेचक वार्तिक पृ. २११–२१३।) उक्तम्– 'नोपादेयत्वमेवकं विवक्षाकारणं मतम्। विरोधपरिरक्षाया कारण हि महद्विधि.॥' बाल. पृ. १३.

• विवक्षितमेकत्वं 'पशुमालभेत' 'पशुना यजेत' इत्यादौ पशोः। ४।१।५।११–१६. मीको. पृ. २४९४ 'पदैकत्वाधिकरणम्' इत्यत्र द्रष्टव्यम्। • विवक्षित पुंस्त्वादि लिङ्ग पशौ। ४।१।६।१६–१८. मीको. पृ. ३३५४ 'लिङ्गाधिकरणम्' इत्यत्र द्रष्टव्यम्। • यदि प्रयोजनवत् तत् विवक्षितं इत्युच्यते। भा. ४।१।५।११.

• विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणाप्रसङ्गः, वाक्यभेदप्रसङ्गश्च। विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्यप्रसङ्गः। तत्र विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणा इत्यत्रोदाहरणम्– 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। अत्र हि विवक्षितोऽर्थः उत्तरकालविशिष्टबृहस्पतिसवान्तराङ्गत्वं वाजपेयस्य, तदपेक्षया न्यूनोऽर्थः. प्रसिद्धस्यैव बृहस्पतिसवस्य वाजपेयोत्तरत्व तदभ्युपगमे वाजपेयश्रुतौ कालक्षणा इति। विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे वाक्यभेदः इत्यत्र उदाहरणम्– 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। अत्र हि विवक्षितोऽर्थः, द्रव्यदेवताकालद्वयविशिष्टयागविधिः। तदपेक्षया न्यूनोऽर्थः द्रव्यदेवतमेव विधीयते न यागविधिरिति। तदभ्युपगमे वाक्यभेदः इति। विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्य इत्यत्रोदाहरणम्– 'आग्नेयमस्याग्नेयस्य देवा इति तिस्र आहुतीर्जुहोति' इति। अत्र 'सांग्रहण्या ग्रामकामो यजेत' इति प्रधानवाक्यगतग्रामकामपदानुषङ्गेण विवक्षितार्थापेक्षया आमनहोमविधे आधिक्याभ्युपगमे ग्रामकामपदानुषङ्गानर्थक्यम्। बाल. पृ. २.

• विवक्षितवचना: मन्त्रा.। नियतोच्चारण तु अदृष्टार्थम्। १।२।४।३१–४९. मीको. पृ. ३१०१ 'मन्त्राधिकरणम्' इत्यत्र द्रष्टव्यम्।

• विवर्तवादन्यायः। रज्जौ यथा दृश्यमानोऽपि सर्पः अनिर्वचनीयत्वात् विवर्तरूपः तथा ब्रह्मणि विश्वं इति न्यायार्थः। के.

• विवाहः त्रिंशतिवर्षे पुरुषस्य न अष्टाशीवः। तदुक्तं विस्तरे (६।७।१३) 'त्रिंशतिवर्षो विवाहं कृत्वा' इति। के. • विवाहे 'इष एकपदी भव' इत्यादिषु 'भव' इति शेषानुषङ्गस्यापि अनुषङ्ग्यापविषयत्वम्। तत्र केषाञ्चित् सङ्गत् प्रयोगो दृश्यते स न युक्तः। सुधा. पृ. ६९६.

• विवाहार्थमिथ्यावादस्य विधेयत्वे अपि धर्मत्वं नास्ति तस्य विवाहमात्रसाधनतया अलौकिकत्वाभावात्। अत एव 'पञ्चानृतान्याहुरपातकानि' इति पातकत्वाभावमात्रं न तु धर्मत्वम्। मणि. पृ. ५.

• विवाहकाले। उद्वाहकाले एव अनयोः (दंपत्योः) वचनेन द्रव्यसाधारण्य प्रतिपादितम्, 'धर्मे चार्थे च कामे च नातिचरितव्या' इति प्रतिपादितत्वात्। टुप्. ६।१।४।१७.

• मातुलसुता, मातृगोत्रा, समानप्रवरा च कुमारी न विवाहयोग्या। वि. ११३।५ वर्णक २.

• विविधसंख्याकानां दक्षिणानां आधाने विकल्पः। १२।४।५।९. मीको. पृ. ९२२ 'आधाने दक्षिणानां संख्यासु विकल्प.' इत्यत्र अधिकरणं द्रष्टव्यम्।

※ विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव साम्नामावापोद्वापौ (विवृद्धत्वे आवाप, अविवृद्धत्वे उद्वाप·)॥

पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात्। १०।४।११।२१॥

भाष्यम्— इह विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव उदाहरणम्। ते एव ये पूर्वस्मिन्नधिकरणे उदाहृताः। तयोरर्थः समधिगतः। विवृद्धस्तोमकेष्वभिवृद्धि· अविवृद्धस्तोमकेषु निवृत्तिरिति। अथेदानीमिदं सन्दिह्यते किं यस्मिन् कस्मिंश्चिदावापो यतः कुतश्चिदुद्वाप. उत पवमानेष्वेव आवापोद्वापाविति। किं प्राप्तम्? अविशेषादनियम इति। एवं प्राप्ते, ब्रूमः। पवमाने आवापोद्वापौ स्यातामिति। कुतः? अस्मिन्नेव हि तौ

तु न्यायप्रवृत्ते पूर्वपक्षप्रत्यङ्गीकारेण गायत्र्यादिषु सामावापविधिरेवाय परिसंख्याफलक । अत एव एवकारार्थोऽप्यनुवाद एव । न च गायत्र्यादीनामुद्देश्यत्वेऽनेकोद्देश । अनेकस्य एकस्योद्देश्यपरत्वेन तदभावात् । सप्तम्याश्च प्राधान्यपरत्वेऽप्याधेयत्वसंबन्धतात्पर्यग्राहकत्वात्सान्यसंबन्धेन सामावापविधि । यद्यपि च गायत्र्यादिषु सामावापे विहितेऽपि न स्तोत्रान्तरे तदावापप्रसक्तिरिति नानाश्चाभिधानीन्यायेन फलत परिसंख्यात्वम्, तथाऽप्यावापविधे प्रयोजनजिज्ञासाया प्रयोजनान्तरासंभवे गमकविधयैव स्तोत्रान्तरेषु अभ्यासविधिकल्पनेन परिसंख्याफलकत्वोपपत्ते ।

अत एवाविवृद्धस्तोमके क्रतौ उपदिष्टकौत्सादिनिवेशार्थं यत्र ग्रुवचिरस्तोत्रे प्राकृतसामोद्वापे नियमेन प्राप्ते 'अत एवोद्वपति' इत्यनेन गायत्र्यादिभ्य उद्वापस्य श्रुत्या फलतो वा नियमकरणात् स नियमविधिरेवेत्युक्त कौस्तुभे ।

तत्त्व तु आवापविधिबलादेवोद्वापस्यार्थसिद्धत्वात् अयमनुवाद एव तत्स्तुत्यर्थ । अत एवावापविधेरपि विवृद्धस्तोमादौ परिसंख्याफलकत्व अविवृद्धस्तोमके नियमफलकत्वमित्यपि बोध्यम् ।

वस्तुतस्तु आवापविधिरयमनारभ्याधीतोऽपि न प्रकृतौ निविशते, तत्र कस्मिन्नपि स्तोत्रे आवापाभावात् । तथाहि बहिष्पवमाने तावत् साम्नोऽभ्यास एव । ऋचा तु यथाम्नातमेव पाठ इति न तत्र कस्याप्यागम । एवमितरयो पवमानयो यावत्सङ्ख्यमृचा साम्नां च विधानादेव नावाप । आज्यपृष्ठाग्निष्टोमस्तोत्रेषु तु साम्ना ऋचां चाभ्यासादेव स्तोमसंपत्तिरिति न कोऽप्यावापविधेर्विषय । अत एव प्रकृतौ आज्यादिस्तोत्रेषु एकैकसामविशिष्टैकैकतृच प्राम्नानात् स्तोमसंपत्त्यर्थं सामान्तराणामृगन्तराणां चागमे प्राप्तेऽपि मानेन वचनेन तत्परिसंख्या पवमानयोरावापप्रसक्त्यभावेन तत्राव पर्यवसितमुखेनतरस्तोत्रेषु तत्परिसंख्यापकस्यास्य प्राकृताज्यादिविषयत्वानुपपत्ते । अत एव प्रकृतावाज्यादिस्तोत्रेषु न्यायप्राप्तोऽप्यागम 'त्रिच्छन्दा आरवो माध्यंदिन पवमान पञ्चसामा पञ्चच्छन्दा आर्भव पवमान सप्तसामा' इति पवमानद्वयविधायकवाक्यप्रश्रवणात् परिसंख्यायते ।

अत्र हि प्रकृतौ पवमानद्वये आवापाभावेऽप्यावापसमाख्या प्रकृतौ विकृतौ वा यत्र यत्रावापप्रसक्तिः साऽस्त्वेव, न स्तोत्रान्तरे इत्येवपरा सती प्रकृतावपि स्तोत्रान्तरेऽभ्यासविध्यापादनद्वारा आगमपरिसंख्यार्था विज्ञायते । अतो विकृतावपि तत एव स्तोत्रान्तरेष्वभ्यासविधिसंभवात् न 'त्रीणि ह वा' इत्यादिवचनश्रुत्या फलतो वा तत्रावापपरिसंख्यार्थम् । अपि तु विवृद्धस्तोमके क्रतौ पवमानद्वये संख्यासंपत्त्यर्थमृचसामयोरुभयोरागमे प्राप्ते गायत्र्याद्यधिकरणकसामावापविधिस्ताद्दशऋगभ्याससंपादनद्वारा ऋगन्तरागमपरिसंख्यार्थं, पवमानद्वयनिनिष्टुभाद्यधिकरणवपरिसंख्यार्थो वा ।

एव चाविवृद्धस्तोमके कौत्सादीनां न्यायादेव पवमानद्वय एव प्राकृतऋगधिकरणकावापसिद्धौ 'अत्र होरावपन्ति' इत्यस्य पवमानवृत्तित्रिष्टुभाद्यधिकरणत्वव्यावृत्तिफलको गायत्र्याद्यधिकरणनियम इति ध्येयम् । 'अत एवोद्वपति' इत्यस्य तदंशे त्वनुवाद एव । सर्वथा कौत्सादीनां पवमानयोरेव निवेश इति सिद्धम् ।

मण्डन— 'पवमानेऽधिकोद्धृती ।' अधिकोद्धृती अधिकम्— आधिक्यम्, आवाप, वृद्धि । उद्धृति – उद्धरण उद्वाप । ते द्वे पवमाने एव भवत इति शेष ।

शंकर— 'स्तोमवृद्धौ न बाध स्यात् ।' 'बाधाबाधौ न तन्त्रगौ ।'

* विवृद्धसुत्याहानुपलक्षण द्वादशाहे उपसत्कालीनसुब्रह्मण्याह्वाने । ११।४।७।२०–२२ मीकोष २१९१ 'द्वादशाहे उपसत्कालीनसुब्रह्मण्याह्वाने०' इत्यत्र अधिकरण द्रष्टव्यम् ।

* विवृद्धस्तोमका अविवृद्धस्तोमकाश्च विकृतिरूपा क्रतव सन्ति । वि १०।४।१२ * विवृद्धस्तोमका क्रतव । प्रकृतौ यत्र स्तोत्रे यावन्त स्तोमा भवन्ति ततोऽधिका स्तोमा तत्र स्तोत्रे यत्र क्रतौ भवन्ति ते विवृद्धस्तोमका क्रतव । ( १०।४।१०।२० ) । के

स्थितशास्त्रप्रयोगबलेन ; अन्यवस्थितलौकिकप्रयोगबाधात् यवयराहादिशब्दानामर्थनिर्णयः प्रतिपादितः । एव (यत्र) पुनरेकस्मिन् सनादावर्थे गोगाव्यादयो बहवः शब्दा प्रयुज्यन्ते तत्र वृद्धव्यवहारावगतप्रतिशब्दसमानाभिधानक-शक्तिभेदोपपत्तेः शास्त्रस्यसर्वशब्दप्रयोगाणां च लौकिक-शब्दैरविरोधात् पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापार सिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात् । तथाहि- ‘ लोकप्रसिद्ध-शब्दार्थवशं शास्त्रं प्रवर्तते । अतो न लौकिकेभ्य-स्तस्तत्साध्वसाधुत्वनिर्णयः ॥ ’ वाक्यार्थेषु हि श्रुति-स्मृत्याचारविरोधदर्शनात् प्रमाणक्रमानुपूर्व्येणाप्रधृतमिह तु न विपरीतक्रमत्वात् । [ पृ २५३ ] ‘ लोकादेवाधि गन्तव्या शब्दानां साध्वसाधुता । बाधकाबाध-कत्वेन सा च नित्यं व्यवस्थिता ॥ अनिमात्राण्य-साधूनि वर्णा वा केवलात्मनाम् । संघातोऽर्था-नपेक्षो वा मातृकानुपदेशवत् ॥ ’ तेन गैरीशब्दादि-शब्दा, गकारककारादय प्रत्येक तद्वर्गा वाऽनर्थकत्वाद-पशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गव्यादय पुनर्गवादिवदेव साधयन्तस्तं तेभ्यो-ऽपि वा शीघ्रतर प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति सत्यपि एकविषयानेकशब्दत्वे हस्तकराभ्यादिशब्दवदर्थ-साधनत्वात् साधुत्वेनावधार्यन्ते । ‘ तत्रश्चावाचकत्वेन यदसाधुत्वमुच्यते । तच्च लोकविरुद्धत्वान्न प्राबल्यं प्रतीयते ॥ अदृष्टविषया चेत्स्यादेतेषां त्वन्यसाधुता । वेदवाक्यैरनिर्दिष्टा न साऽस्त्य-न्यप्रमाणिका ॥ ’

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णा शुद्धाः प्रती यन्ते । न तद्गते तत्समुदायगते वा साध्वसाधुत्वे । न चाऽननुभूतसंबन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वक-पुरुषवचननित्यानित्याऽपि सिद्धा । वेदवचन पुनर्वस्तु स्वरूपवदृष्टगुणदोषाख्यानपर विधिप्रतिषेधानपेक्ष नैव विनियमप्रमाणत्वेन सम्भवति । साधुत्वासाधुत्वयो. अन-नुष्ठानात्मकत्वात् विधिप्रतिषेधाविषयत्वात् । अभिधा भावनाकरणभूतयो विधेयत्वप्रतिषेध्यत्वसंभव इति चेन्न, प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्ते ।

‘ यो हि प्रतिपदं पाठे साधूनां नाध्यवस्यति । विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ॥ अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः । न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः ॥ ’ गौश्च दीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परि ज्ञायमानपरिमाणत्वात् [ पृ. २५४ ] विधिप्रतिषेध गोचरीभवन्ति न तु गवादिगाव्यादीना जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधावुपपद्येते । न तावत् साध्व साधुत्वे जातिगुणत्वात्मकसामान्यरूपेण सर्वं यक्त्यनुगते विज्ञायेते यदाश्रयतौ द्वारेण विधिप्रतिषेधावनुमीयेयाताम् ‘ साधुभिः भाषेत नासाधुभिः ’ इति । ‘ अविभक्ता हि शब्दत्वजाति शब्दापशब्दयोः । न त्ववान्तरसा मान्ये केचिद्दृष्टव्यवस्थिते ॥ ’ तेन यद्येकैका व्यक्ति विधीयेत प्रतिषिध्येत वा ततो यावत्पद वाक्यान्यनुमिमान त्रैलोक्यपूरणदक्षाणि स्मृतिमूलभूतानि वेदवाक्या-न्यनुमिमीते । न च तावता कोटिशतभागोऽप्याम्नातु शक्यते । न चानाम्नातस्य स्मृतिमूलत्वम्, नित्यानुमेय श्रुतिमूलत्वनिषेधात् । न च वाचकवाचकत्वनिबन्धनौ विधिप्रतिषेधौ सम्भवत सर्वेषां वाचकत्वात् । ‘ वाच-कैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते । अवाच-कनिषेधश्च नाप्राप्तेरवकल्पते ॥ ’ न शुद्धं पिबेदपि न पिबेदिति च विधिप्रतिषेधौ संभवत । अवश्य च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिरसाधुप्रतिषेधश्रुति श्च वा तयोरनुपपत्त्यात् कल्पनीयम् । नित्यपि च पक्षेषु साध्वनुशासनसाधनेव लोकर्मादाभिलम् । यदि ह्यपशब्दप्रतिषेधमूल व्याकरण तत्र तेषां बहु त्वात् अव्यवस्थितरूपत्वाच्च न स्वरूपमवगन्तु शक्यते इति ‘ पञ्च पञ्चनखा भक्ष्या. ’ इति स्मृतिन्यायेन अनुगतविपरीतभाषणप्रतिषेधोऽर्थात्सिद्ध स्मर्यते । साधुविधिपक्षे तु ते पर स्मर्तव्या । उभयपक्षे तदनु-गमादेव इतरसिद्धे प्रतिषेधविषयत्वोपपत्ति । स एव व्याकरणस्य पक्षत्रयेऽपि एकानुगमनिबन्धनत्वात् कथंचित् सङ्क्षेपोऽवकल्पते । ननु प्रतिशब्द विधिप्रतिषेधावकल्पेते । अनन्तत्वप्रसक्तानभिमतात् इष्टाभावदर्शनार्थमेव हीलाकर विवरणेऽभिहितम् ‘ न तथाऽऽकृतिवचनता व्याप्या, न

कस्यचित्प्रयोजनान्तरस्याश्रितम् । न च सर्वप्रधाने वस्तुन्य-नादरो युक्तः । मुख्यातत्वं पुनरीदृशं येनाद्यापि विवदन्ते ।

' धर्मश्च फलसंबद्धं कर्म यागादि वर्ण्यते । न च व्याकरणे किंचित्तादृक्कर्मोपदिश्यते ॥ धर्मत्वं यच्च विज्ञानशास्त्रपूर्वप्रयोगयोः । यथेष्टं वर्णितं तच्च न शास्त्रसदृशं मतम् ॥ ' शास्त्रार्थो हि निरूपितरूपो भवति । इह च ज्ञानधर्मत्वमुपन्यस्य अधर्मप्रसङ्गभीतेन [ पृ. २५७ ] शास्त्रपूर्वप्रयोगेऽभ्युदय इति वार्तिक-कारेणोक्तम् । भाष्यकार आह-- ' अथवा पुनरस्तु ज्ञाने धर्म ' इति । न चैवमनियमेन धर्मत्वावधारणं युक्तम् । ' संप्रयुक्तयोश्च धर्मत्वं यद्येकस्यावधार्यते । तद्वेतरस्य तच्छेषत्वान्न धर्मत्वेन गम्यते ॥ ' तदिह यदि तावत् ज्ञानमेव धर्मत्वेनावधारितं ततो लोक-प्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सम्यगभ्युप-कारनिर्वृत्तौ यजिनादिवत्प्रयोजनस्याभावः । शास्त्रपूर्वक-प्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात् । अनन्या प्रयोजनान्तराकाङ्क्षाया यद्यपि कश्चित्फले श्रुति-र्भवेत्साऽपि ' द्रव्यसंस्कारकर्म ' ( ४।३।१।१ ) इत्य-नेन न्यायेनार्थवादतया ज्ञायते । न हि समानाभ्यासो परस्मिन् फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायते इति वर्णितमेतत् । ' योऽश्वमेधेन यजते य उ चैनमेवं वेद ' इति । किंच-- ' आदिमत्त्वाच्च धर्मत्वं नैव ज्ञान-प्रयोगयोः । न हि व्याकरणापेक्षा वर्तते वैदिकी श्रुतिः ॥ ' यदा च ज्ञानं नित्येन वेदेनैव क्रियते तत्तत्पूर्वकप्रयोगविधानं कथंचोपपद्यते । व्याकरणज्ञानं तु पौरुषेयग्रन्थाधीनत्वात् मन्त्रार्थवादगतानित्यसंयोग-परिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते । ' न च व्याकरणे नित्यं कथंचिदवगम्यते । कर्तृस्मृतिदृ-दिष्टा हि नित्यपक्षनिराक्रिया ॥ ' अथापि व्यवहार-नित्यतान्यायेन पौरुषेयव्याकरणपरम्पराऽनादिः कल्प्येत तथापि ' अस्त तु शब्दपूर्वत्वम् ' ( १।१।८।२९ ) इत्यस्य न्यायस्य स्थितत्वात् । अनेकपुरुषकृतमपि तद्व्याकरणं वेदान्यथात्वं न प्रतिपद्यते । ' न च व्याक-रणान्तरस्या जातिः काचिद्व्यवस्थिता । अनित्ये धात्वसंपाते सा जातिः क्वावतिष्ठताम् ॥ '

अथ ' लक्ष्यलक्षणे व्याकरणम् ' इति सत्यपि लक्षणा-ग्रहनिमित्ते व्यवहारेण नित्येन नित्यो विधिरुपपत्स्यते इति । तदनुपपन्नम् । कुतः-- ' अत्यन्तभिन्नरूपत्वा-ल्लक्ष्याणां लक्षणाद्विना । नैकमालम्बनं किंचिद्वि-धेरस्तीत्युदाहृतम् ॥ ' ननु वेद एव व्याकरणनियमो दृश्यते । यथाऽऽह-- ' तस्मादेषा व्याकृता वागुद्यते ' इति । नैतदस्ति । ' व्याकृता संप्रदायेन वाणी नित्यैव वैदिकी । अनूदितोच्यमानेयं कर्मस्वाध्यायकाल-योः ॥ ' अव्याकृताया हि लौकिक्या वाचः शिष्याचार्य-संकेतेन स्वरवर्णमात्राक्रमैरविप्लुतरूपैर्निरूपिताकारैरेव वैदिकी व्याकृतेत्युच्यते । तस्याश्च मन्त्रब्राह्मणादिरूपाया-यास्तु ज्ञाने प्रयोगे च धर्मोऽस्त्येव । यदपि च ' एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति ' इति तदपि स्वाध्यायप्रशंसाशेषभूतमेव । ' अहरहः स्वाध्यायमधीयीत ' इत्यत्र ' अप्येकामृचं यजुः साम वा ' इत्येतदवयवकर्तृ यथानियमार्थमुक्तम् । ' योऽपि मन्त्रं समस्तं हि नाधीयीताप्यशक्तितः । तस्य शास्त्रान्वितः शब्द एकोऽपि स्वर्गकामधुक् ॥ ' शास्त्रान्वित इति च यथास्वाध्यायमनुगत इत्यर्थः । सम्यक्प्रयुक्त इति चोपनयनोपसदनगुरुशुश्रूषादर्भपविप-पाणित्वादीति कर्तव्यतोपपन्नत्वाश्रवणेनोक्तम् । यदपि च ' तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः ' इति, तत्संप्रदाया-गतवैदिकशब्दविनाशप्रतिषेधार्थमेव । वैदिकापेक्षया लौकिकस्य अपशब्दत्वं संभवति । तद्वत् च । न च लौकिकादन्यपेतोऽपशब्दो नाम कश्चिदस्ति । गा शब्दी-नामपि गव्यादीनां श्रोत्रव्यवहारेण शब्दशब्दवाच्यत्वशब्द-बुद्धिव्यवहारशब्दत्वानुपपत्तेः । अथापि यद्वत् लौकिकादपि अपेतोऽपशब्द आश्रयणीयः । तथापि ' न म्लेच्छभाषां शिक्षेत ' इत्येवमादिस्मृत्यनुसरणेन हिमवद्विन्ध्यान्तरालकृष्णमृगसंचरणानुपलक्षितधर्माधि-कारार्यावर्तनिवासिव्यतिरिक्तपारसीकादिभाषागतस्य म्लेच्छ-त्वसमानाधिकरणापशब्दत्वज्ञानात् तेन भाषणप्रति-षिध्यते । युक्तं च तत्संपातदीयाचरणपरिहरणीयत्व न त्वार्यावर्तनिवासिप्रयुक्तेषु गाव्यादिषु म्लेच्छति-

ण्यः तत्र समासलक्षणा गुणवचनसंज्ञा नाभिहिता। 'गुणवचनब्राह्मणादिभ्यः' (पा. ५।१।१२४) इति लक्षणेनासंस्पृष्ट एव ष्यञ् प्रयुक्तः। भाष्येऽप्यनिर्दिश्य कन्यायेनेति द्वन्द्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थाया सुपः 'सुपो धातुप्रातिपदिकयोः' (पा. २।४।७१) इति प्रत्ययोपदिष्टोऽपि लुङ्न कृत। तथाऽन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार इति। 'अन्यथैव कथम्' (पा. ६।८।९७) इत्यन्वाख्यातसाधुत्वोऽपि णमुल् न प्रयुक्तः। न चैषा निपातनैः साधुत्वसिद्धिः। कुतः। 'येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः। अन्यथानुगतानां तु प्रयोगं बाधते स्मृतिः॥ स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी। प्रत्यक्षप्रतिपेधाच्च जनिकर्त्रादिसाधुता॥' प्रत्यक्षस्मृतिविरोधे तु लक्षणरहितस्यापि प्रयोगादेव शिष्टाचारभूतादयपरानुगमस्मृतिमनुमाय निपातनात्साधुत्वसिद्धिः। न च लक्षणशब्दानां स्वात्मनि क्रियाविरोधादात्मार्थता भावाद्वा लक्षणानुगतिरनादरणीया। 'प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते। देशान्तरस्थित शब्दो लक्ष्यभूतोऽन्यशब्दवत्॥' [पृ २६१] तथा च 'कुतः कस्मात् भवति वृद्धि' (म. भा) इति। योऽयं शब्द इत्यादिषु लक्षणानुगमादर सर्वथाऽऽश्रित। यदि च लक्षणशब्देषु लक्षणं न प्रवर्तेत, तत सर्वं व्याकरणमपशब्दैरेव निबद्धं स्यात्। अर्थैकत्वदर्शनात्तु प्रमाणलाघवहानिः। अथोच्येत यज्ञप्रयोगविषय एव साधुभाषणनियमो न सूत्रकारव्याख्यानादिक्रियास्विति। तदयुक्तम्। 'स्वर्गे लोके कामधुक्' इति फलश्रवणेन यज्ञात्। सारस्वतीविधानादि(?)साभिग्रहणार्थत्वात्। इतरथा ह्याहिताग्निरेव यज्ञेष्वधिक्रियेत इति तद्दोषाद्व्यभ्युपगमे नियमो जनयेदाऽऽहिताग्निमात्र भवेत्। योऽपि च ज्योतिष्टोमप्रकरणे वाक्यशेषविना 'तस्माद्ब्राह्मणो न म्लेच्छेत्' इति प्रतिषेध धर्माङ्गत्वेन श्रूयते सोऽपि शुद्धप्रदायकृतप्रयोगविनाशनियम एव म्लेच्छभाषाप्रतिषेधार्थो वेति पूर्ववदेव नेतव्य। यदपि च 'वेदाः छन्दसाम्' (म. भा. पस्प.) इति प्रधानतरं 'लौकिकानां वैदिकानां च' इति विवेकवचनं तदपि बहूनां तावत् प्रत्यक्षप्रत्यभिज्ञानाल्लोकवेदयोरभेदे सति लोकप्रसिद्धमाश्रयेण नैवेदमत्यन्तभेदाश्रयणदर्शनमभिधीयमानं शोभते न च लौकिकमध्ये गौरश्व पुरुषो हस्ती त्येवमादय सर्वे वेदलक्षणा वेदादेव चोद्धृत्य लोकेन प्रयुक्ता उदाहर्तुं न्याय्या। य एव हि भाषायामित्येव स्मर्यते, न च क्वचिदपि वेदे दृष्टपूर्वा इत्येवं समाधयितुं शक्यन्ते त एवोदाहर्तव्या। वैदिकोदाहरणेष्वपि च लोकप्रसिद्धा एव शमादय उदाहृता। न च वाक्योदाहरणेन लौकिकेभ्यो भिद्यन्ते। वाक्यानां व्याकरणेनानन्वाख्यानात्। अत छन्दसान्येव कानिचित् 'गृभ्णामि' 'इन्द्राग्नी' इत्येवमादीनि उदाहर्तुं योग्यानि न 'शं नो देवी' इत्येवमादीनि। छान्दसोदाहरणे च कुत 'सिद्धे' 'लौकिक' इत्यनेन प्रत्यासन्नेन व्याहन्येत। यदि च लौकिकानामन्वाख्यानं क्रियेत तत सुतरां गवादय एव नाग्न्यादयस्तेषा पृथक्त्वेन लौकिकता वेदे प्रयोगात् पुनरप्येतद्भिन्नेदाद्वेदो दुर्लोऽध्य प्रयुक्त इति शक्यं वक्तुम्। तथा च मनुना ऽप्युक्तम्। 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' इति। ईदृशत्वे वाऽऽरत्वेऽपि श्रोत्रिया लौकिकेऽप्यर्थे विवक्षिते तद्रूपाधमानयान् सङ्कल्पमात्रमप्युदाहरन्ति मिमङ्क पुन पाक्षान् पदानि वा। न चाऽऽभिप्रतिपदपाठाना वैदिकाना लक्षणेन कार्यम्। न चैषा गुरुगुरुसाधीयो लक्षणमस्ति 'दृष्टानुविधिश्छन्दसि' इति स्वयमेव लक्षणस्याऽऽम्नानाधीनत्वेन मन्त्रप्रयोगस्योक्तत्वम्। 'यथैव लोकसिद्धानां कृपादेर्लक्षणं वृथा। तथैव वेदसिद्धानां शब्दानां लक्षणं वृथा॥ रक्षाद्यपि यदप्रोक्तमन्त्रव्याख्यानप्रयोजनम्। न तदप्यन्यत सिद्धेरप्रसिद्धेस्ततोऽपि वा॥' [पृ २६२] शिष्याचार्यैरत्यो हि महान् वेदरक्षाहेतु व्याकरणानधीनस्यापि वेदस्यास्याध्ययनेनैव रक्ष्यमाणत्वात्। तद्विनाशोऽपि च विशिष्टलोपप्रसङ्गात्। उक्तं च 'निराशङ्की भवेन्नूनं येन तन्नाम लक्षणम्। ज्ञानसमात्रसिद्धौ तु तेन मन्द प्रयोजनम्॥ समाम्नायप्रसिद्धेऽपि सामवेदेऽस्ति लक्षणम्। तत्तुक्तं कृत्स्नसिद्धित्वात्तत्स्वार्थेन पार्षदम्॥'

यतः पदार्थसंदेहास्तावद्दृष्टो वृद्धव्यवहारादेव निवर्तन्ते । शेषाश्च निगमनिरुक्तव्याकरणकाभियुक्तेभ्यः सर्वेषां अर्थप्रतिपादनपरत्वात् । व्याकरणेन पुनरत्यन्तं कृत्यार्थं पदस्वरूपमात्रे अन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम् । तथाहि ' धातुभ्यः कल्पिते नाम्नि क्रियायोगोऽनुगम्यते । न चाभिधानवेलायां तत्प्रतीतिर्मनागपि ॥ ' ' गमेर्डोः ' ( उणादिसू. २३९ ) इत्येतद्रूपप्रत्यनुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यवस्येत् । जातिशब्दश्चायं वृद्धव्यवहारेऽवस्थितो यत्र प्रसिद्धस्तत्रानागतश्च । तथा च ' कुशलोदारशब्दादेर्योगस्त्वनुगमस्थितः । न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते ॥ अश्वकर्णाजकर्णादौ समासानुगमे सति । अपेतावयवार्थोऽर्थो दृश्यते वृक्षशब्दवत् ॥ एवं राजन्यशब्दादेरयतत्त्वायनादरः । व्याक्रियाविपरीतोऽपि स्थितो लोकप्रसिद्धितः ॥ तथा वेदविरुद्धेऽर्थे दृष्टं शब्दानुशासनम् । तत्तथा यदि गृह्येत वेदाङ्गत्वं विरुध्यते ॥ ' ' कल्यैङ्क्' ( पा. ४।२।८ ) ' वामदेवाड्ड्यड्ड्यौ ' ( पा. ४।२।९ ) इति कलिवामदेवदृष्टसामाभिधानप्रतिपत्तिः वैयाकरणस्य [ पृ. २६७ ] भवति । वेदे तु ' ततो यमु वाम उपमवन् तस्माद्वामदेवं यम् ' ' यद् कालयत्तत्कालेयस्य कालेयत्वम् ' इत्यात्मर्थं यु पश्चिद्दर्शन व्याकरणानुसारिणी प्रतिपत्तिं बाधते । तथा कल्पसूत्रकारैः ' कृष्णवा वासः कृष्णतूल्दे अजिने ' इत्येवमादिषु कृष्णदन्तादिविशेषणत्वभ्यगाद्व्याकरणादाविनाप्यनवगता अथा वेदार्थविवरणपरायणता वेदवाक्यगोचरार्थान्वयसूत्रादि शब्दार्थाश्च व्याख्यायन्ते । यथा चैवमादिषु व्याकरणानपेक्षणमेव निरुक्ताभ्यर्थनिरूपिता स्थूलपृषत्यादि शब्दार्थेष्वपि व्याख्यानुसरणेन निर्णयउमेति न व्याकरणमपेक्षितव्यम् । किंच ' वाक्यार्थेषु च संदेहा जायन्ते ये सहस्रशः । नैषां व्याकरणात्कश्चित्पूर्वपक्षोऽपि गम्यते ॥ '

यदि वेदस्य संदेहप्रयोजनं व्याकरणं भवेत् ततः क्रिमर्थमतः स्वरूपा कविदर्थं प्रतिपादयत्यथ विवि देवभूताः । तथा किमूर्धवर्णघनमौद्गमदल्यस्य फल्गुन प्रशस्तार्थमुपात्तमिति । तथा हेतुविधिहेत्वर्थवादमन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु ग्रहैकत्वविवक्षादिषु च संदेहा नपनयेत् । अथैवमादिषु मीमांसासिद्धत्वाद्व्याकरणेऽनुपन्यासस्तत्र कल्पसूत्रकारवचनसिद्धकतिपयस्थूलपृषत्याद्यर्थनिर्णयप्रयोजनता सुतरां नाऽऽश्रयणीया । अपि च ' लक्षणोत्थेऽपि संदेहे व्याख्यानादेव निर्णयः ॥ वेदशब्देष्वपि व्याख्या नैव दण्डैर्निधार्यते ॥ ' ' व्याख्यानतो विशेषप्रतिपत्तिः ' ( महाभाष्ये प्रत्याहाराह्निके लण्सूत्रे ) इत्यनयैव परिभाषया न हि संदेहादलक्षणमितिवत्र हि संदेहादवेद इत्यपि शक्यं वक्तुम् । ' न चागृहीतशब्दार्थैः कैश्चिद्व्याकरणाश्रयात् । व्याख्यातु शक्यते वेदो यतः स्यात्तेन निश्चयः ॥ यथैवावस्थितो वेदस्तथा व्याख्याऽपि सर्वदा । अतः स्थूलपृषत्यादिव्याख्या व्याकरणादृते ॥ न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः । व्यवहाराद्बहिर्भूतात्स्वरान्नातोऽर्थनिश्चयः ॥ '

वृद्धव्यवहाराधीनं शब्दार्थावधारणं तत्र च समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरत्वादिप्रयोगविभागाभावात् न तत्कृतोऽर्थविशेषावगतिः । ' यत्र स्वरितः स्वरस्थाने वेदवाक्येष्वपि श्रुतम् । तत्र नैव पदार्थानामवधारणसंभवः ॥ [ पृ. २६८ ] तत्रापि निर्णयो यः स्यादर्थप्रकरणादिभिः । तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधाङ्गता ॥ तेनादृष्टार्थ एवायं स्वरपाठोऽवगम्यते । सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥ '

व्याकरणानुगमोऽपि चास्य यदि नाम कथंचित्तत्प्रयोगार्थं एव भवेन्न तु लौकिकप्रयोगार्थः । अत्यन्ताप्रयुक्तत्वात् ।

' न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णयः । शब्दानुशासनं ह्येतद्दृष्टं नार्थानुशासनम् ॥ ' तस्मात् असंदेहार्थमपि नाध्येयं व्याकरणम् । न ह्येतदर्थनिश्चयाद्भूतस्वरविशेषप्रयोगोपरचितशास्त्रम् । यान्यपि च ' इमानि भूयः शब्दानुशासनस्य प्रयोजनानि ' इत्येवमुक्तान्यन्यानि तेषामपि कानिचित्प्रयोजनत्वेनोपन्यस्तान्येव न संभवन्ति, कानिचित्प्रयोजनाभासानि, कानिचिदप्रमाण-

कानि । अपि च— ' अर्थवत्त्वं न चेज्ज्ञातं सुदूरेऽस्य प्रयोजनैः । तस्यानुपङ्क्तिकेष्वाशा कुशकाशावलम्बिनी ॥' तत्र यज्ञार्थेऽनुप इत्याद्यमुष्णुषस्यार्थ वादप्रसङ्गेऽपशब्दप्रतिषेधः प्रयोजनत्वेनोपन्यस्तः । यथा चाखिलस्तयोक्तं प्राक् । दुष्टः शब्दः इत्यत्रापि महाजनप्रसिद्ध- शिक्षाकारपठितमन्त्रदोषद्वारेण शब्दस्य प्रक्षिप्तता स्वपक्षानुरागो दर्शितः । दुष्टमन्त्रप्रयोगे निष्फले एव यजमानस्य प्रत्यवायः । ' यद्धोता जहाति वाग्भिः कृत्स्नमान जहाति ' इत्येवमादिभिः सर्वत्रिकप्रयोगमन्त्रनिमित्तेषु यजमाननाशितदोषदर्शनात् । तथा च ' इन्द्रशत्रुर्वर्धस्व ' इति मन्त्रप्रयोगविनाशदोष एवोदाहृतः । यत्तु निरुक्ते ' यदधीतमविज्ञातं निगदेनैव शब्द्यते ' ( अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिदिति शेषः ) इत्युक्तम्, तदस्माभि प्रथमसूत्रे एवार्थगन्धं व्याख्याने स्वाध्यायमृत्पत्तिक्रम कारणत्वेनोपवर्णितम् । ' अनतिक्रामन्तो वेदमर्थवन्त सन्तमनर्थकमनाश्रयेम, एषो हि तस्यार्थः कर्मावबोधनम् ' इति । तदव्याख्यातेन वेदेनार्थप्रकाशना करणात् ' न तज्ज्वलति कर्हिचित् ' इति । सत्यमेवैतत् । न तु व्याकरणस्य तत्रोपयोगः । कर्मप्रयोगोपपत्ति प्रत्यक्षान्तरत्वात् । शब्दशास्त्रमेतदिति चैवमप्यपूर्वोक्तेन निर्मूलत्वेन न व्यवस्था स्यात् । तस्मात्कल्पसूत्रनिरुक्तमीमांसानामेव अधीतमन्त्रब्राह्मणार्थविज्ञानोपयोगश्च वादेव प्रयोजनं युक्तम्, न तु व्याकरणस्य । 'यस्तु प्रयुङ्क्ते' ( ' यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥ ' म. भा. ) इत्ये- [ पृ २६९ ] तदपि मन्त्रब्राह्मणशब्दस्य सम्यक्प्रयोगप्रयोजनमेव विज्ञायते । यथासमाम्नातादन्यथाकरणाच्च ' दुष्यति चापशब्दैः ' इति । स्वाध्यायाध्ययनाध्यापनयज्ञयाजनगतवेदशब्दविनाशोऽपि ' यद्भवो यत्र आर्तिमियात् ' इति । एतद्वचनाद्यत्र दोषानुवादोऽपीत्यवगम्यते । ' वाग्योगवित् ' इति च मुख्ये वाक्यव्यवहारदर्शनाद्विविक्तपदपदार्थसम्बन्धः एवात्र, ब्राह्मणवाक्येषु चोद्यमानोपादीयमानगुणप्रधानादिनिरूपणाद्धुनावचनव्यक्तिविशेषो मन्त्रेषु च अवगतचोदिताचोदितकार्यपदार्थप्रकाशनाद्विज्ञानहेतु विदः च वाग्योगविदित्युच्यते न वैयाकरणः । वैयाकरणस्यैव विप्रयोगोत्पत्त्यशक्यत्वात् । ' यद्यप्यविद्वांसः ' ( ' अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥ ' इति महाभाष्ये व्याकरणस्य स्त्रीसाम्यपरिहारप्रयोजनत्वकथनार्थमुपन्यस्तः श्लोकः ) इति, प्रत्यभिवादे नामान्त्यस्वरप्लुतानभिज्ञनिन्दावचनम्, तत्प्लुतस्य निमित्तस्य लोकप्रसिद्धत्वात् मन्त्रानुपदिष्टनामान्त्यप्रयोगसिद्धौ कथाया तत्प्रयोगोत्पत्त्यशक्यत्वम् । न च तावता मन्त्रादिभिरनेन चोदाहृतेन श्लोकेन प्रकृतिप्रत्ययादिविभागद्वारेण शब्दापभ्रंशविवेकज्ञानं तदुपयोगो वाऽऽश्रीयते । यच्च ' प्रयाजाः सविभक्तिकाः कर्तव्याः ' इति तच्छास्त्रोपदेशसिद्धत्वात् ब्राह्मणे च षडहविभक्तयः ' अग्निर्वृत्राणि जङ्घनत् ' ' अग्निं यो वृत्रहन्तमम् ' ' अग्निनाऽग्निः समिध्यते ' इत्येवमादिविभक्तिविभक्तिप्रयोगदर्शनादन्तरेणापि व्याकरणं वैभक्तिकमन्त्रालोचनेनापि वा सविभक्तिकप्रयाजप्रयोगसिद्धेरशास्त्रं व्याकरणम् । ' यो वा इमाः पदशः स्वरशो यान विदधाति स आर्त्विजीनो भवति ' ( कास. ५।१।२२ ) इति सम्यग्वेदाध्यायैरभिधीयते । तथा ' चत्वारि वाक्परिमिता पदानि ' इति यानि तावदोङ्कारमहाव्याहृत्यादिचतुष्टयगतानुत्पत्तिप्रयोजनानुसरणेन नैरुक्तैरप्यक्षरवर्णसामर्थ्याभिर्निर्वृत्तिवत्प्रकल्पितानि, न तत्र व्याकरणस्य कश्चिदधिकारः । यत्तु नामाख्यातोपसर्गनिपातचतुष्टयानुगतं वैयाकरणमतमाश्रितं तदपि चतुष्टयस्य लोकसिद्धत्वादेव नातीव व्याकरणापेक्षम् । एतद्विषयत्वे च वर्ण्यमाने ' तुरीयं वाचो मनुष्या वदन्ति ' इत्यसङ्गतमेव स्यात् । चतुर्णामपि पदजातानां मनुष्यैरुच्यमानत्वात् । तस्मादयमस्य मन्त्रस्यार्थः पौर्वापर्यगतो वर्ण्यते । ' चत्वारि वाक्परिमिता पदानि ' इति यैर्वाक्पद्यते गम्यते तानि चत्वारि प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणान्यभिधीयन्ते । तत्र यानि मनीषिभिरविशकलितैर्हेतुवाक्यसामर्थ्याद्दृष्टानुपपद्यमानादिप्रमेयैरनुमानोपमानार्थापत्त्याख्यैस्त्रिभिर्गम्यन्ते, तानि सर्वसद्वस्त्वादेव वेदयन्ति नोच्चारयन्ति । यत्तु भागस्तैरवाक्यं प्रतिपादयितुं न तुरीयं प्रत्यक्षसमधिगम्यमध्येतारो मनुष्या वदन्ति तथा

क्षणाच्च स्यात्क्षणान्तरे । तादृशस्य च संस्कारो न शक्यो नोपयुज्यते ॥ तस्मादनियमं मुक्त्वा नित्यः संस्क्रियते यदि । विक्रियाख्योऽपि संस्कारस्ततो नैवास्य संभवेत् ॥ विना व्याकरणाद्व्याप्तिः सिद्धा श्रोत्रसमाश्रया । अदृष्टार्थस्तु संस्कारो विध्यभावान्न गम्यते ॥ [ पृ. २७२ ] दृष्टार्थेषु च शब्देषु नादृष्टेन प्रयोजनम् । न हीदं भोजनार्थानां व्रीहीणां प्रोक्षणात्फलम् ॥ कर्मप्रकरणाम्नाता न च व्याकरणक्रिया । येनापूर्वप्रयुक्तानां शब्दानां संस्कृतिर्भवेत् ॥ हन्त्यादिविधियत्नापि संभवी व्याक्रियाविधिः । पौरुषेयं कथं यत्तु विद्ध्याच्छास्त्रतो विधि. ॥ तेनानारभ्यवादेऽपि विधिर्नैवास्ति तादृश. । अनारभ्य विधित्वे च न कर्मार्थत्वसंभवः ॥ ऐकान्तिकं हि संस्कार्ये यत्कृतौ स्यात्क्षुरादिवत् । तद्द्वारेण क्रतुप्राप्तिर्न लोकव्यभिचारिणः ॥ लोकवेदगतत्वाच्च शब्दानां व्यभिचारिता । अतो न व्याक्रिया गच्छेत्तदुपस्थापितं क्रतुम् ॥ आकाशेऽवस्थितः शब्दः संस्कर्तुं शक्यते कथम् । नित्यत्वान्मूर्त्यभावाच्च व्योमाश्रितविभुत्ववत् ॥ वर्णसंस्कारमात्रं च यदि व्याकरणाद्भवेत् । प्रत्याहारेण तत्सिद्धेर्नोत्तरेण प्रयोजनम् ॥ समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति । प्रत्येकं च भवेयुस्तद्भिन्नधर्माः प्रतीष्टकम् ॥ न च स्वतन्त्रारम्भो वर्णैः शब्दस्य कस्यचित् । येन तत्संस्कृतिः सिध्येत्स हि पूर्वं निराकृतः ॥ स्फोटगोशब्दसास्नादिमत्त्वप्रभृतौ पदकल्पना । गकारादिपदव्याख्याद्वारेणैव निराकृता ॥ सर्ववर्णसमूहोऽपि न संस्कार्यः कथंचन । न तस्यार्थप्रयुक्तत्वमस्ति ह्यनभिधानतः ॥ अथ निचतुरा वर्णाः संस्क्रियन्ते पदे पदे । संख्यामात्रस्य साधुत्वं तथ स्यादितरेष्वपि ॥ संस्क्रियेतानुपूर्वी चेच्छब्दधर्मो न सेष्यते । ग्रहणोच्चारणस्थत्वाद्वान्यादिषु च संभवात् ॥ ग्रहणोच्चारणे एव संस्कार्ये यदि मन्यसे । कर्मण. कर्मसाध्यत्वमुपरिष्टान्निषेत्स्यते ॥ '



[ पृ. २७३ ] वक्ष्यति हि– ' कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ' ( ३।१।१०।१९ ) इति । ' ताल्वादिश्रोत्रसंस्कारो न च व्याकरणाद्भवेत् । वेदोपदिष्टसंस्कारसंस्कार्यत्वावधारणात् ॥ मनो वा पुरुषो वाऽथ संस्कारास्पदमिष्यते । शब्दानुशासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥ शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते । शब्दस्यानुशास्यत्वाद्व्यर्थं तदनुशासनम् ॥ स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते । असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥ वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः । नामाख्यातादि ( आदिशब्देन निपातोपसर्गयोः परिग्रहः ) संस्कार्यं तेषां शशविषाणवत् ॥ अपोद्धारेण संस्कारो यथत्राभ्युपगम्यते । शृङ्गं गवादपोद्धृत्य किं न संस्क्रियते मनाक् ॥ अन्यानयनमारूप्यादपोद्धारो यदीष्यते । नरशृङ्गेण सारूप्याच्छशशृङ्गस्य किं न सः ॥ गवयादिषु नाम्नानां सादृश्यं यन्निदर्शितम् । सत्यावयवसामान्याच्चदिहापीष्यते तथा ॥ वाक्याधिकरणे चैतद्विस्तरेण निराकृतम् । तेनापोद्धारसंस्कारकल्पनाऽपि न युज्यते ॥ अन्वाचक्षीत शास्त्रं चेच्छब्दानसदपोद्धृतान् । एतेनैवाप्रमाणत्वमस्य माहेन्द्रजालवत् ॥ अशिष्यत्वादशास्त्रत्वमेवं तावत्पदं प्रति । वाक्यानुशासनं नैव कृतं व्याकरणेन च ॥ अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता । वाक्यमेवंविधं चेष्टं न पदान्यर्थवर्जनात् ॥ ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥ '

इति बहुप्रपञ्चमुक्त्वा केवलस्य व्याकरणस्य प्रयोजनवत्त्वं निराकृत्य वाक्यान्वाख्यानार्थमेव व्याकरणमपि व्याख्यानयुक्तमासीत् तदनाश्रयणात्तु सूत्रवार्तिकभाष्यकारवदेव [पृ. २७४] पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां व्याकरणस्य अप्रत्ययितपुरुषप्रणीतत्वं दर्शितम् । ' असौ निगमभूयिष्ठाद्विरुद्धान्मूलवर्जितात् । निष्फलाच्च व्यवस्थानं शब्दानां नानुशासनात् ॥ ' ततश्च–

' स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगश्च कर्मसु । शेषशब्दप्रयोगेषु न व्यवस्थोपयुज्यते ॥ ' तेन सर्वैर्भाषितव्यं सर्वे साधव इति । अत्रानुमानप्रयोगाः– ' गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः । वृद्धैस्तत्र प्रयुक्तत्वाद्गौरित्येवमादिवत् ॥ एवं साधुत्वमेतेषां सर्वेषामर्थसाधनात् । श्रौतत्वा- त्स्वापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥ अनादित्वं च सर्वेषामव्यवच्छेदधारणात् । वक्तुर्वक्तुः पुरो वृत्ते· शक्यं वक्तुं गवादिवत् ॥ साधुभिर्भाषमाणानां नादृष्टफलसंभवः । दृष्टार्थत्वाद्यथा धूमादग्नि वेदोऽवगच्छताम् ॥ अशास्त्रविहितत्वाच्च वृद्ध- शब्दाभिधानवत् । शास्त्रं नावेदरूपत्वात्साकुन्त- व्यानिक्यादिवत् ॥ वेदमूलतयाऽप्यस्य प्रमाणत्वं न कल्पते । अनेदविषयार्थत्वान्नाटकादिनिबन्ध वत् ॥ शास्त्राङ्गमपि नैतत्तदतादर्थ्यात्कथादिवत् । अतादर्थ्यं विनाऽप्यस्माद्वेदेनार्थावशोधनात् ॥ न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन्प्रवर्तनात् । यदीदृशमनङ्गं तद्दृष्टं नेत्रानुमानवत् ॥ ' यथा हि चक्षुरादिग्रहणानपेक्षमन्यादिविज्ञानसिद्धौ तन्निनार्थोपत्ति प्रभव चक्षुराद्यनुमानमुपजातमपि न पूर्वज्ञानस्याङ्गमेवं लोकेनेदमिदं शब्दप्रयोगोत्तरकालप्रणीततया व्याकरणमप्य- नङ्गम् । 'तस्मात्पर्यायशब्दत्वाद्गाव्यादेस्तरुवृक्षवत् । आचारेण प्रयोऽयत्वं न शास्त्रार्थनिवारितम् ॥ '

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् । २५ ॥

भाष्यम्-– महता प्रयत्नेन शब्दमुच्चरन्ति– वायु- र्नाभिदेशोत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धान- माहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दान- भिव्यनक्ति । तत्र अपराध्येताप्युच्चारयिता । यथा शुष्के वरिष्यामीति कर्दमे पतति, सकृदुपस्प्रक्ष्यामीति द्विरुप स्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुर्न नियोगतोऽविच्छिन्नपारम्पर्या एवेति ।

वा.– एवं प्राप्ते अभिधीयते– 'अनैकान्तिकता तावदर्थापत्तेरिहोच्यते । अन्यथाऽप्युपपन्नत्वा- त्प्रयोगार्थावबोधयोः ॥ वाचकत्वादनं यत्तु न कथंचित्प्रयुज्यते । प्रयोगप्रत्ययायत्ता तत्र वाचकता ध्रुवम् ॥ संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये । इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ॥ ' दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादाति- भारादर्धैकदेशावतारणार्थं संशयोत्पादनामात्रमेव तावत् युक्तम् । अथवा– ' संसिद्धव्यवहारत्वादनादित्वं यदाश्रितम् । अपराधप्रसङ्गेन तत्रैषा संशय- क्रिया ॥ ' यदि ह्येकान्तेन यादृशः परमुखाच्छब्दः श्रूयते तादृशेन सर्वेण सर्वदोच्चार्येत ततो वृद्धव्यवहारपरम्परायां यथा गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य आसीदित्यध्यवसायादनादित्वमङ्गीक्रियेत । अपराधवशस्य शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वे- षामनादित्वम् । प्रयत्ननिष्पत्तेरिति पूर्वोक्तन्यायावधारित- प्रयत्नाभिव्यक्तिरेव हेतुत्वेनोपदिश्यते । अपर आह । अप्रयत्ननिष्पत्तेरपराधस्य भागितेति । यो ह्यस्खलित- प्रयत्नः शब्दमभिव्यनक्ति तस्य परम्परागतशब्दोच्चारण- मात्रात्सर्वे समानविधाना भवेयुः । यदा त्वप्रयत्ननिष्प- त्तिरपि शब्दे संभाव्यते तदा तत्रापराधजरूपान्तरापत्ति- प्रसङ्गाच्च नियोगतः सर्वशब्दानां समानविधानत्वम् । अथवा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिस्तस्याम- पराध सुनिपुणानामप्यविकलकरणानां दृश्यते किमुता- निपुणनिर्गुणकरणानाम्– यश्च प्रयत्ननिष्पत्तावप- राधः कृतास्पदः । शब्दे स तदभिव्यङ्ग्ये प्रस- ज्येत धार्यते ॥ अतश्चापराधेन व्यज्यमानेषु साधुता । सापराधेष्वसाधुत्वं व्यवस्थैवं च तद्वशा ॥ ' लोकेऽपि च– ' अविनष्टे विनष्टे च दृश्येते साध्वसाधुने । तथा सति च तद्द्वारा सिद्धिः शब्दापशब्दयोः ॥ यद्वा सत्यत्वमेवेष्टं साधुत्वमभिधीयते । असत्यत्वमसाधुत्वं धर्माधर्मो- पयोगवत् ॥ धर्माधर्मव्यवस्था हि सत्या- नृतनिबन्धना । विहितप्रतिषिद्धत्वात्तयोश्चेष्टा समाश्रिता ॥ अर्थसत्यं यथा वाच्यं शब्दसत्यं तथैव हि । शब्दानृतं च हातव्यमर्थानृतवदेव न. ॥ एवं सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत् । प्रयोगो- त्पत्त्यशास्त्रत्वादिति हेतोरसिद्धता ॥ ' अथवा यदु-

त्तम् ‘ साधोर्नित्यप्रसक्तत्वादसाधोरप्रसङ्गत । न धर्मनियमोऽस्तीति तत्रेदमभिधीयते ॥ अपराधस्य भागित्वादुभयं सापकाशकम् । साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता ॥ ’ यदि हि साधुः प्रयुज्यमानो न कश्चित् कदाचिदपि विनश्येत्ततस्तस्य नित्यप्रसक्तत्वात् निवर्त्यापशब्दाभावेन नियमशास्त्रमनर्थकं भवेत् । यदा तु अपराधभागित्वे सति द्वयोरप्यनियता प्राप्तिस्तदा साधुनियमकारिणः शास्त्रस्य न विषयाभावः । एक एवायं शब्दः पुरुषाशक्तिप्रमादकारणादिभेदाच्चा ता वर्णन्यूनातिरेकान्यत्वान्यथात्वमनुपतस्तेन तेन अपभ्रंशरूपेण गृह्यमाणः तमेवार्थं प्रतिपादयतीति न पर्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः । किञ्च, ‘ देवदत्तादिनामानि नि सन्दिग्धानि यानि च । यानैस्तत्तादिरूपेण नाश्यन्ते तेष्व संशय ॥ ’ दत्तादिशब्दादपि हि बालप्रयुक्तात् तदनुकारिकठोरबुद्धि-प्रयुक्ताद्वा देवदत्तार्थप्रत्ययमुपलभमानः कथमिव प्रयोग-प्रत्ययदर्शनाभ्यामेव वाचकत्वमध्यवस्येत् । ‘ अप भ्रंशाश्च ये केचिद्रूढा गाव्यादयो जने । तेऽपि गाव्यादिरूपेण नाश्यन्ते व्यभिचारिता ॥ ’ कतिपुचिदेव गाव्यादिषु चिरापभ्रंशाद्व्याशङ्कया साधुत्वभ्रान्तिर्भवेत् । ये तु तथैव अज्ञप्रायज्ञानकर्ण-रभिनवगाव्यादिरूपेण विनाश्यमाना प्रयुज्यमाना प्रकृत्यनुसरणद्वारेण या अर्थं प्रत्यापयन्त उपलभ्यन्ते, तेष्वपि प्रयोगप्रत्ययदर्शनमस्तीत्यनैकान्तिकता । ‘ ततश्च स्वप्रयुक्तोऽय हेतुरप्यपराधभाक् । अनैकान्ति पतादोपात्र ह्यसौ साधनक्षम ॥ अन्यथोच्चार्य-माणश्च शब्दोऽपभ्रश्यते यथा । तथा हेतुरने-कान्ताद्धेत्वाभासत्वमृच्छति ॥ तस्माद्दृष्टप्रयोगे ऽपि पुनरस्ति विचारणा । वाचकोऽय न वेत्येव सति चाऽन्येन निर्णय ॥ ’

अन्यायश्चानेकशब्दत्वम् । २६ ॥

भाष्यम्— न चैष न्यायो यत्सदृशा शब्दा एक-मर्थमभिनिविशमाना , सर्वेऽविच्छिन्नपारम्पर्या एवेति । प्रत्ययमात्रदर्शनात् अभ्युपगम्यते साध्वसाधुशब्दे-ऽप्यवगते प्रत्ययोऽवगम्यते । तस्मादेषामेकोऽनादि-रन्येऽपभ्रंशाः । हस्त कर पाणिरित्येवमादिषु त्वभि युक्तोपदेशादनादित्वमीषामर्थेन सम्बन्ध इति ।

वा— सदृशापादनात्परपक्षे जितेऽपि स्वपक्षसिद्धि र्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम्— ‘ अन्यायश्चानेकशब्दत्वम् ’ इति । कथं पुनरिदमन्याय्यम् । तदुच्यते— ‘ वाच्य-वाचकसामर्थ्यनियमो योऽभिधानत । सनन्य-स्तदनेकत्वे स्वरूपात्सोऽपि हीयते ॥ ’ एकात्मकयोरेव हि वाच्यवाचकयो अन्योन्याक्षेपात्परस्परनियम सम्भवति अन्यतरस्यापि त्वनेकत्वे सति व्यभिचारात् नियमहानि । किञ्च— ‘ सामर्थ्यं सर्वभावानामर्था पत्त्याऽवगम्यते । एकसामर्थ्यसिद्धेऽर्थे नानेक तत्र लभ्यते ॥ ’ अस्य तावद्धि वाच्यप्रत्ययान्यथा नुपपत्तिसमानप्रमाणिका वाचकशक्तिरेकेनैव कल्पिता तद-नुसारेणापभ्रंशोऽपि चेदनुगम्यते को नाम तन्निरपेक्षवाच-कवाचकान्तरकल्पना लभेत । ‘ नाम च व्यवहारार्थ-मर्थस्याभ्युपगम्यते । तेनैकेनैव सिद्धेऽर्थे द्वितीयादि च निष्फलम् ॥ ’ किञ्च— ‘ विकल्पस्याष्ट-दोषत्व पुरस्तादेव वर्णितम् । स चेहानेकशब्दत्वे निश्चयेन प्रसज्यते ॥ नामान्तरे श्रुते चार्थ-सन्दिग्धोऽन्य प्रतीयते । सज्ञा चोत्पत्तिसंयो-गात् ’ इत्यत्रैतद्वक्ष्यते ॥ या तु हस्त कर पाणिरित्यत्रानेकशब्दता । अनन्यगतिकत्वेन सा दृढस्मरणेन च ॥ एकशक्त्यनुसारेण यानन्यास्ति गति काचित् । उपमानानुमानाभ्यां तावत्सैवानु-गम्यते ॥ तस्मात्स्वरूपसम्बन्धशब्दार्थत्वनिरूपणे । एकैकनियमादेव गति सामान्यगोचरा ॥ ’ यथा च प्रकृतिसारूप्यद्वारेण अपभ्रंशाः प्रकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति तथा ‘ तच्छक्तिश्चानुरूपत्वात् ’ ( १।३।८।२८ ) इत्यत्र वर्णयिष्यते । ‘ तेनानेकप्रयोगेऽपि कश्चिदेवार्थ-सङ्गत । तदुपस्थापनेनान्ये बोधकास्तद-शक्तिजा ॥ ’

तत्र तत्त्वमभियोगविशेषात् स्यात् । २७ ॥

भाष्यम्— कथं पुनस्तत्र तत्त्वं शक्यं विज्ञातुम् ? शक्यमित्याह । अर्थिनो ह्यभियुक्ता भवन्ति । दृश्यते

चाभियुक्तानां गुणवता अविस्मरणमुपपन्नम् । अन्यश्चैतद् गुणवमान ■ अस्यते इति । तस्मात् यमभियुक्ता उपदिशन्त्येष एव साधुरिति, साधुरित्यवगन्तव्य ।

या-- [ पृ. २७८ ] तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति चेत्, अत आह-- 'तत्र तत्त्वमभियोगविशेषात्स्यात् ' इति । कः पुनरभियोगः ? को वा तद्विशेषः ? कथं वा तेन वाचकत्वनिरूपणमिति । तदुच्यते-' लक्षणश्रवणाभ्यासादभियोगः प्रवर्तते । तेन लक्ष्यान्तरज्ञानं तद्विशेषोऽभिधीयते ॥ ' प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यस्तदभावे च लक्षणानुसरणमेवैकं अशेषान्वयनिरूपणक्षमत्वेन अवधार्यते । ' तस्माच्च लोकवेदाभ्यां कश्चिद्व्याकरणादृते । वाचकाननपभ्रष्टान् यथावज्ज्ञातुमर्हति ॥ तत्सामस्त्यापरिज्ञाने पारिशेष्यानिरूपणात् । अर्थोपव्याऽपशब्दानां निश्चयो नोपपद्यते ॥ लक्षणानुगमाद्यास्तु यदिहैव प्रयुञ्जते । नियतप्रतिपक्षत्वात्तेष्वर्थापत्तिसंभव ॥ ' [ पृ. २७९ ] तेनोभयज्ञानस्य अपि व्याकरणमेवोपाय इति तद्गताभियोगविशेषावगमः । यत्तु प्रयोगात्सिद्धिशास्त्रतादिति लक्षणे तन्मूलत्वमनादितरेतराश्रयत्वमुक्तं तदौक व्यवहारप्रसिद्धप्रतिपादकत्वमात्रेण अनिर्णीतवाचकावाचकत्वैरपि व्याकरणानपरभूते पदे केषाचित्साधुत्वमवगम्य पुनस्तैरप्यन्यान्यापकत्वसाधुत्वनिर्णयात्परिहरिष्यते । 'यदि वाचकतानाशो न स्याद्व्याकरणादृते । न विज्ञायेत वा तत्र भवेदन्योन्यसंश्रयम् ॥ निर्ज्ञाते वाचकत्वेऽपि तदपभ्रंशसंकरात् । विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥ ' तेन सङ्कीर्णसंकीर्णवाचकत्वेनोभयरूपलौकिकव्याकरणयोरुभयविषयत्वेनानुपपत्तिता, वेदे साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमिति चेत् । न । अप्रमविषयत्वात् । ' ये चैव प्रसिद्धा एव साधवो लोकवेदयो । सर्वशाखागतान् विद्यात्को वा साधारणानपि ॥ ' यथैव लौकिकप्रयोगप्रसिद्धत्वमान्यत्र एव वेदेऽपि सर्वशाखागतान् सर्वदा प्रत्यग्रतान् किमुत अध्येतुम् ' ' प्रकृतिप्रत्ययानन्त्यागावन्त पदराशय ।

लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥ ' एतेन पुरुषार्थक्रत्वर्थोदृष्टसाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्याक्रिया तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः प्रत्युक्तः । यदि चैकान्तेन ' तस्मात् ब्राह्मणेन न म्लेच्छितवै ' ' एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति ' ' तस्मादेषा व्याकृता वागुद्यते ' ( तैत्त. ६।४।७ ) इति चैवमादिक्रतुपुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्तितव्यमिति पौर्वापर्यव्यवस्था भवेत्तत एव पर्यनुयोगः प्रमन्येतापि व्याकृतत्वाश्रयो वेदविधिर्वेदनिःश्वासश्च व्याकरणं कथमनवस्थिष्यते इति । यदा तु किंचिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिवर्जितकालाभावात् अन्वाख्यानान्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्यात प्रतिषेधवर्जनपरस्यापि अवगम्यमानवेदविधिमूलत्वात् अनादित्वे सति सर्वेषां वेदवेदियूपाहवनीयाध्वर्युगोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वदाऽनवगत-पूर्वापरविभागसंबन्धे [ पृ २८० ] अस्य तादृष्टार्थत्वमेव केवलं शास्त्रप्रत्ययाधीनम्, तदा सर्वकालव्याक्रियमाणविद्यमानशब्दनियमविधेर्न किंचिदनुपपन्नम् । यत्तु वाचकत्वात् व्यतिरिक्तसाध्वसाधुताभावात् वाचकावाचकत्वयोश्च लौकिकप्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वात् गाव्यादिशब्दानामवाचकत्वप्रतिज्ञाने लोकविरोधाच्च मेर्वादिशब्दमातृकाक्षरपाठप्रसिद्धन्यूनातिरिक्तविपर्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति । तत्राभिधीयते-- ' समुग्धवाचके लोके लक्षणाद्वाचकः स्फुटः । गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम् ॥ ' लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकमिद्धिरिति तावदेव लोकव्यवहारात् वाचकत्वज्ञानं जायते यावत् व्याकरणानुगतत्वं नाभ्युपगम्यते । यदा तु तयोर्मार्गभेदेन प्रतिपत्तिस्तदा ' तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ' ( १।३।४।८ ) इत्युक्तस्य शास्त्रस्या वा तन्निमित्तत्वात् इत्यनेनोत्तरेण व्याकरणाव्यशास्त्रगतप्रतिपादितवर्णीयस्त्व तदभियुक्तपुरुषवर्णीयस्त्वं वा पूर्वमेव स्थापितम् । ' तर्केणा-

वाचकत्वं च यद्दृष्टं तेन बाध्यते । स्मर्यमाणविरोधस्तु ब्राह्मणाब्राह्मणादिवत् ॥ ' यथैव तुल्यशिरःपाण्याद्याकारेष्वपि संकीर्णत्वेनादृष्टिमात्रेषु ब्राह्मणादिषु मातापितृसम्बन्धस्मरणादेव वर्णविवेकावधारणं भवति तथा साधुशब्दावधारणमपीति लोकविरोधाभावः ।
' यथा च तुल्यपाण्यादिरूपत्वाद्वर्णसंकरम् ।
पश्यतः स्मृतिबाधः स्यात्तथा वाचकसंकरम् ॥
आप्तिश्च स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते ।
साध्वसाधुविभागोऽयं कुशलैर्वर्णभेदवत् ॥ '

यो नाम स्मृतिप्रतिपादितोऽर्थः धर्मफलसंबन्धवदनियतकालत्वात् श्रूयते धर्मा भविष्यतीति सोऽत्यन्तं प्रत्यक्षाविषयत्वात् केवलशास्त्रमूलत्वेन स्थाप्यते । यस्य त्वादौ स्मरणजनितविवेके कृते तदनन्तरमेव प्रत्यक्षमपि विचारसम्पादजनितसंस्कारस्य गाम्भ्यासजनितपटुजातिविभागविषयमिव साध्वसाधुशब्दरूपगोचरमुपजायते ।
' तस्मै तर्केण यो नाम साधयेच्छब्दसंकरम् ।
तस्य प्रत्यक्षबाधोऽपि वर्णसंकरबाधवत् ॥ '
तेन स्वयमनुपलभ्य प्रत्यक्षमात्रेणैव सम्यक्प्रमाणविरोधः शक्यो वक्तुं न स्मर्यमाणशब्दसाधुत्वपक्षस्येति निरस्यता । तेनादृष्टार्थप्रत्यायननियमप्रतिषेधद्वारं धर्माधर्मसाधनत्वमपि [ पृ. २८१ ] साध्वसाधुत्वज्ञानमुपपत्स्यते । यस्तु आह— ' साधुत्वं नेन्द्रियग्राह्यम् ' इत्यादिश्लोकम् । तं प्रति एवं वक्तव्यम् । ' साधुत्वमिन्द्रियग्राह्यं लिङ्गमस्य च विद्यते । शास्त्रस्य विषयोऽप्येष प्रयोगोऽप्यत्वसंकरः ॥ ' इति ।

प्रत्यक्षितश्रुत्यादिदोषवर्जितनियतदृष्टादिकाल्पभिन्नदृष्टवाक्यस्थितगत्यादिस्वर्गादिफल श्रयमाणाविनष्टवाचकरूपविषयथोनज्ञानेनोदात्तादिवदिन्द्रियग्राह्यत्वम् । तदुत्तरकाल्पतरसम्पादकारणतार्थप्रतिपत्तिहितलक्षणगमदृष्टविषयवृत्त्युपगमविशागदेवादिलिङ्गमप्यभिन्नादि विद्यते । शास्त्रस्य च द्विविधस्यापि श्रुतिस्मृतिरूपस्य स्वर्गलोकवदोषकारणविविधाप्तार्थाद्यर्थमात्र्यर्थमात्रार्थनं नर्थवाक्यस्वरूपार्थस्य न अपवर्गस्य एव अन्योऽपि विषयः । अविनष्टैः शब्दैर्नरमात्मस्य स्वर्गसंप्राप्तौ भावः । यज्ञे च धर्मान्यशब्दैर्भाषमाणस्यान्तमिव वस्तुतः प्रतिपिद्धाचरणनिमित्तक्रतुवैगुण्यप्रसङ्गः । यथोक्तं ' वाग्योगविद्दुष्यति चापशब्दैः ' इति । एतौ द्वावप्यर्थौ न शास्त्रादृतेऽन्येन प्रतिपादयितुं शक्येते इत्ययमेव शास्त्रविषयः । द्वाभ्यामेव च विधिप्रतिषेधाभ्यामविनष्टैः शब्दैः स्वर्गयशोपकारकामो भाषेत न विनष्टैरिति न प्रतिशब्दापशब्दमनन्तविधिप्रतिषेधकल्पनप्रसङ्गः । न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यं न प्रमेयस्वरूपज्ञापनार्थेनेत्येतदाश्रयाशास्त्रविदम् । न हि ' अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा ' इत्यादि, ' चतुश्चिशद्वाश्वीनानि सरस्वत्या विनशनप्रक्षप्रस्रवणे ' इत्येवमादिवाक्यदोषाणा च शास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते । नापि तत्प्रतिपादने शास्त्रशब्दवाच्यत्वबाधः । अथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति क्वचित् परिभाषा तथाप्येवंविधाः साधुशब्दाः प्रयोक्तव्या इतीदृशो विधिः संभवत्येव । यो वाक्यान्तरावगतादृष्टफलार्थी यथाविनष्टैः शब्दैः भाषितुमिच्छेत् । केनानेकरूपानेकक्रममात्राश्च वर्णान् उपाददीत नाधिकान् न्यूनाश्चेति यावद्रूपं विधिप्रतिषेधौ शक्यौ दर्शयितुमिति शास्त्रविषयत्वसिद्धिः । निःसन्दिग्धशब्दव्युत्पत्त्युक्तदेवदत्तादिशब्दोपमयाऽपि च सर्वशब्दाना विनष्टाविनष्टरूपैः अवश्यं भवितव्यमिति शक्यं विज्ञातुम् । एवं व्याकरणानुगतवैदिकशब्दाविनाशसादृश्यादपि तद्विधलौकिकाविनष्टरूपमानं दर्शयितव्यम् । तथा लौकिकार्थप्रत्ययोत्थापितवाचकस्वार्थापत्तिलभ्यप्रत्यादेकः साधुत्वनिश्चयः । ततः संभवत्प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रष्टरूपवर्जितैःअन्यत्वाभ्यानरपन्यपानुपपद्यमानस्वाद्वचनाद्व्यर्थात्मा सिद्धमेव साधुत्वज्ञानम् । ' अपभ्रंशेषु साधुत्वं तुल्यार्थत्वाद्यदुच्यते । लक्षणाभावमार्गेण तस्याभावोऽपि निश्चितः ॥ ' इति ।
[ पृ. २८२ ] ' षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये । व्यापारोऽस्तीति को जल्पेत्साधुत्वं निष्प्रमाणकम् ॥ यद्यप्यनभियुक्तानां प्रयोगोऽस्ति ससंकरः । अभियुक्ता विवेक्ष्यन्ते तथाऽपि ब्राह्मणादिवत् ॥ यथा च पद्मरागादीन्नानाकारेर्जकर्मिभितान् । परीक्षका विजानन्ति साधुत्वमपरे

पीतादिविशेषनिमित्तमिति तदभावे देवदत्ततनयत्वमात्रेण न तत्तनयान्तरस्य श्यामत्वानुमानम् । एतेन सन्निवेशविशिष्टतया तनुतरुमहीरुहादीनां घटादिवत् उपलब्धिमत्कर्तृकत्वानुमानं प्रयुक्तम् । यथा हि येषु हस्तादिव्यापारविशेषेण सन्निवेशाः शक्यन्ते रचयितुं तेषामेव घटपटगृहादीनामुपलब्धिमत्कर्तृकत्वम् , तदभावे पारिमाण्डल्यानामङ्कुरदेहादीनां सन्निवेशविशेषमात्रेण कथं तदनुमानं पाण्डुरत्वादिव यद्यनुमानम् । तथा शरीरेन्द्रियादियुक्तबुद्धिमत्कर्तृकत्वेन साहित्यं सन्निवेशविशिष्टानामुपलब्धं तच्च दृश्यादर्शनात् दूर्वाङ्कुरादिषु निषिद्धम् । तस्मिन् निषिद्धे बुद्धिमन्मात्रं शरीरादिरहितं नानुमातुं शक्यम् । तृणादिविकारादिव हिमे उष्णत्वस्याप्यनुमानम् । न चैवं सर्वानुमानोच्छेदप्रसङ्गः, सर्वविशेषपरिहाणेन धूमत्वसामान्यस्य वह्नित्वसामान्येन साहित्यमवगतं पर्वते च तदविकलमेव दृष्टमिति युक्तं तत्र तदनुमानम् । सामान्यमेवानुमीयते न विशेषः, अननुगमाभावात् । अवगतमपि महानसादौ सामान्यं देशान्तरकालान्तरादौ प्रत्यक्षेणेवानुमानेन प्रत्यभिज्ञायमानं भवति प्रमेयमिति न सिद्धसाध्यता । सामान्यस्यापि चास्त्येव संयुक्तसमवायसम्बन्धः पर्वतेन, इति युक्तं तत्र तस्यानुमानम् । ननु देशविशेषादपि पदार्थस्वरूपमन्यथा भवति, कस्यचिद्धि वृश्चिकदंशादपि मरणं भवति, कस्यचिन्न, तथा धूमस्यापि देशान्तरे अग्निव्यभिचारशङ्का भवेत् । सत्यमेवं भवति, सा तु तद्दंशदाहकेभ्यः श्रुत्वा शक्यते निश्चेतुमिति सर्वमवदातम् । तेन यस्य यादृशस्य सामान्यस्य विशेषस्य वा येन यादृशेन सामान्येन विशेषेण वा यथादृष्टेषु देशकालेषु साहित्यं येन येनापि सम्बन्धेन नियतमुपलब्धम् , तदेव तादृशमेव देशान्तरकालान्तरादौ दृष्टं तस्य तादृशस्य साहित्यनियमादेव बोधकं भवति । दृष्टप्रदेशेषु भूयोभिरेव दर्शनैः व्यभिचारादर्शनमात्रसहायैः साहित्यनियमः शक्यावगमः इति सिद्धं नियमस्य एव लिङ्गस्य लिङ्गिना सम्बन्धः , स च भूयोदर्शनप्रमाणक इति । ' पार्थसारथिमिश्रेण वार्तिकोक्तानुसारतः । यथाप्रतीति निर्णीतो नियमः सप्रमाणकः ॥ ५ ॥ इति पार्थसारथिमिश्रविरचितायां न्यायरत्नमालायां व्याप्तिवादः समाप्तः । रत्नमाला. पृ. ५६–७२.

* व्याप्तिसमर्थनम् । इदानीं सकृद्दर्शनगम्या व्याप्तिरिति प्रतिपाद्यते । संयुक्ताविमौ अग्निधूमाविति प्रतिपत्तिरस्तीति निर्विवादम् । अत्र च देशकालाभ्यां संयोगेन च विशिष्टावग्निधूमौ प्रतीयेते, गुणानां द्रव्यपरतन्त्रस्वभावत्वात् । तदुक्तम् ' गुणानां च परार्थत्वात् ' इति । तच्च शब्दज्ञानमेव पदार्थान्वयविषयमिति चेन्न, तस्यापि प्रत्यक्षमूलत्वात् । लोके तु येन प्रकारेण पदार्थानां परस्परान्वयः प्रत्यक्षादिभिर्निश्चितः , तथैव शब्दो ब्रवीति, इतरथा वेदवाक्येषु यथाश्रुतार्थपरित्यागेन लक्षणया गौण्या वा वृत्त्याऽन्यथावर्णनं क्रियमाणमयुक्तं स्यात् । अतोऽन्वयप्रमाणविषयो न्यायः न शाब्दविषयः । संयोगस्य च देशकालयोश्च द्रव्यविशेषणत्वेन प्रतीतौ स्थितायां संयुक्तावग्निधूमौ इदानीमग्निधूमाविरयन्वयो भवति, न इदानीं अग्निधूमयोः संयोग इति, इतरथा संयोगस्य देशकालविशेषणत्वं किमिति नाश्रीयते ? ततश्च यावद्द्रव्यभावितया संयोगस्य प्रतीतत्वात् यत्र धूमः, तत्राग्निसंयोग इत्यनौपाधिक एव धूमस्य अग्निसम्बन्धः सकृद्दर्शने एव सिद्धः । संयोगस्य च देशकालावच्छेदे इदानीमग्निधूमयोः संयोग इत्यन्वयो भवति । ततश्च देशान्तरे कालान्तरे वा संयोगस्यागृहीतत्वात् भूयोदर्शनमपेक्षणीयम् । न च तथा अन्वय इत्युक्तम् ।

ननु संयुक्तावग्नी इति प्रतिपत्तौ एवं स्यात्, अनयोः संयोग इति प्रतिपत्तौ विपरीतं स्यात् । नैवम् , अस्तु तावत् अनयोः संयोग इत्यपि प्रतीतिः, तत्र न व्याप्तिग्रहणं अस्माभिः उच्यते, देशकालावच्छेदेन संयोगस्य ग्रहणात्, किन्तु संयुक्ताविमाविति हि प्रतिपत्त्यैव अनौपाधिकत्वग्रहणम् । एतदेव अभिप्रेत्योक्तं प्रकरणपञ्चिकायाम् ' संयुक्ताविमाविति हि प्रतिपत्तिः, न पुनरयमनयोः संयोगः ' इति ।

ननु धूमव्यक्तिविशेषेण संयोगस्यान्वयात् व्यक्त्यन्तरस्य च व्याप्त्यनुपपत्तिः । नैवम्, धूमजात्युपलक्षितस्य विशेषस्य अन्वयोपगमात् । व्यक्तिभेद

रुपाधिरिति शङ्कायां व्यक्त्यन्तरेऽपि संयोगदर्शनेनैव शङ्कानिवृत्तिः ।

ननु धूमजातेरपि व्यक्तिमात्रेणैवान्वयः । नैवम्, यदि सामान्यमन्तरेणापि व्यक्तेर्ग्रहणमस्ति, तदा स्यात् सामान्यस्य गुणभावः । न च सामान्यमन्तरेण कदाचिदपि व्यक्तेः प्रतीतिः । न हि रूपशून्या काचिदपि रूपिबुद्धिरस्ति इत्युक्तत्वात् । अतो जातिविशिष्टस्यैव प्राधान्यात्, तेन संयोगस्यान्वयात् सर्वधूमवता सकृदेवाग्निसत्ता गृहीता भवति । तदुक्तम्, 'तथा च सति धूमवत्तैव देशान्तरे कालान्तरे वा प्रमाणमपेक्षते, न च तस्या वह्निमत्संयोगः' इति । एवं गृहीतेऽप्यनौपाधिकत्वे यद्युपाधिशङ्का कस्यचित् स्यात्, तदा भूयोदर्शनादेव शङ्कानिरासमात्रं क्रियते, न व्याप्तिग्रहणम् ।

ननु व्याप्यदर्शनेऽपि शङ्कोदयादेव दर्शनमपि शङ्कितमेव स्यात्, एवं तर्हि अतिप्रसङ्गः, घटादिग्रहणेऽपि बाधकशङ्कया घटादिग्रहणस्यापि अनिश्चयप्रसङ्गः ।

ननु अग्निना संयोगस्य सकृद्दर्शनेऽन्वयात् सकृद्दर्शनेनाग्निना धूमानुमानं प्रसज्यते । नैवम्, सकृद्दर्शनेनैवाग्नेर्धूमसंयोगोऽप्यनौपाधिक इति ज्ञातम्, उत्तरकाले तु आर्द्रेन्धनाद्युपाधिदर्शनात् औपाधिकत्वनिश्चयः । न च उपाधिदर्शनात् औपाधिकत्वनिश्चये व्याप्यदर्शनेऽपि तत्प्रसङ्गः । अतः सकृद्दर्शनादेव व्याप्तिग्रहः । न च सकृद्दर्शनव्यापकत्वे भूयोदर्शनस्यापि शक्तिः, भूयोदर्शनानामपि प्रत्येकं सकृद्दर्शनत्वात् । न च दर्शनानां भूयस्त्वं ग्राहकम् । रत्नतत्त्वग्रहणे तथा दृष्टमिति चेत्, नैवम्, न तत्रापि भूयोदर्शनस्य ग्राहकत्वम्, किंतु विवेचकाकारग्रहणे प्रवृत्तः तस्य न अतिशोभनत्वात् मनःसमाधानाद्यभावाच्च न तत्त्व ग्रहीतुं प्रभवति, केवलं रत्नमात्रमेव पश्यति । एवं अनेकदर्शने जाते मनःसमाधानादिसामग्रीसमवाये अथादेकदा तत्त्व गृह्णाति । अतो न भूयोदर्शनस्य तत्त्वग्रहणे उपयोगः । भूयोदर्शनस्य कारणत्वाभ्युपगमे इन्द्रियसंबन्धादिवत् सर्वेषां भूयोदर्शननियमोऽपि स्यात् । न च तथा दृश्यते, एकः सकृद्दर्शनादेव तत्त्वं गृह्णाति, अपरस्तु शतदर्शनात् । अतो न भूयोदर्शनाद्रत्नतत्त्वग्रहणम् ।

यत्तूक्तं सकृद्दर्शनस्यासामर्थ्येऽप्येकस्य दर्शनजातीयस्यैव सामर्थ्यं संभवति, तथा एकस्य वृश्चिकदंशस्य मरणहेतुत्वं एकस्य खर्जूरस्य पित्तज्वरत्वमित्यादि, तदप्ययुक्तम्, तत्रापि भ्रान्तिभेदेन देशभेदेन वा सामर्थ्यं कल्पनीयम्, न तु एकविधस्यैव शक्तिद्वयम् । अतः सकृद्दर्शनगम्या व्याप्तिरिति । प्रवि. प्रकरणं २० .

● व्याप्यं हि दृष्टं व्यापकं गमयति । बृहती. पृ. ७१.

● व्याप्यत्वासिद्धिः हेत्वाभासः । 'हेत्वाभासाः' इति बिन्दौ द्रष्टव्यम् । मणि. पृ. ४१.

● 'व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते । तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ॥' श्लोवा. अनुमान १२१–१२२.

● 'व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम् ।' निमित्तत्वेन कस्यचिद्व्याप्यमानस्येप्सितत्वे कल्प्यमाने 'व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम्' इति न्यायेन मैत्रावरुण एव तदवगतेस्तस्यैवोद्देश्यत्वम् । 'मैत्रावरुणाय दण्डम्' । भाट्ट. ४।२।६.

● 'व्याप्यमानगता संख्या अविवक्षिता' । 'यजेत' इति या संख्या प्रतीयते सा गुणभावात् न विवक्षिता इत्येतत् नानुक्ते न्याये स्यात् । उक्तश्च न्यायः 'व्याप्यमान०' इति । तद्विरोधादितरदपि अविवक्षितम् । ( पूर्वपक्षे इदम् ) । टुप्. ६।२।२।५.

● व्यामुग्धः । नहि व्यामुग्धान् अलं कुरुते पुरुषप्रयत्नः इति तेषामुपेक्षा कार्या । ऋजु. पृ. ९५.

● व्यामोहः अर्थतत्त्वस्य मिथ्याप्रत्ययस्य हेतुः । ऋजु. पृ. ५५. ● यस्य हि दर्शनस्य प्रमाणं नास्ति व्यामोहः ( भ्रम. ) सः, यथा शुक्तिकायां रजतदर्शनम् । भा. ३।८।१२।२४.

● व्यासपादप्रणीता शारीरकमीमांसा चतुर्लक्षणी भिन्नमेव शास्त्रम् । सकर्प. ४।४।१०

● व्यासज्यवृत्ति देवता च अग्नीषोमयोः । सकर्प. ४।८।६ . ● व्यासज्यवृत्ति । 'नहि व्यासङ्गिशिक्षणसेवन

व्यपदिश्यते । नाग्नीषोमीय आग्नेय ऐन्द्राग्नो वा तद्रूच्यते ॥ ' वा. ३।२।१५।२७.

• व्यासज्यवृत्तिधर्मप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य न हेतुत्वम् । मणि. पृ. १६.

§ व्याहृति-हिंकार-दशहोतृ-सामिधेनीनां न्यायात् क्रमः ॥

' सामिधेनीरनुवक्ष्यन् एता व्याहृतीः पुरस्ताद्दधाति ' इत्यादिभिर्विहितानां दशहोतृ- व्याहृति- हिङ्कार- सामिधेनीनां क्रमनियामकाभावादनियतक्रमेणोच्येरन् । इति प्राप्ते, ' हिङ्कृत्य सामिधेनीरन्वाह ' इति कृत्वाप्रत्ययेनानन्तरितपूर्वकालकथनात् सामिधेनीभ्यः पूर्वो हिङ्कारः । अनुवक्ष्यन् पुरस्तादित्याभ्यामव्यवधानाश्रवणादकथनात् हिङ्कारात्पूर्वं व्याहृतयः । दशहोतुरपि तथैव श्रवणेऽपि मन्त्रपाठक्रमाद्व्याहृतिभ्योऽपि पूर्वं निवेशः सर्वत्राव्यवधानस्याशक्यतयाऽन्यव्यवधानेनोपपत्तौ स्थूलव्यवधानस्यायुक्ततया प्रक्रमः सिध्यति । सकर्पं ४।२।१.

• व्युत्पत्तिः । अर्थविशेषविषया प्रतीतिमनुमाय शब्दस्वाभाविकीं शब्दस्य स्वार्थे शक्तिनिरूपणा व्युत्पत्तिरुच्यते । ऋजु. पृ. १६. • व्युत्पत्तिश्च अर्थेन सह शब्दस्य, न विज्ञानेन कार्येण, तस्य आनन्त्यात् व्यभिचाराच्च । कणिका. पृ. १६८. • व्युत्पत्तिः । वृद्धव्यवहारे अनेन शब्देन अयमर्थः प्रतिपाद्यते इति शब्दार्थयोः वाच्यवाचकसम्बन्धावगमनमेव व्युत्पत्तिः इत्युच्यते । ऋजु. पृ. १५४.

• व्युत्पत्तिप्रयोजकः क्रियाकारकान्वय एव, न शेषशेषिभावः । तथापि शेषशेषिभावः अन्वये अन्तर्भवति । वि. ३।१।१.

• व्युत्पन्नः शब्दः प्रत्यायकः । व्युत्पन्नः गृहीतशक्तिकः । वि. ३।१।१.

• व्युत्सेकः क्षेपणम् । के. ( ७।३।४।१२ ). • व्युत्सेकः ' प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् ' इत्यादिमन्त्रैः दर्शपूर्णमासयो. किंतु सर्वासु अपां प्रक्षेपः । वि. ७।३।४.

• व्युद्धरणस्य बाधः सौर्ये चरौ । १०।१।२०। ६१. ' सौर्ये चरौ व्युद्धरणस्य बाध ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

§ व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतत्वात् । १०।१।२०।६१॥

पुरोडाशस्य कपालेभ्यो व्युद्धृत्य अन्तर्वेद्यां बर्हिषि आसादनं क्रियते । व्युद्धृत्य आसादनं च प्रकृतौ अश्रुत न श्रुतम् । तच्च सौर्ये चरौ न कर्तव्यम् । इति सिद्धान्तः । के.

• व्युष्टिः नाम द्विरात्र. । तत्र उत्तरमह. अतिरात्रः । कु. १०।५।२०।४८.

• व्यूढः । अस्ति द्विविधो द्वादशाहः, व्यूढः समूढश्च । समूढस्तावत् ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्र प्रथममहः, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रमिति । अथ व्यूढः, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नां ऐन्द्रवायवाग्र प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाऽऽग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति । अत्र व्यूढे १।२।६।१०।११।१२ इति षट् ऐन्द्रवायवाग्राणि । ३।७।८ इति त्रीणि शुक्राग्राणि । ४।५।९ इति त्रीणि आग्रयणाग्राणि । भा. १०।५।२४। ७९, १०।५।२६।८८ । सिद्धान्ते यत्र वचनं लिङ्गं च तत्र व्यूढ. प्रवर्तते, अन्यत्र अविशेषेण समूढ इति । १०। ५।२४।८२. • व्यूढो द्वादशाहः समूढस्य विकारः । १०।५।२४।७९–८२. मीको. पृ. २१८९ 'द्वादशाहो व्यूढः समूढस्य विकारः ' इत्यत्र अधिकरणे द्रष्टव्यम् ।

• व्यूढे द्वादशाहे छन्दोव्यतिक्रमः पठ्यते ' छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन्– गायत्री त्रिष्टुभः, त्रिष्टुप् जगत्याः, जगती गायत्र्याः ' इति । तत्र मन्त्रगतछन्दसां अर्थानां च व्यतिक्रम. इति पूर्वपक्षः । नार्थानां व्यतिक्रम', किंतु गायत्रीशब्दस्थाने जगतीशब्दः प्रयोक्तव्यः, त्रिष्टुप्शब्दस्थाने गायत्रीशब्दः, जगतीशब्द-

स्थाने च निष्प्रगाद इत्येव शब्दव्यतिक्रम एव कर्तव्य इति सिद्धान्त । वि. १०।५।२६ * व्यूढे द्वादशाहे भक्ष्यमाणपरिधिकपालमन्त्रगताना गायत्र्यादिच्छन्दसामेव व्यतिक्रम नार्थानाम् । १०।५।२६।८८ मीको पृ २२०१ ' द्वादशाहे व्यूढे भक्ष्यमाण० ' इत्यत्र अधिकरण द्रष्टव्यम् ।

* व्रतं इति कर्मनाम । टुप् ६।२।०।२० * व्रत इति च मानस कर्मोच्यते, ( प्रजापतिव्रत ) इदमह न न करिष्यामीति सकल्प । भा ६।२।५।२० * ' व्रत कृणुतेति वाच विसृजति ' इति व्रतकरणवाग्विसर्गयो कालार्थ सयोग । ३।२।४।१० मीको पृ ११०७ ' उत्थानवाग्विसर्गाधिकरणम् ' इत्यत्र अधिकरण द्रष्टव्यम् । * व्रत ज्योतिष्टोमे अपरात्रे न नित्यम् । ६।८।९।२९ मीको पृ १७८५ 'ज्योतिष्टोमे अपरात्रे व्रत न नित्यम्' इत्यत्र अधिकरण द्रष्टव्यम् । * व्रत नाम सत्यवदनब्रह्मचर्यादिसकल्परूपम् । स्त्रीगमन-मांसभक्षणनिषेध अपि । भाट्ट. १२।१।११ * व्रत नियमो वा य षडहे स मध्यमे भवति द्वादशाहे । भा ९।२।१२।४० * व्रत निशि यद्दो अमावास्यातन्त्रेण प्रसङ्गसिद्धम् । १२।२।४।१४-१८. मीको पृ २३८७ ' निशीथिन्याय ' इत्यत्र द्रष्टव्यम् । * व्रत पयो ब्राह्मणस्य यवागू राजन्यस्य आमिक्षा वैश्यस्य ज्योतिष्टोमे । भा ४।३।४।८, ६।१।७।२८, १०।४।१।१, १२।१।१४।३०, * व्रतम् ( पय पान यवागूभक्षण इत्यादि ) । पुरुषाणा क्रियार्थाना शरीरधारणार्थो बलकरणार्थश्चाय सस्कारो व्रत नाम । ४।३।४।८, * व्रत श्रुत्यर्थम् । १०।४।१।१. * व्रतस्य भरण पत्न्या दक्षिणाग्नौ आम्नातम् । यदा आमवशेषात् मार्ग व्रतकार्यं उपादीयते तदा तत्र दक्षिणाग्नौ श्रपणनियम । १२।२।१।७, * एवमेव हि व्रतस्य अङ्गभावो यत् कर्तार समर्थ करोति । ६।१।७।३२ * व्रताना अग्निचित्कर्तव्याना क्रत्वन्ते अनुष्ठानम् । ५।३।१०।२६-२८. मीको पृ २९ ' अग्निचयने अग्निचिद्व्रताना क्रत्वन्तेऽनुष्ठानम् ' इत्यत्र अधिकरण द्रष्टव्यम् । * व्रताना दार्शिकाना नानुष्ठान सोमे प्रायणीयादिषु । १२।१।११।२०-२२. मीको. पृ १८१८ ' ज्योतिष्टोमे प्रायणीयादिषु० ' इत्यत्र अधिकरण द्रष्टव्यम् । * व्रताना प्राजापत्याना पुरुषार्थता । ४।१।३।३-६ मीको. पृ. २७०० ' प्रजापति व्रताधिकरणम् ' इत्यत्र अधिकरण द्रष्टव्यम् ।

卐 व्रताधिकरणम् । ज्योतिष्टोमगतपयोव्रतादीनि क्रत्वर्थानि ॥

**द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् । ४।३।४।८॥**

**भाष्यम्** — ज्योतिष्टोमे समामनन्ति ' पयोव्रत ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य ' इति । तत्र सदेह किमय पुरुषधर्म उत क्रतोरिति । प्रकरण बाधित्वा वाक्येन विनियुक्त पुरुषस्येति । एवं प्राप्ते, ब्रूमः । पुरुषाणा क्रियार्थाना शरीरधारणार्थो बलकरणार्थश्चाय सस्कारो व्रत नाम । स क्रतुधर्मो भवितुमर्हति, प्रकरणानुग्रहाय । ननु वाक्यात् पुरुषधर्म इति । नेति ब्रूम । तथा सति फल कल्प्यम्, कल्प्यमितरत्र । प्रयोगवचनेनोपसहृत हि तत्प्रधानस्य । तस्मात् क्रतुधर्म ।

टुप्— उत्तरस्मिन्नधिकरणे पूर्वाधिकरणसिद्धान्तेन पूर्व पक्षः ।

पृथक्त्वाद् व्यवतिष्ठेत । ९ ॥

भाष्यम्— अथ पुरुषसयोग किमर्थं ? व्यवस्थापनार्थ इति ब्रूम । पयोव्रत ज्योतिष्टोमस्य भवति । तत्तु ब्राह्मणकर्तृकस्यैव, नान्यकर्तृकस्येति । एव सर्वत्र ।

टुप्— ब्राह्मणकर्तृकस्य ज्योतिष्टोमस्य पयोव्रतता । सत्यपि क्रत्वर्थत्वे पुरुषप्रधानत्वानिर्देशस्य पुरुषद्वारेण क्रतावनुप्रवेश । अत अब्राह्मणकर्तृकस्य नास्ति पयोव्रतता ।

शा—' नियममन्तरेणापि पुरुषप्रीतिदर्शनात् । नियमस्य फल कल्प्यम्, तस्य प्रकरणात् क्रतौ ॥'

सोम—पूर्ववत् ( दधिग्रहादिरादिवत् ) इह क्रत्वर्थ सयोगाभावात् न क्रत्वर्थता इति प्रत्यवस्थानात् सगति । ( क्रतुयुक्तपुरुषार्थं व्रतमिति सिद्धान्त ) । सूत्रार्थस्तु- पयोव्रत क्रियार्थाना द्रव्याणा पुरुषाणा बलाधानार्थत्वात् सस्कार इति क्रत्वर्थता स्यादिति ।

वि— 'पयोव्रतं ब्राह्मणस्य पुंसि तत् क्रतवेऽथवा ।, पुंयोगादग्रिमो, मैवं नैष्फल्यात् क्रतुदोषता ॥'

भाट्ट— सोमे 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति श्रुतम् । ज्योतिष्टोमापूर्वसाधनीभूतब्राह्मणादिरूपाधिकारिसंस्कारार्थत्वेन विहितं पयोव्रतादि तदप्युक्तमित्यविवादमेव । अत्र च न बार्हद्गिरादिवत् ब्राह्मणस्य निमित्तत्वम्, दृष्टविधया तस्योद्देश्यत्वे संभवति निमित्तत्वकल्पने प्रमाणाभावात् । अत एव रागप्राप्तभक्षणद्वारेण पयोनियमात् यस्य रोगादिना अनशनप्रसक्तिः तस्य न पयःप्रयोजकतेति ध्येयम् ।

मण्डन— 'क्रत्वर्थं स्यात् पयोव्रतम् ।'

शंकर— 'पयोव्रतं तु क्रत्वर्थम् ।'

• व्रताधिकरणन्यायस्य स्वरूपं 'कल्प्यात् क्लृप्तं बलीयः' इति । ४।३।४।८–९.

• व्रतोपायनं सत्यवचन-ब्रह्मचर्यादिसंकल्परूप दर्शपूर्णमासयोः औपवसथ्ये अहनि कर्तव्यम् । ज्योतिष्टोमे ऐष्टिकेषु तु सौमिकव्रतोपायनेन प्रसङ्गसिद्धत्वात् पृथङ् न कार्यम् । वि. १२।१।११.

• व्रतोपायनमन्त्राः– 'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्', 'वायो व्रतपते॰', 'आदित्य व्रतपते॰', 'व्रतानां व्रतपते॰' इति । वि. १२।१।११.

• व्रतग्रहणं पूर्णमासे बर्हिःसंपादनकाले, दर्शे च वत्सापाकरणकाले कर्तव्यम् । 'बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' । वि. ६।४।१२, अयं व्रतकालो न केवलं संनयत एव किंतु असंनयतोऽपि । 'वत्सापाकरणोपलक्षिते काले' इति तु दर्शे विशेष । ६।४।१२.

• व्रतनियमः सान्नाय्ये अप्रवृत्तस्यापि । ६।४।१३।४१–४२.

• व्रतसमाप्तिः उत्थापनेन । सु पृ. १५२९.

• व्रात्यपशोः निमित्तत्वेनोच्यमानं पितुः पितामहस्य वा अशोभनत्वं साहित्यानिरपेक्षा सिद्धम् । शा. ३।१।६।१२ पृ. ६९६.

• व्रीहयः केचित् कृष्णाः, केचित् आशवो नाम ये अल्पकालेन फलन्ति, केचित् महाव्रीहयो नाम, केचित् आम्बाः नाम । राजसूये नानाबीजेष्टौ एते । के. (११।३।७।१५). • व्रीहयः तण्डुलनिर्वृत्तिं कुर्वन्ति । ततः पिष्टानि, तेभ्यः पुरोडाशः, तेन यागः, यागादपूर्वम् । टुप्. ९।२।१५।४७. • व्रीहय. प्रधानयागपर्याप्ता लब्धाः, परंतु स्विष्टकृत्–इडाभक्षण–प्राशित्रभक्षणरूपशेषकर्मपर्याप्ताः न सन्ति, तथापि शेषकार्यलोपं कृत्वा प्रधानपर्याप्ताः व्रीहयो ग्राह्याः, न प्रतिनिधिः । वि. ६।३।२१. • व्रीहयो हि अनदनीयाः वाक्यान्तरशिष्टाश्च प्रकरणात् उत्पत्तिवाक्यशिष्टप्रकृतिद्रव्यापेक्षपुरोडाशावरुद्धयागानुवादेन विधीयमानाः न शक्नुवन्ति प्रकृतित्वप्रतिपत्तिमन्तरेण यागसाधनत्वं प्रतिपत्तुम् । शा. ३।४।१४।४१ पृ. ९८०. • तुल्या एते व्रीहयः । य एव भक्तार्थास्त एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम । भा. ९।१।५।१९. • यत्र यागोपयुक्ता एव व्रीहयः नाधिकास्तत्र निर्वापस्याप्राप्तेः पात्र्यां निर्वाप एव विधेयः । संख्यासमुच्चयविशिष्टनिर्वापविधानात् । सोम. ५।२।२. • 'व्रीहीन् अवहन्ति' इत्यवघातः व्रीहीणामपूर्वसाधनत्वाकारमेवापेक्षते न स्वरूपमपि । एवं सति व्रीह्यभावे नीवाररूपप्रतिनिधावपि अवघातविषयत्वेन ऊह सिध्यति । वि. ९।१।१ वर्णकं २. • 'व्रीहीनवहन्ति' इति अवहननस्य नियमविधिः नानुवादः दर्शपूर्णमासयोः । भा. ४।२।११।२६. • 'व्रीहीनवहन्ति' अयं नियमविधि क्रियार्थः । बाल. पृ. २४, • 'व्रीहीनवहन्ति' अत्र प्रतिपत्तिरूपदृष्टार्थगुणकर्मविधि. । पृ. १३, • 'व्रीहीनवहन्ति' इद साक्षाद्विनियुक्तभाव्युपयोगद्रव्यसंस्कारार्थं दृष्टार्थं संनिपत्योपकारक क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । पृ. ८२, • 'व्रीहीनवहन्ति' इत्य कर्मणि द्वितीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । पृ. ४४, • 'व्रीहीन् प्रोक्षति' इत्यत्र प्रोक्षणे व्रीहिस्वरूपं न प्रयोजकं किंतु अपूर्वमेव । तत्तु व्रीहिस्वरूपं गुणत्वेन चोद्यते । वि. ९।१।९. • 'व्रीहीन् प्रोक्षति' इत्यत्र व्रीह्यर्थं प्रोक्षणं भवति ।

द्वितीयासंयोगान् व्रीहयो मान्याः । टुप्. ९।१।२।२ ● ' व्रीहीन् प्रोक्षति ' अयं विनियोगविधि. क्रत्वर्थ. । बाल. पृ. १३, ● 'व्रीहीन् प्रोक्षति'– इदं प्रोक्षणं साक्षाद्विनियुक्तभागुपयोगद्रव्यमस्कारार्थं अदृष्टार्थं संनिपत्योपकारक क्रत्वर्थं प्रवृत्तिरूप वैदिक कर्म । पृ ८३ ● व्रीहिणा यागः कर्तव्यः प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा, नात्र कश्चिद् विशेष. । प्रीत्यर्थमुपार्जितोऽपि व्रीहि' व्रीहिरेव, कर्मार्थमुपार्जितोऽपि व्रीहि. व्रीहिरेव । भा. ४।१।२।२ वर्णक ३ . ● 'व्रीहिभिः' इति कारक विभक्तिः यवनिरपेक्षान् ( व्रीहीन् ) प्रतिपादयति यागसाधनत्वेन, तथा 'यवै.' इति । टुप्. १०।८।८।१६.

■ ' व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽग्रयणेभ्यः ' इति प्रकृतौ द्रव्यविधिः ॥

' व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽग्रयणेभ्यः ' इत्यनेन व्रीहिकाल-यवकालान्तराले व्रीह्याग्रयणाभ्यासो विधीयते । यजिशब्देन प्रकरणिन एवोपस्थितेः । इति प्राप्ते, अन्तरालकाले नियमाभावो. दर्शपूर्णमासयोर्द्रव्यनियमविधिरयमिति समन्वय्यन्तराले ... । व्रीहिभिरेव इत्येवकारेण यवनिरासप्रतीतिः । संकर्ष. ३।१।१५ .

● 'व्रीहिभिर्यजेत' इति वचनात् न तावद् व्रीहयः साक्षात् मदीयन्ते, अथ च प्रदेयद्रव्यप्रकृतिरयात् एवमुपदिश्यते । शा. ३।४।१४।४० . ● ' व्रीहिभिर्यजेत, यवैर्यजेत ' । अत्र व्रीहियवयोर्विकल्प एव न समुच्चयः । वि. १२।३।४ . ● व्रीहिभि शुक्लादिभिः सोमारौद्रादियागे श्रूयमाणे. प्राकृतयवाना बाध. । १०।७।१९। ६४–७१ . ' सोमारौद्रादियागे श्रूयमाणे. ● ' इत्यत्र अधिकरण द्रष्टव्यम् । ● साधनपक्षे ( यागस्य फलसाधनत्वपक्षे ) कामपदोच्चारणाद्दृतेऽपि लभ्यते एव ( फल ), यथा ' व्रीहिभिः यजेत ' इति । टुप्. ९।१।१।२. ● स्वर्गादे. साधनत्वस्य ' व्रीहिभिर्यजेत ' इत्यादिवत् कामनाप्रयोगविरहेऽपि उपपत्ति. । सोम ६।१।१ . ● व्रीहीणां अपचारे नीवारा प्रतिनिधेया । भा. ६।३।१३।२७ ● व्रीहीणा अपूर्वसाधनत्वाकारो अवघाते विरुध्यते न व्रीहिस्वरूपम् । वि ९।१।१ वर्णक २. ● व्रीहीणा धर्मा· व्रीहित्वेन परिच्छिन्नाः, व्रीहिव्यक्तयो नीवारेषु सन्ति, तासामर्थे नीवारेषु क्रियन्ते । भा. ३।६।१८।३८. ● व्रीहीणा पुरोडाशप्रकृतितया यागाङ्गत्वम् । मीन्या. ● व्रीहीणा प्रतिनिधिर्नीवारा. । तेषु व्रीहिष्विव अवघातादिविषय. साक्षात् प्रवर्तन्ते । वि. ३।६।१४. ● ' व्रीहीणा मेध ' इति व्रीहिमन्त्रस्य नीवाराणा व्रीहिप्रतिनिधित्वे 'नीवाराणा मेध' इति ऊहो न कर्तव्य. । ९।३।९।२४–२७, मीको. पृ. १२२८ ' ऊहो न व्रीहिमन्त्रस्य· ' इत्यत्र अधिकरणं द्रष्टव्यम् । 'व्रीहीणा मेध सुमनस्यमानः' इत्यत्र 'नीवाराणा मेध सुमनस्यमानः ' इत्येव ऊहः कर्तव्यः , इदं च नीवाराणामेव प्रकृतिद्रव्यत्वे । ' इन्द्राय मरुत्वते नैवारमेकादशकपालम् ' इत्यादौ । वि. ९।३।१, ● व्रीहीणा यवा न प्रतिनिधिः, व्रीहियवयोः विकल्पितत्वेन समकक्षत्वात् । ६।३।१२ ● व्रीहीणा यागापूर्वार्थत्वात् तद्गुणत्वपयोगिप्रोक्षणादिधर्मग्राहकत्वम् । सु. पृ. ५३. ● व्रीहौ द्रव्ये धर्माः श्रुता. ते तत्कार्यापन्नेषु नीवारेषु प्रतिनिधिभूतेषु प्राप्यन्ते, तत्कार्यापत्त्या । न चोदकेन । भा. ७।८।३।१६ ● व्रीहिषु जलरुद्ध्याद्युपघातेन सारविकलेष्वपि प्रोक्षणावघातादिविषय. प्रवर्तन्ते एव । वि ३।६।१४ . ● व्रीहिषु यागाङ्गत्वेनैव विहितेषु योग्यतया पुरोडाशप्रकृतित्वेन अविरोधोपपत्तौ विशेषाधादरसाक्षाद्यागसाधनत्वाङ्गीकरणानौचित्यात् प्रकृतिता आश्रीयते । सु. पृ. ७९५.

● व्रीह्यलाभेन नीवारसत्त्वे कृते पुनर्व्रीहिलाभे व्रीहय एव ग्राह्या. । ६।३।१६।३५, मीको. पृ. ३१५७ ' मुख्यानुग्रहन्याय. ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● व्रीह्यवघातः गुणकर्म, व्रीहय संस्कार्याः । वि. २।१।८, ● व्रीह्यवघातस्य प्रधान प्रयोजक दर्शपूर्णमासयो । ४।२।११.

● व्रीह्यवघातन्याय । ११।८।२२।८५ मीको. पृ. ६८१ ' अवघातन्याय ' इत्यत्र अधिकरण द्रष्टव्यम् ।

मिश्रीभावे बाध्येत । तस्मात् विकल्प । भा १२।३।४।१५, * व्रीहियवौ यागेषु निरपेक्षौ साधनम् । १२।४।३।७ * व्रीहियवौ विधीयमानौ श्रुतिविहितेन आग्नेयाष्टाकपालेन न विरुध्येते, पुरोडाशापेक्षितप्रकृतिरूपत्वात् । न हि व्रीहीन् गृह्णन् अष्टाकपालं न करोति । तेनात्र न कर्मान्तरता । वा २।२।६।१७ पृ ५१३-१४ * व्रीहियवयोः नियमविधित्वाभावात् समुच्चयो न युक्तः । सु पृ १४० * नहि समानकार्यत्वेन व्रीहियवयोः एकस्यानर्थक्यात् अथान्तराधिकरणे निरूपणे । वा २।२।२।५ पृ ४६९ * 'समय पद निधि' ( पा० ५।१। ) इति पदमात्रनिर्देशे सामर्थ्यापक्षरत्वात् व्रीह्यादिप्रातिपदिकस्य च यवादिसापेक्षत्वेन व्याघातापत्तेः विभक्त्यन्तरायोगात् निरपेक्षाणामेव व्रीहियवानां तृतीयया करणत्वमवगीते, प्रदेय प्रकृतित्वेन द्रव्यान्तरात् एकविधानात् नैराकाङ्क्ष्यात्वगते च समुच्चयो न युक्तः । सु पृ १४१

* व्रीहियवान्यतरनियमस्य प्राकृतस्य चित्रेणी तण्डुलेषु बाध । भा १०।२।२१।३०

* व्रीहियवादय प्रत्येकं तुल्यार्थाः विकल्पन्ते । वाक्यसंयोगिनो हि ते परस्परनिरपेक्षाः स्वेन स्वेन वाक्येन विनियुज्यन्ते । वा २।२।८।१९ पृ ६१८, * व्रीहियवादिष्वपि तावत् प्रत्यक्षश्रुतिविहितेषु यदि कश्चित् यावज्जीवमपि एकमेव पक्षमाश्रित्य व्यवहरेत् न स कदाचिदपि उपालम्भास्पदं गच्छेत् । १।३।२।३ पृ १९२

* व्रीहियवन्याय ( व्रीहियवयो एककार्यत्वात् एकस्मिन् कर्मणि विकल्प ) । १२।३।४।१०-१५ मीको पृ ३९१० 'विकल्पाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * दधिघृतयो प्रणीताधर्मप्राप्तिः सत्यपि अकर्मान्तरत्वे आग्नेयहविःश्रपणसाधनत्वस्य नैमित्तिकसहश्रपणप्रयुक्तत्वेन नैमित्तिकतुल्यत्वात् फलचमसन्यायेन ( ३।५।१९ ) स्थानापत्त्यैव न तु व्रीहियवन्यायेन । भाट्ट ९।२।१३, * यत् एकादशकपालद्वादशकपालस्वरूपभेदारूप्यं परं भेदकारणमुक्तं तत् एकत्वेऽपि व्रीहियवन्यायेन विकल्पोपपत्ते अविरुद्धम् । कौ २।४।२।१२ पृ ११९ * यद्यपि जर्तिलगवीधुकयो विधिः स्यात् तथापि 'अनाहुति' इति निन्दया न स्वतन्त्रनिषेधोन्नयनम्, तत्फलस्य विकल्पस्य व्रीहियवन्यायेन पयोविधिवशेनैव सिद्धत्वात् । भाट्ट १०।८।४

* व्रीहियवविकल्प सौमारौद्रे चरौ कार्ष्णे न प्राप्त , किन्तूपदिष्टाः शुक्ला व्रीहय एव ग्राह्या । वि १०।७।१९

* व्रीहिशब्द जातिविशेषेण आकारविशेषेण चोपेत द्रव्यमाचष्टे । वि ३ ६।१४

* व्रीहिस्वरूपप्रयुक्त न भवति प्रोक्षणं दर्शपूर्णमासयो किन्तु अपूर्वप्रयुक्तम् । ९।१।५।११-१९

## श

● शंयू द्वौ दर्शपूर्णमासयोः । पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः । त्रि. १०।७।१३ । आश्वलायनेन वैकल्पिकः शंयुवाकः पत्नीसंयाजोत्तरमुक्तः इति तैत्रा. १।५।९ इत्यत्र सायणभाष्यम् । 'शंयुवाको भवेन वा' (आश्वश्रौ. १।१०)।

॥ शंयौ च सर्वपरिदानात् । ३।४।६।१७॥

दर्शपूर्णमासयोः 'तच्छंयोरावृणीमहे०' इति मन्त्रः शंयुवाको नाम पठ्यते । शंयुवाकवाक्यशेषे च 'तस्मात् ब्राह्मणायावगुरेत्, न हन्यात्, न लोहितं कुर्यात्' इति । सोऽयं अवगोरणप्रतिषेधः किं क्रतुधर्मः पुरुषधर्मो वा इति विचारे सिद्धान्तमाह । शंयौ शंयुवाक्ये अवगोरणादिप्रतिषेधः ये ते पुरुषधर्माः न क्रतुयुक्तपुरुषधर्माः । सर्वपरिदानात् 'योऽपगुरातै शतेन यातयात्, यो निहन्यात् सहस्रेण यातयात्, यो लोहितं करवत् यावतः प्रस्कद्य पांसून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानात्' इति वचनैः क्रतुबहिर्भूतसाधारणेन सर्वैरपि पुरुषस्य परिदानात् उपादानात् सम्बन्धात् । तस्मात् अवगोरणादिनिषेधः पुरुषधर्मः इति सिद्धान्तः ।

अत्र सुधा— "पूर्वसूत्रस्थापकृष्येतेति शब्दानुषङ्गेण सन्दंशन्यायेन च व्यवहितस्यापि कर्माधिकरणपूर्वपक्षसूत्रस्थाकर्मशब्दस्य (३।४।७।१२) अनुषङ्गेण शंयूपक्रमे वाक्ये यत् अकर्म निषिध्यते तत् प्रकरणादपकृष्येत (सर्वदानात्) सर्वानपत्य दर्शपूर्णमासकर्तुरनारभ्याधीतस्य पुंसो नरकपरिहारार्थं ब्राह्मणावगोरणादीनां दानात् सम्बन्धात् निषेधात् इति सूत्रयोजनार्थं 'सर्वं' इति गम्यम् । इति । ... स्वयं च सर्वेभ्यः ऋत्विग्भ्यः अनृत्विग्भ्यो ब्राह्मणेभ्यः परिपालनार्थं सम्प्रदानात् इत्येवं सूत्रं व्याख्यातुमाह ।" इति ।

अत्र भाष्यं तु "एतत् ज्ञात्वा, ब्रूमः । शंयौ च प्रकरणादुत्कर्षः । कस्मात् । सर्वपरिदानात् । सर्वानस्य ब्राह्मणस्य अयं प्रतिषेधः तत्र । न दर्शपूर्णमासगतेनैव नावगोरणादि कर्तव्यं इति" इत्येव । वै.

● शंय्वधिकरणम् । ३।४।६।१७. मीको. पृ. ६७७ 'अवगोरणन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● शम्यधिकरणम् । अत्र निषेधफलार्थवादः निरूपितः 'तस्मात् ब्राह्मणाय नावगुरेत' इति निषेधे 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्' इति दण्डशतयातनारूपफलवाक्ययोगात् । बाल. पृ. ५३.

● शंय्वन्तासु पत्नीसंयाजाभावेऽपि 'अग्नि होत्राऽयाट्' इति निगदो भवत्येव । संकर्ष. ४।२।११.

॥ शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् । १०।७।१२।३८॥

ज्योतिष्टोमे 'शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयन्ति' इति, 'इडान्ता आतिथ्या संतिष्ठते नानुयाजान् यजति' इति च श्रूयते । अत्र शंय्विडान्तत्वे प्रायणीयायाः शंय्वन्तत्वे, आतिथ्यायाः च इडान्तत्वे श्रूयमाणे प्रायणीयायाः शंय्वन्ततायाः कृत्स्नाङ्गसंस्थतायाश्च आतिथ्यायाः इडान्ततायाः कृत्स्नाङ्गसंस्थतायाश्च विकल्पः स्यात् । यदि प्रायणीया शंय्वन्तैव नित्या स्यात् आतिथ्या च इडान्तैव नित्या स्यात् तदा, परेषु तु शंयोः अनुयाजात् परेषु इडायाः परेषु च अङ्गेषु मध्ये पत्नीनां पत्नीसंयाजानां अनुयाजानां च प्रतिषेधः श्रूयमाणः अनर्थकः स्यात्, प्राप्तेरेवाभावात् । तस्मात् विकल्पः । तत्र कृत्स्नसंस्थानपक्षे पत्नीसंयाजधर्मं उत्तरमङ्गजातं प्रायणीयायाम्, अनुयाजवर्जं उत्तरमङ्गजातं च आतिथ्यायां करिष्यते । तस्मात् विकल्प इति पूर्वः पक्षः ।

नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् । ३९ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । न विकल्पः किंतु शंय्विडान्तत्वमेव । पत्नीसंयाजानुयाजप्रतिषेधस्तु नित्यानुवादः स्यात् । शंय्वन्तत्वविधानात् पत्नीसंयाजप्रतिषेधः सिद्ध एव तमेवानुवदति 'न पत्नीः संयाजयन्ति' इति । एवं इडान्तत्वविधानात् अनुयाजप्रतिषेधः सिद्धः अनुवदति 'नानुयाजान् यजति' इति । एष प्रतिषेधो नित्या-

मिश्रीभावे बाध्येत । तस्मात् विकल्प । भा १२।३।४।१०, * व्रीहियवौ यागेषु निरपेक्षौ साधनम् । १२।४।३।५ * व्रीहियवौ विधीयमानौ श्रुतिविहितेन आग्नेयाष्टाकपालेन न विरुध्येते, पुरोडाशापेक्षितप्रकृतिरूपत्वात् । न हि व्रीहीन् गृह्णन् अष्टाकपालं न करोति । तेनात्र न कर्मान्तरता । वा २।२।६।१७ पृ ५१३–१४ * व्रीहियवयो नियमविधित्वावगमात् समुच्चयो न युक्त । सु पृ १४० * नहि समानकार्यत्वेन व्रीहियवयो एकस्यानर्थक्यात् अर्थान्तरसाधकत्व विज्ञायते । वा २।२।७।८ पृ ४६९ * 'समथ पद विधि ' ( पा० २।१। ) इति पदमात्रविधे सामर्थ्यापेक्षत्वात् व्रीह्यादिमात्रपदस्य च यवादिसापेक्षत्वेन व्याघातापत्ते विभक्त्यन्तरायोगात् निरपेक्षाणामेव व्रीहियवानां तृतीयया करणत्वप्रतीते, प्रदेयप्रकृतिलक्षण द्रव्यपरत्वात् एकविधानेन नैराकाङ्क्ष्यावगमेनैव समुच्चयो न युक्त । सु पृ १४१

* व्रीहियवान्यतरनियमस्य प्राकृतस्य चित्रेष्टौ तण्डुलेषु बाध । भा १०।२।३१।७०

* व्रीहियवादय प्रत्येकं तुल्यार्थो विकल्पन्ते । यागसंयोगिनो हि ते परस्परनिरपेक्षा स्वेन स्वेन वाक्येन विनियुज्यन्ते । वा २।२।७।१० पृ ५१८, * व्रीहियवादिष्वपि तावत् प्रत्यक्षश्रुतिविहितेषु यदि कश्चित् यवव्रीहिमपि एकमेव पक्षमाश्रित्य व्यवहरेत् न स कदाचिदपि उपालम्भास्पदं गच्छेत् । १।१।२।३ पृ १९३

* **व्रीहियवन्याय** ( व्रीहियवयो एककार्यत्वात् एकस्मिन् कर्मणि विकल्प ) । १२।३।४।१०–१५ मीको पृ ३८१० 'विकल्पाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * दधिदृषदो प्रणीताधर्मप्राप्तिसत्यपि अकर्मान्तरत्वे आग्नेयहवि श्रपणसाधनत्वस्य नैमित्तिकसहश्रपणप्रयुक्तत्वेन नैमित्तिकतुल्यत्वात् फलचमसन्यायेन ( ३।५।१९ ) स्नानापरत्वैव न तु व्रीहियवन्यायेन । भाट्ट ९।२।१३, * यत् एकादशकपालत्वद्वादशकपालत्वरूपभेदाश्रय पर भेदकारणमुक्तं तत् एकत्वेऽपि व्रीहियवन्यायेन विकल्पोपपत्ते अविरुद्धम् । कौ २।४।२।१३ पृ ११९ * यद्यपि जर्तिलगवीधुकयो विधि स्यात् तथापि 'अनाहुति' इति निन्दया न स्वतन्त्रनिषेधोन्नयनम्, तत्फलस्य विकल्पस्य व्रीहियवन्यायेन पयोविधिबलेनैव सिद्धत्वात् । भाट्ट १०।८।४

* व्रीहियवविकल्प सौमारौद्रे चरौ काम्ये न ग्राह्य, किन्तु उदिता शुक्ला व्रीहय एव ग्राह्या । वि १०।७।१९

* व्रीहिशब्द जातिविशेषेण आकारविशेषेण चोपेत द्रव्यमाचष्टे । वि ३।६।१४

* व्रीहिस्वरूपप्रयुक्तं न भवति प्रोक्षणं दर्शपूर्णमासयो किंतु अपूर्वप्रयुक्तम् । ९।१।५।११–१९

नुवाद । कर्मण शयुवाकोत्तरकर्मण इष्टोत्तरकर्मणश्च अप्रकृतत्वात् शब्देन अनुक्तत्वात् पत्नीसंयाजानां याजनानापि अकरण सिद्धमेव । अतो नित्यानुवाद । तस्मात् प्रणयनीयाया शम्यन्तर नित्य आनिध्यायाश्च इष्टान्त नित्य इति सिद्धान्त । के.

● 'शम्विद्वान्तत्वे विकल्प स्यात्०' (१०।७। १२।३८) इत्यधिकरणे 'न पत्नीं संयाजयन्ति' इति शंयन्तमस्थानिषे अर्थवाद पत्नीसंयाजानतुगमनलाघवेन तप्रशमार्थे इति निर्णीतम् । रसायनम् पृ ८३

● शंयुवाक सत्भक्ष शेषकार्यम् । भा. ३।४। १४।३७

● शंयुवाककालभक्ष चतुर्थ. प्रकृतौ । भा १०।२।३।१३

● शंयुवाककालीन भक्ष । तदर्थे उपहार क्रियते । उपहार समर्पणम् । नि. १०।२।४.

● शंयुवाकमन्त्र 'तच्छंयोरावृणीमहे०' इति । त होता पठति । नि १०।७।१२.

● शंसन नाम स्तोत्रस्य स्वावर्तैर्गुणै सम्बन्ध-कीर्तन गानरहितम् । तदेव शस्त्रम् । नि. २।१।५, शंसन होता करोति । ३।७।९.

● शकटाभ्या हविर्धाननामकाभ्या भिन्ने शकटे पशुपुरोडाशादीना हविर्निर्वापो ज्योतिष्टोमे । १२।१।७। १४-१६. मीको. पृ १०८६ 'ज्योतिष्टोमे इत्यादौ०' इयत्र अधिकरण द्रष्टव्यम् ।

● शकटद्वय हविर्धाननामक ज्योतिष्टोमे महावेद्या मन्त्रपूर्वक प्रवर्त्य हविर्धानमण्डपे स्थाप्यते । वि १२।१।७

● शकुनिग्राहकस्य शकुनि निगृह्णत इव मनि भवति । शनै पदन्यास, हविःनिधानम्, अशब्द करण च । एवमाचरति शकुनिगृह्णतेति । (अयमेव शकुनिग्राहकन्याय) । शकुनिग्राहकस्य यस्मिन् देशे शनै पदन्यासो न स तद्देशार्थ, अपितु तद्देश निगृह्य शकुनेरर्थेन क्रियते । भा. ९।१।६।२२.

☞ शकुनिगृह्णन्याय । यथा पक्षी च सूत्र च भिन्न तथा जीवपो भिन्नौ । माहसी ८१७.

● 'शकृत् प्रविध्यति' इद प्रधानपूर्वकालिक प्रतिपत्तिकर्म । (इद ४।१।१९ इयत्र प्रतिपादितम्) । बाल. पृ ८२, ● 'शकृत् प्रविध्यति' इत्र साक्षाद्वि नियुक्तोपादानानुपङ्गसिद्धप्रतिपत्त्यविषया प्रतिपत्ति. । पृ. २४.

☞ शकृल्लोहिताधिकरणम् । अग्नीषोमीये पशौ शकृल्लोहितनिरसन प्रतिपत्ति । शकृत् लोहित च न पश्वालम्भप्रयोजकम् ॥

पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् । ४।१। १२।२७ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीय. । तत्र श्रूयते 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया' इत्येवमादि । तथा 'लोहित निरस्यति' 'शकृत् संप्र-विध्यति' 'स्वनिमतो बर्हिरद्क्तराऽपास्यति' इति । तत्र संदेह, किं हृदयादिभिरवदाने इज्या पशो. प्रयोजिका, उत शकृत्वध्याघो लोहितनिरसन च तदपि प्रयोजक इति । किं प्राप्तम् ? 'एकनिष्पत्ते. सर्वं सम स्यात्' (४।१।९।२२) । उभय प्रयोजकमिति । एवं प्राप्ते, ब्रूम. । पशौ शकृल्लोहितयो अप्रयोजकत्वम् । न हि तदर्थ. पशोरालम्भ । 'शकृत् संप्रविध्यति', 'लोहित-मस्यति' इत्युच्यते, न पशोरालम्भस्य चेति । पशुरग्नी-षोमीयो वाक्येन 'यो दीक्षितो यदग्नीषोमीय पशुमा-लभते' इति । शकृल्लोहिते पशो प्रकरणेन भवेताम्, प्रकरण च वाक्येन बाध्यते । ननु एते शकृल्लोहिते प्रति-पादेते, तेन यागार्थस्य पशो, नान्यस्येति निश्चय । एव चेत् अप्रयोजके शकृल्लोहिते इति । किं भवति प्रयोजनम् ? साध्ये सति शकृल्लोहिताभावे अन्य पशु-रालम्भनीय, शकृल्लोहितयोरप्रयोजकत्वे लोप ।

शा — सिद्धान्तश्लोक — 'यागार्थ. पशुरत्पन्नो हवि प्रकृतिभावत । हवींषि हृदयादीनि तेनैवात प्रयुज्यते ॥' शकृल्लोहितकर्म तु प्रतिपत्ति मात्रम् ।

सोम— कपालस्य पुरोडाशे श्रुतस्य तुषोपवापे विनियोगात् तुषा पुरोडाशमात्रप्रयुक्तत्वम्, [illegible] तु न हृदयादिमात्रप्रयुक्तत्व तत्प्रयत्नेन श्रुतस्य अन्यत्र

सोम— पूर्वैवप्ध्येण प्रत्याख्यानात् संगतिर्बोध्या। सूत्रार्थस्तु– सामर्थ्याद्विधेः व्यवस्थितार्थत्वकल्पना स्यात् सामर्थ्यंकल्पितशब्दस्य विधिवाक्यैकदेशत्वादिति।

वि— 'स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यसौ।, आज्ये मांसे पुरोडाशे यथा वा व्यवस्थिताः ॥, व्यवस्थापकराहित्यात् सुतरां अव्यवस्थिताः। व्यवस्थापकताशङ्कासद्भावेन व्यवस्थितिः ॥'

भाट्ट– 'स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति' इत्यादौ विधेः अवदेयद्रव्यविषये संदिग्धस्य सामर्थ्यात् निर्णयः– स्रुवेण द्रवद्रव्यस्येव आज्यादि, स्वधितिना मांसादि, हस्तेन संहतं पुरोडाशादि। अनया सामर्थ्यमहत्त्वाऽवद्यतिपदेनैव एवमेव द्रवद्रव्यावदानस्योद्देश्यत्वात् तदनुवादेन स्रुवादिविधौ न किञ्चित् बाधकम्। एवं 'अञ्जलिना सक्तून् जुहोति' इत्यादावपि न संपुटाकारोऽञ्जलिः, अपि तु व्याकोशाकार एव। तदेवं निःश्रेयसाद्यभ्युदयमूलत्वात्तद्विधेयवाक्यशेषसामर्थ्यरूपाणि षडपि प्रमाणानि धर्माधर्मयोर्निरूपितानि। अत: परं भेदादिना तत्स्वरूपं निरूप्यते।

मण्डन— 'अनुष्ठानात्सामर्थ्यं।' अनुष्ठानस्य कर्तव्यस्य अवगमः निश्चय अर्थात् तत्तद्वस्तु योग्यताद्वारा भवतीति शेषः।

शंकर— 'सामर्थ्याच्च स्रुवादौ प.।' (सः नाम निर्णय इत्यर्थ.)।

● शक्त्यभाव.। यत्र तु अन्यविषयेव शक्त्या अकल्पितया अप्रवृत्ति तौ (प्रीतिप्रयोगौ) स्थितः, तत्र अनुपलभ्यमानः शक्त्यभावः प्रतीयते। यथा आकृतिशब्दानां व्यक्तौ, लिङ्गादिशब्दानां च भावनायाम्। वा. ११४।१३ पृ ९१२.

● शक्त्यभाववादिनो वैशेषिकाः। मु पृ. १४४१.

● अज्ञातज्ञापिकस्य अप्रयोजकत्वयोग.। मु पृ १२१०.

● शक्तिग्रहः। अत्र शङ्कते– कथं वृद्धेभ्यः प्रतिपद्यते इति। नास्ति दृष्टेऽनुपपन्नं नाम। दृष्टा बालाः वृद्धेभ्यः प्रतिपद्यमानाः। भा १।१।५ पृ. ५८। प्रयोगप्रणीयधीनं हि शब्दशक्तिज्ञानम्। वा. १।३।९।३२ पृ. ३१६. ● शक्तिग्रहश्च व्याकरणादिना। तदुक्तम्— 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥' इति। अनुमानोपमानशब्दाः एव शक्तिग्राहकाः। व्यवहारप्रसिद्धिसामानाधिकरण्यविवरणानां अनुमानान्तर्भावः। व्याकरणवाक्यशेषकोशानां शब्दान्तर्भाव इति नव्याः। व्याकरणात् तृतीयादेः करणत्वकर्तृत्वादौ शक्तिग्रहः। उपमानेन उपमितिरूपः शक्तिग्रहः। कोशो वैजयन्त्यादिः। आप्तवाक्यं 'घटो घटपदवाच्यः' इत्यादि। अत्र च आप्तवाक्यत्वेन न शक्तिग्रहहेतुता, किंतु वाक्यत्वेन लाघवात्। एवं च 'यत्र दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥' इत्यादिवाक्येन शक्तिग्रहः। व्यवहार. प्रयोज्यवृद्धप्रयोजकवृद्धव्यवहारः। तथाहि, प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यवृद्धप्रवृत्तिं उपलभमानो बाल प्रयोज्यवृद्धस्य तज्ज्ञानम्, ज्ञाने च शब्दस्यैव हेतुताम्, तदन्यथाऽनुपपत्त्या च शक्तिं परिकल्पयन् आवापोद्वापाभ्यां तत्तत्पदस्य तत्तदर्थे शक्तिमवधारयति। तदनन्तरं व्याकरणोपमानकोशाप्तवाक्यविवरणवाक्यशेषप्रसिद्धपदसामानाधिकरण्यैः यथायोग शक्तिमवधारयति इति दिक्। मणि. पृ. ७४–७५, ● शक्तिग्रह. व्यवहारेणैव इति प्राभाकराः। पृ ८१.

● शक्तिजन्यबोधद्वारा अनेन मन्त्रेण 'आग्नेयोऽत्यपूर्वदेवता संकुर्यात्' इति लिङ्गकल्प्यश्रुतिकल्पिता ऊहसिद्धिः। भाट्ट ९।१।२ पृ. ४९.

● शक्तिभेद प्रतिपदम्। सु. पृ. १२१०

● शक्तिसद्भावव्यवस्थापकेऽपि अवश्य निष्कृष्य शक्तिमात्र श्रुतिदृष्ट्या अभिधेयमेव यत्। वा ३।४।८।१३ पृ. ९३४.

● शक्तिमात्रस्य कारकत्वे सामानाधिकरण्ययोगः। सु पृ. १८४०.

● शक्तिरहितस्य व्यापारायोग। सु. पृ. १४४०.

२।१।१।१ पृ. ३७८, ● अन्यत्र गतया शक्त्या अन्यस्य अविनियोगः । ३।३।७।१४ पृ. ८२५, ● शक्तेस्तु शक्त्यन्तरं नास्त्येव । १।४।२।२ पृ. ३२४. ● शक्तेः प्रमाणान्तरनियतत्वात् विधिलभ्यानुगताया अपि न ग्राह्यायैना । विवि. पृ ४३१. ● शक्ते शब्दाभिन्नत्वात् तद्भेदे शक्तिभेदोचितम् । सु. पृ २६०. ● ' देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः । शक्तीनां कारणस्थाना स्वकार्यनियमं प्रति ॥ २५३ ॥ शक्तयोऽपि च भावाना कार्यार्थापत्तिकल्पिताः । प्रसिद्धाः पारमार्थिक्य. प्रतिकार्यं व्यवस्थिताः ॥ ' २५४ ॥ श्लोवा. शून्यवादे ● विलक्षणकार्यान्यथाऽनुपपत्त्या स्वतो विलक्षणानामेव शक्तीना कल्पना । सु पृ. १४३१. ● सर्वशक्तीना अर्थापत्तिरेवैक प्रमाणम् । बा. ३।४।४।११ पृ. ११२. ● शक्ती । सहजशक्ती आधेयशक्ती च अर्थापत्तिमानम् । तथाहि, वीजत्वा-वच्छेदेन अङ्कुरजनकत्वे गृहीते मूषिकाऽऽघ्रातेषु तद-दर्शनेन कारणत्वसंदेहे मूषिकाऽऽघ्राणनाश्या व्रीहिनिष्ठा कारणशक्तिः कल्प्यते । एवं यागजन्य स्वर्गजनकमपूर्वं कल्प्यते । इति जीर्णा. । मणि. पृ. ६१.

● शक्त्यधिकरणम् । शक्त्यनुसारेण कर्मसु पदार्थविनियोगव्यवस्था ॥

अर्थाद्वा कल्पनैकदेशत्वात् । १।४।१४।२५ ॥

भाष्यम्-- ' स्रुवेण अवद्यति, स्वधितिना अव-द्यति, हस्तेन अवद्यति ' इति श्रूयते । तत्र सदेहः, किं स्रुवेण अवदानार्थं सर्वस्य द्रवस्य संहतस्य मांसस्य च । तथा स्वधितिना, हस्तेन च, उत यौग्या अर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेन इति । अविशेषाभिधानात् अव्यवस्थेति । एवं प्राप्ते, ब्रूमः । अर्थाद्वा कल्पना,-सामर्थ्यात् कल्पनेति । स्रुवेण अवद्येत् यथा शक्नुयात् । तथा यस्य शक्नुयात् तस्य येति । आत्मवत्कल्पनासमर्थं ब्रुवतां शक्तिः सह-कारिणी । एवं येन् यथाशक्ति व्यवस्था भविष्यतीति । यथा, ' आर्द्रयेना सक्तून् प्रतन्वे (दाराली) जुहोति ' इति । किमर्थमैवोद्धृत्य, न व्यवस्था अर्थात् कर्तव्य. । तथाहि शक्यते होमो निर्वर्तयितुम् । तद् यथा, कटे भुङ्क्ते कांस्यपात्र्या भुङ्क्ते इत्यर्थात् कल्प्यते, कटे समासीन. कांस्यपात्र्या ओदनं निधाय भुङ्क्ते इति ।

वा-- ' अथ यत्रेति संदिग्धे वाक्यशेषो न विद्यते । तत्र सामर्थ्यसिद्धेन विध्यंशेनैव निर्णयः ॥ ' देवताप्रसादाभयप्रार्थनादौ संहतहस्त-संयोगमात्रमञ्जलिः, ' नाञ्जलिना वारि पिबेत् ' इत्यादौ व्याक्रोशः । सक्तुहोमचोदनाया शब्दात् संदेहे सत्यसति च आकोशस्य वाक्यशेषे अन्यथानुपपत्तेरेव आकोशा-श्रयणम् । ननु अनेनैव न्यायेन यथा शक्नुयादिति वाक्यशेषात् अन्धादीना आज्यावेक्षणादिरहितः कर्मा-धिकारः स्यात् । न, असंदेहात् , संदिग्धनिर्णयार्थात् तु एष कल्पना भवति । न च अधिकारे संदेहः, समस्तधर्मोपेतं यथा शक्नुयात् तथा कुर्यादिति वाक्य-शेषात् । सन्ति च तादृशस्य कर्तारः चक्षुष्मदादयः इति न प्रयोगचोदनान्यथानुपपत्तिः । यत्र तु यावज्जीवचोदना-दावेव भविष्यति तत्र शक्तिकृताङ्गत्यागेऽपि सत्यवैगुण्यं प्रधानस्य चोदितमित्याश्रयिष्यामहे एव । तस्मात् वाक्य-देव लब्धात्मको विधिस्तावत् यत् कल्प्यते तद्वैदिकम्, सिद्धे तु तत्कल्पन पौरुषेयत्वात् अप्रमाणं सामर्थ्याधीन-त्वाद्वाक्यशेषसिद्धेः । आह च- ' यथैव पाठः प्रति-पत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति महत्त्वभागात्तु समामनेयुः ॥ इति श्रुतवहुमार्गं मन्त्रविध्यर्थवादैः स्मृतिपरिचय-मुदारं वेदशालोपगूढम् । अनभिभवसमर्थं धर्म-दुर्गं प्रविश्य प्रतिभजति समस्तामर्थचिन्ता-मिदानीम् ॥ "

शा -- विवे. इदानीं श्रुतिवादितप्रामाण्यस्य संदिग्धा-र्थनिर्णयेऽपि सामर्थ्यस्यापि प्रामाण्यं प्रतिपाद्यते । अनारभ्यविधिप्राप्तत्वात् आदर्शविधायकस्य शक्तिः सह-कारिणीत्यङ्गीकरणं तस्मात्प्रतिपद्यते विधिरेव यथा सामर्थ्यं विधेय व्याख्यास्यति ' द्रव्यादिषु स्रुवादीनां, व्याक्रोशस्य च सक्तुषु । अर्थापत्तिवशात्तस्मात् व्यवस्थैवेत्यवस्थितम् ॥ '

* शक्तिरूपः एव च क्रियाकारकयोः संबन्धः इति करणविभक्त्यन्तर्गतत्वम् । वा. २।२।११।२६ पृ. ५५१.

* शक्तिवादः । एतेन बीजादिषु अङ्कुरजननशक्तिकल्पना व्याख्याता । किं पुनः शक्तिकल्पना विना नोपपद्यते । बीजादिषु सत्सु अङ्कुरानुत्पत्तिदर्शनात् असत्सु चादर्शनात् बीजादीनां अङ्कुरादिकारणत्वं अवगम्यते । सत्स्वपि च बीजेषु मूषिकाघ्रातेषु अङ्कुरानुत्पत्तेः अकारणत्वं प्रतिभासते । सोऽयं कारणत्वाकारणत्वयोः विरोधः शक्तिकल्पनया समाधीयते । नूनं अस्ति अतीन्द्रियमपि रूपं यद्भावात् कदाचिदङ्कुरोत्पत्तिः, यस्य च मूषिकाऽऽघ्राणेन नाशात् कदाचित् अनुत्पत्तिः इति कल्प्यते । ( ननु ) घ्राणाभावोऽपि अङ्कुरस्य कारणम्, भावे च सति तदभावादेव अनुत्पत्त्युपपत्तेः अलं शक्तिकल्पनया इति चेन्न । घ्राणक्रियायाः क्षणिकत्वात् उत्तरकालं तदभावे सत्यपि अङ्कुरानुत्पत्तेः । प्रागभावः कारणं न प्रध्वंसाभावः इति चेन्न । अभावत्वाविशेषात् । नहि प्रागभावप्रध्वंसाभावयोः प्रागूर्ध्वकालभेदं मुक्त्वा किंचिदपि रूपवैलक्षण्यमस्ति । न च अविलक्षणे कारणे कार्यवैलक्षण्यं संभवति । प्रागभावस्य प्रध्वंसाभावात् विलक्षणमस्ति रूपं इति चेत्, कल्प्यमेवं सति किंचित्, तच्च अभावे कल्प्यतां बीजस्वरूपे वा इति बीजस्य साक्षादङ्कुरकारणत्वात् तत्रैव कल्पयितुं युक्तम् । एवं यागादेः अपूर्वस्वर्गादिसाधनशक्तिकल्पनं ऊहनीयम् । कथं पुनः शक्तिमति यागे विनष्टे निराधारा शक्तिरवतिष्ठते । न निराधारा भविष्यति, आत्माधारत्वात् । कथमन्यशक्तिरन्यत्र स्यात् । तथाऽवगमात् । नात्यन्त स्वाश्रयैव शक्तिरिति नियमोऽस्ति । सा हि कार्यतः कल्प्यमाना यत्रैव कार्याय कल्पते तद्गतैव कल्प्या । सा चेयं अपूर्वाख्यशक्तिः यागाश्रया सती यागविनाशाय स्वर्गनिष्पत्तये पर्याप्नुयात् इत्यात्माश्रया कल्प्यते । यथा आह ' शक्तिः कार्यानुमेयत्वाद् यद्गतैवोपयुज्यते । तद्गतैवाभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा ॥ ' इति एवमन्याश्रया सती शक्तिरिति स्थापितम् । तस्य हि कल्पनाप्रमुखत्वादिषु सा कल्प्यते तावता तच्छक्तित्वम् । लोकेऽपि प्रसिद्धमेतत् वैश्वानरसामर्थ्यात् चिरवृत्तेऽपि तस्मिन् बहुपुण्यादिकं अद्य मे जातं इति लौकिका व्यवहरन्ति । तस्मादनवद्यम् । शा. १।१।५ पृ. ८०.

* शक्तिवादः । ननु एवं ( अनुमानेन ईश्वरस्य असिद्धिवत् ) ' वह्निः दाहानुकूलातीन्द्रियधर्मसमवायी, दाहजनकत्वात् अदृष्टवत् आत्मवत् ' इत्यनुमानस्य अनुकूलतर्काभावेन अप्रयोजकत्वात् उत्तेजकाभावविशिष्ट–मण्यादिप्रतिबन्धकाभावस्यैव दाहजनकतया मण्यादिसमवधानदशायामपि शक्तिकल्पनस्य अनुपपत्तेः तद्बोधकवेदाभावाच्च शक्तिरपि न सिध्येत् । इति चेन्न । तृणारणिमणीनां व्यभिचारेण वह्नित्वावच्छिन्नजनकत्वग्रहानुपपत्त्या कार्यनिष्ठवैजात्यकल्पनापूर्वकहेतुहेतुमद्भावत्रयकल्पनं अपेक्ष्य तृणादिनिष्ठजनकतावच्छेदकसहजशक्त्यङ्गीकारेण एकहेतुहेतुमद्भावकल्पनालाघवतर्कसहकृततृणादिपक्षकवह्निजनकत्वहेतुकतादृशधर्मानुमानस्य तत्र मानत्वात् । एवं वैकल्पिकव्रीहियवयोरपि हेतुताभेदे लाघवं व्यभिचारवारणं च ।

न च प्रदेयप्रकृतित्वेन उभयोर्हेतुत्वात् जनकतावच्छेदकशक्त्यभावेऽपि न व्यभिचार इति वाच्यम् । व्रीहिनिष्ठकारणताग्रहे प्रदेयप्रकृतित्वग्रहः तद्ग्रहे च तद्ग्रहः इत्यन्योन्याश्रयात् ।

नापि आग्नेयत्वव्याप्यवैजात्यस्य कार्यतावच्छेदकत्वकल्पनेन व्यभिचारपरिहारः । तादृशजातौ मानाभावात् । व्रीहिजन्यतावच्छेदकतयैव तत्कल्पने विकल्पो दत्तजलाञ्जलिः स्यात् । शक्तेश्च प्रत्येकं पर्याप्ततया न समुच्चयापत्तिः । अन्यथा अन्यतराभावविशिष्टान्यतरस्य उभयाभावविशिष्टव्रीह्यादेर्वा हेतुत्वकल्पने गौरवापत्तिः व्यभिचारश्च । अतो जनकतावच्छेदकतया सहजशक्तिस्वीकार आवश्यकः ।

एवं आधेयशक्तिरपि प्रोक्षणादिजन्या व्रीहिनिष्ठा । अन्यथा प्रोक्षणादिजन्यापूर्वस्य आत्मनिष्ठतया व्रीहीणां प्रोक्षणकर्मत्वानुपपत्तिः । अदृष्टवदात्मसंयोगेन अदृष्टवत्तया स्वर्गगोचरत्वे घटादीनामपि तत्कर्मत्वापत्तिः । तेन व्रीहिजन्यापूर्वजनिका आधेयशक्तिरपि आवश्यकी ।

* 'शतोक्थ्य भवति'। अत्र शतोक्थ्यं नाम कर्मान्तरम्। तत्र च न केवलं उक्थ्यस्य प्रसिद्धस्य शतवारं आवृत्तिः, द्वादशाहात् तु तत्र विध्यन्तो ग्राह्यः। भा ८।३।४।८-९ * 'शतोक्थ्य भवति' इत्यत्र द्वादशाहिको दशरात्रः दशकृत्वः प्रवर्तते। तस्मिंश्च दशरात्रे अभितो द्वौ अग्निष्टोमौ। तत्र शतोक्थ्ये प्रतिदशकं द्वौ द्वौ अग्निष्टोमौ उक्थ्यसंस्थया वर्धयितव्यौ। शा ८।३।५। सोम -- दशरात्रे अभितो द्वावग्निष्टोमौ मध्ये अष्टौ उक्थ्याः। केषांचित् सप्त उक्थ्याः। तृतीयः षोडशी। तत्र प्रतिदशकं द्वौ द्वौ अग्निष्टोमौ। तथा च विंशतिरग्निष्टोमाः। ते उक्थ्यसंस्थया वर्धयितव्याः। अग्निष्टोमस्तोत्रस्तोत्रसमनन्तरं उक्थ्याख्यस्तोत्रत्रययुक्ताः कार्या इति यावत्। शतोक्थ्ये एकः षोडशी इति पक्षे च षोडशिनः उक्थ्यस्तोत्रपक्षे कर्तव्येऽपि द्वादशाहस्थेनैव षोडशिस्तोत्र रहितस्य प्रवृत्तिः। न तु ज्योतिष्टोमिकस्य। * शतोक्थ्य संस्थानम्। दशरात्रं दशकृत्वोऽभ्यस्यमानं प्रत्यह उक्थ्यस्तोत्रैः समाप्यमानं शतोक्थ्यम्। तत्र द्वादशाहगतदशाहस्य विध्यन्तः सामर्थ्यलिङ्गात्। दशाहे चाद्यन्तौ अग्निष्टोमौ, इति विंशतिसंख्याकाग्निष्टोमेषु स्तोत्रविवृद्ध्या उक्थ्यत्वं संपादनीयम्। स्तोत्राणि तु तत्र ज्योतिष्टोमादेव ग्राह्याणि, न द्वादशाहात्। नि ८।३।४-५ * शतोक्थ्ये अग्निष्टोमसंस्थानां परत्वात् उक्थ्यस्तोत्रविवृद्धिः कर्तव्या, सा साक्षात् एकाहाग्निष्टोमादेव ग्राह्या न तु परम्परया द्वादशाहात्। भा ८।३।७। १०-११

* शतोक्थ्यादौ ज्योतिष्टोमिकोक्थ्यादिस्तोत्रग्रहणातिदेशः। ८।३।५।१०-११ मीको पृ २२५ 'अतिदेशः शतोक्थ्यादौ०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* शतोक्थ्यादिसाद्गुण्येषु द्वादशाहिकधर्माणामतिदेशः। ८।३।४।८-९ मीको पृ २२३ 'अतिदेशः शतोक्थ्यादिसांगुण्येषु०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* शत्रुनाशकामः 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्'। भा ३।३।७।२० पृ ७७१

* शब्द अपि प्रमाणम्, न पक्षैर प्रमाणानि। येन येन हि प्रतीयते तत्तत्प्रमाणम्, शब्देनापि प्रतीयते। भा १।१।५।५ (वृत्तिकारग्रन्थे) पृ ५९ * शब्द अवर्णात्मक (न वर्णात्मक) अभ्युपेयः। तस्य चार्थवाचकत्वमनिरुद्धम्। तेन स्फोटलक्षणः शब्द अभ्युपगम्यताम् (इति वैयाकरणाः)। ऋजु पृ ११० * शब्द आकृतिप्रत्ययस्य निमित्तम्, आकृतिप्रत्ययो व्यक्तिप्रत्ययस्येति। (तस्मात्) शब्द आकृतिवचन इत्येतन्न्याय्यम्। भा १।३।९।३३ पृ ३१७। 'गौ' 'अश्व' इत्येवमादयः शब्दाः आकृतेरभिधायकाः इति सिद्धम्। १।३।९।३५, * शब्द एकार्थ एव। योऽस्य प्रथममुच्चरितस्य अर्थः, शतकृत्वोऽपि उच्चरितस्य स एवार्थो भविष्यति न्याय्य। २।३।१४। २८ * शब्द एव देवतारूपो भवति। सकर्प ४।३।७ * शब्द कर्तृगुणवचनः सन् द्रव्य अभिधातुं नहि शक्नोति। भा ३।१।६।१२ पृ ६८६, * शब्दश्च बलवान्, न वाक्यम्। शब्दात् पत्नीसंयाजानां विधानम्, वाक्येन बाधः। इति पूर्वपक्ष। ३।२।१०।२०, * शब्दश्च साक्षात् फलमाहेति वक्ष्याम। ६।१।२।९ * शब्द जात्यादिविशिष्ट द्रव्यमभिदधन् न विशेषणमनभिधाय विशिष्टे वर्तते। वा ३।१।७।१४ पृ ७१४ * शब्द यावत् अर्थ यया शक्त्या अयमभिधत्ते स एव न्याय्य। टुप् १०। ३।१४।५० * शब्द। 'निपुणः, पौद्गलो वाऽयमाकाशसाधनो गुणः। वर्णादिभ्योऽन्यो नादात्मा वायुरूपोऽथवाचकः। ३१९॥ पदवाक्यात्मकः स्फोटः। ३२०॥ श्लोवा १।१।६ (रत्नाकर -- सत्वरजस्तमस्वभावं सांख्यानाम्, आर्हतानां पौद्गलस्य, काणादानामाकाशगुणो नादात्मा, शिक्षाकारस्य वायुरूपोऽर्थवाचकः, स्फोटश्च द्विविधो वैयाकरणाभिमतः)। * शब्द नैत्यत्वस्तुतिपरः। कणिका पृ २७५ * शब्द द्रव्य इति मीमांसकाः। 'नास्य साम द्रव्येण सह संबन्धो विद्यते'। भा ३।३।१।८ * शब्दो द्रव्य इति मीमांसकाः। ननु श्रोत्रेन्द्रिय ग्राह्यतया शब्दे गुणत्वमिति चेत्। न। अयं रूप

त्वादिसामान्ये च व्यभिचारात् । प्रत्यक्षद्रव्यगुणत्वाभाव-विशिष्टप्रत्यक्षेण गुणत्वाभावानुमानाच्च । तत्रापि धर्म-वैशिष्ट्येन द्रव्यत्वानुमानम् । मणि. पृ. २० ● शब्दो द्रव्यम् । द्रव्येषु घृतशब्दः स्यात्, ऋक्त्वादिषु ऋचा वाचकः । भा. ७।३।१४।३६ . ● शब्दः ( प्रमाणं ) द्विविधः लौकिकः वैदिकश्चेति । वैदिकोऽपि द्विविधः उपदेशातिदेशभेदात् । शास्त्र. पृ. ८ . ● शब्दो द्विविधः वर्णो ध्वनिश्च । द्वयोरनुगतं शब्दत्वम् । वर्णत्वं ध्वनित्वं च तदवान्तरसामान्ये । वर्णविशेषाः गकारककारादयः, ध्वनिविशेषाः शङ्खनादादयः । ध्वन्यात्मकश्च शब्दो वायुगुणः । स एव च वर्णात्मकानां गकारादीनामभिव्यञ्जकः प्रभाकरमते भाट्टानाम् । स च वायौ वर्णविशेषं प्राप्ते संयुक्तसमवायेन श्रोत्रं संस्पृश्य तेन गृह्यमाणः कदाचित् वर्णरहितः केवलो गृह्यते शङ्खघोषादिषु । कदाचित् वर्णानभिव्यञ्जन् तदुपश्लिष्टः प्रतीयते, प्रभारूपवत् । अस्ति हि वर्णोच्चारणे ध्वन्युपलब्धिः । दूरादिभिन्नेषु वर्णरहितध्वन्युपलम्भदर्शनात् । रत्नाकरः स्फोटवादे श्लो. ३८ . ● शब्दः (धेनुशब्दः) धानयोर्वचनः तदेकवाक्यतयैव द्रव्येण सम्बध्यते । यथा 'अग्नौ द्वे धेनू ददाति' । 'तस्य पुष्टी धेनुर्दक्षिणा' । तथा 'अजर्षभस्याजिनमनन्तगाति' इति । भा. १०।२।२९।६८, ● शब्दः न वर्धते निरवयवत्वात् । नादस्यैषा वृद्धिर्न शब्दस्य । १।१।६।१७. ● शब्दः न वायवीयसंयोगविभागाभिव्यङ्ग्य, किन्तु तज्जन्य एवासौ प्रादेशिकश्च इति मतम्, अभिव्यङ्ग्य एव नित्यः शब्दः इति मीमांसकमतम् । वैद्यनाथः. १।१।६।१३. ● शब्दो नहि क्रिया । किं तर्हि ? द्रव्यं गुणो वा स्यात् ( एतच्च अनादरतया अभिहितं इति ज्ञेयम् ) । बृहती पृ २४२, ● 'शब्दो नित्यः' इति श्रद्धयैव प्रतिपत्तव्यम्, शब्दात्मकत्वाद्वेदस्य वेदनिन्दा मा भूदिति । तस्मात् अनित्यत्वमेवात्र कारणम्, न पुनः शब्दनित्यत्वपूर्वकं अनेकत्वं शक्यते युक्तितो वक्तुम् । ( इति पूर्वपक्षी ) । पृ. २०७. ● शब्दो नित्यः ध्वनिभिन्नत्वे सति श्रावणत्वात् शब्दत्ववत् । मणि. पृ. १७०, ● शब्दो नित्यः व्यापकश्च । पृ. १६८.

● शब्दः निरवयवः । अवयवभेदानवगमात् निरवयवस्य च महत्त्वानुपपत्तिः । भा. १।१।६।१७.

● शब्दः प्रमाणम् । मणि पृ. १३.

● शब्दः प्रमाणम् । 'शब्द ( शास्त्रं — इति भाष्ये ) शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानं' इति भाष्यम् ( भा. पृ. ३७ ) । शब्दज्ञानजन्यं असन्निकृष्टार्थविषयकं यथार्थज्ञानं शाब्दप्रमा, तत्करणीभूतशब्दः प्रमाणमित्यर्थः । शब्दानुपलब्धौ अतिव्याप्तिवारणाय द्वितीयम् । अनुमित्यादौ अतिव्याप्तिवारणाय आद्यम् । एवं वाक्यश्रवणानन्तरं पदोपस्थितपदार्थानां संसर्गविषयिणी प्रमितिः प्रत्यक्षादिविलक्षणा जायते, तत्करणं शब्दः तज्ज्ञानं वा प्रमाणान्तरम् ।

जन्यवद्— धीजन्यतावच्छेदकव्यभिचारिजातिशून्यत्वे सति पक्षविषयकत्वाव्यभिचारिजातिशून्यधीः शब्दप्रमा । तत्करणं शब्दः प्रमाणं इति जानकीनाथः । प्रत्यक्षानुमितिस्मृतीनां वारणाय जन्यान्तम् । अनुमत्यवारणाय अनुमत्यन्यत्वेति जातिविशेषणम् । उपमितिवारणाय शून्यान्तम् । धर्मादिवारणाय धीपदम् ।

स्वकरणकशाब्दधीप्रकारप्रकारकप्रमाजन्यः शब्दः प्रमाणशब्दः इति मणिकृत् ।

वाक्यं च एकार्थकपदसमूहः । एकार्थत्वं च अनेकमुख्यविशेष्यराहित्यम्, न तु एकाख्यातवत्त्वम् । तेन आख्यातभेदेऽपि यत्र एकाख्यातार्थे अन्याख्यातार्थः प्रकारः यथा 'पश्य मृगो धावति' इत्यादौ, तत्र एकवाक्यत्वम् ।

ननु इदं पदोपस्थितपदार्थानां संसर्गावगाहिमानसप्रत्यक्षमस्त्विति चेत्, न, तत्र मनःसन्निकर्षाभावात् । उपनीतभानेऽपि ज्ञातस्यैव विषयतया ऽज्ञातसंसर्गस्योपनीतभानासंभवाच्च ।

किंच शाब्दसामग्री चाक्षुषादिप्रतिबन्धिका । मानसे तु चाक्षुषादिसामग्री प्रतिबन्धिका इति सर्वसम्मतम् । एवं च शाब्दत्वस्य मानसत्वव्याप्यत्वाङ्गीकारे भिन्नविषयकचाक्षुषसामग्रीकाले शाब्दबोधो न स्यात् । तत्र चाक्षुषसामग्रीमानसयोः प्रतिबध्यप्रतिबन्धकभावेषु अनन्तेषु शाब्दान्यत्वप्रवेशे गौरवं स्यात् ।

वैशेषिकास्तु शब्दः अनुमानान्तर्गतः । 'घट-मानय' इत्यादिपदानि तात्पर्यविषयभूतपदार्थनिरूपित-तात्पर्यविषयसंसर्गप्रमापूर्वकाणि, परस्परान्वयतात्पर्यकत्वे सति योग्यत्वात्, पदान्तरवत् । आकाङ्क्षाऽऽसत्योस्तु तात्पर्यज्ञानार्थमेव अपेक्षा । यद्वा, पदैः उपस्थितेषु घटादिपदार्थेषु कर्मत्व आधेयतासंसर्गेण घटत्वत्, तेन संसर्गेण घटे बाधाभावरूपयोग्यतावत्त्वात् । एते पदार्थाः मिथस्तात्पर्यविषयसंसर्गवन्तः आकाङ्क्षादिमत्पदस्मारित-त्वात् । इदं वाक्यं संसृष्टार्थज्ञापक आप्तवाक्यत्वात् । इत्याद्यनुमानमुद्रयैव शब्दस्य अर्थप्रत्यायकत्वसंभवेन पृथक्प्रामाण्यकल्पना अयुक्ता । न च एतादृशमतमर्ज्ञानात् कथं प्रवृत्तिः, इष्टतावच्छेदकप्रकारकप्रवृत्तिविषय विशेष्यकज्ञानस्य प्रवृत्तिहेतुत्वात्, उक्तस्य तथाविधत्वाभावात् इति वाच्यम् । इष्टतावच्छेदकप्रकारकप्रवृत्ति विषयवैशिष्ट्यावगाहिज्ञानस्यैव प्रवृत्तिहेतुत्वात्, इष्टतावच्छेदकसंसर्गप्रकारकस्यापि वैशिष्ट्यावगाहिज्ञानत्वात्, 'अस्मिन् पदे सुवर्णकर्मसंबन्धोऽस्ति' इति ज्ञानादपि प्रवृत्तिनिर्वाहसंभवात्, अर्थपक्षकानुमाने दोषाभावाच्च इत्याहुः ।

अत्र केचित् । पदपक्षकानुमानस्य संसर्गप्रकारकत्वनियमात् रजतत्वप्रकारकज्ञानार्थं शब्दप्रामाण्यस्वीकार आवश्यकः । नहि 'रजतवद्भूतलं' इति शब्दश्रवणोत्तर संसर्गप्रकारकमेव ज्ञानं जायते इति नियमः । रजतादिप्रकारकानुभवस्यापि सत्त्वात् । अर्थपक्षकानुमाने च योग्यताया हेतुतया लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतासंशये अनुमानानुपपत्त्या प्रवृत्त्यनुपपत्तिः । शाब्दबोधे तु संशयसाधारणयोग्यताज्ञानस्य हेतुत्वात् नानुपपत्तिः इत्याहुः ।

वस्तुतो वस्तुः प्रकारत्वादिशङ्कायां शाब्दबोध वारणाय योग्यतानिश्चयस्यैव शाब्दबोधे हेतुता इति नोभयोः पक्षयोर्विशेषः ।

प्राभाकरास्तु 'घटमानय' 'घटं कर्मत्वम् आनयनं' इत्यादिसमभिव्याहृतशब्दयोः विशेषो न स्यात्, अनुमानस्य उभयत्र संभवात् । अतो व्युत्पत्तिवैचित्र्यात् साकाङ्क्षतदनपेक्षत्वाद्वा बोधविलक्षणविलक्षणाभ्यां विभ-क्त्यादिसमभिव्याहृतशब्दस्य मानान्तरत्वम् ।

किंच एकपदार्थप्रकारकापरपदार्थविशेष्यकभानं शब्दादेव, नानुमानात् । 'अयं पदार्थः अपरपदार्थवान्' इत्यनुमानेऽपि विपरीतक्रियाकर्मभावमादाय अर्थान्तरत्वापत्तेः । 'तात्पर्यविषयसंसर्गवान्' इत्यनुमाने तु संसर्गस्य प्रकारतापत्तिः ।

न च तादृशज्ञानस्य मानसत्वम्, शब्दातिरिक्तस्य मनःसहकारिणः अभावात् ।

किंच 'ओदनं पचति' 'ओदनः पच्यते' इत्यत्र पाकौदनयोः विशेष्यत्वनियमः शब्दप्रामाण्यं विना अनुपपन्नः । तस्मात् शब्दः प्रमाणमित्याहुः ।

परं 'शाब्दयामि' इत्यनुभवोऽपि सङ्गच्छते ।

न च अनुमितिप्रमातः शाब्दप्रमाया भेदे यत्र एकस्मिन् विषये अनुमितिसामग्री शाब्दसामग्री च, तत्रानुमितिवारणाय शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवं इति वाच्यम् । फलमुखत्वेन अदोषत्वात् ।

किंच शाब्दप्रमाया अनुमितित्वे सिद्धिसत्त्वे शाब्दबोधो न स्यात् । शाब्दान्यानुमितित्वस्य सिद्धिप्रतिबध्यतावच्छेदकत्वकल्पने गौरवम् ।

किंच अनुमितिशाब्दसामग्रीसत्त्वे सिद्धयभावदशायां अनुमितिकारणीभूतस्य सिद्धयभावस्य सत्त्वेन तत्र शाब्दानुमित्युभयापत्तिः । तद्वारणाय शाब्दान्यानुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वं वाच्यम् । तत्र शाब्दान्यत्वनिवेशे गौरवं इति दिक् ।

तत् सिद्धं शब्दस्य विजातीयप्रमितिजनकतया प्रामाण्यम् । मणि. पृ ६२-६५.

● शब्दः प्रमाणम् । 'शास्त्रं शब्दविज्ञानात् असंनिकृष्टेऽर्थे विज्ञानम् ।' ( भाष्यं १।१।५ पृ. १७) । शास्त्रशब्देनात्र पदार्थविद्यादि योगस्त्रा धर्माधर्मादिवेदानि चतुर्दश अष्टादश वा विद्यास्थानानि उच्यन्ते । चोदनालक्षणशब्दविज्ञानात् प्रमाणान्तराप्रत्यक्षान् धर्माधर्मविषयकज्ञानमुत्पद्यते । अतश्च प्रत्यक्षानुमानयोः न वेदानुपलब्धेरिदम्, न वा नैमित्तिकहेतु अभिधानार्थं इति विशेषः । वेदनाथः, पृ. १७.

बृहती — 'शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्' ( भाष्य )। किमिदं शब्दविज्ञानात् इति? किं शब्दात् विज्ञानं शब्दविज्ञानम्, शब्दे एव वा विज्ञानं शब्दविज्ञानम्? यदि तावत् शब्दे विज्ञानम्, शब्दालम्बनमित्यर्थं, तदयुक्तम्। न तस्मात् शासनमवगम्यते। शासनाद्धि शास्त्रम्। अथ शब्दात् यत् अर्थे विज्ञानमुत्पद्यते तत् शब्दविज्ञानम्, तत्र विशेषाव गतौ कारणं वक्तव्यम्। तदुक्तं च शास्त्रमिति। शास्त्रं हि शासनात्। तच्च अर्थविषये एव विज्ञानं उपपद्यते, न शब्दविषये। द्वितीयेऽपि पक्षे तथिमित्तथा उपपत्तसिद्धं शास्त्रलक्षणम्।

ननु च शब्दाभासमपि दृष्टं 'एष वन्ध्यासुतो याति' इत्येवमादि। तदपि शब्दादेवावगम्यते। नहि वाक्यादि तुल्यं किंचित् कारणान्तरमनोपलभामहे। परिहृतमेतत् 'तद्यत् प्रत्याययितात्' इति ( भाष्येण पृ १५।० ) लक्षणाभिधानेन च अयमव्यभिचारो निरस्तः। पृ ८१–८२

● शब्दः यत् वस्तुतः प्रमाणान्तरप्रतीतं तदाह न तु प्रमाणान्तरप्रतीतमेवाह। यस्मात् स्वार्थे एव स्वाभाविकी शब्दस्य शक्तिः। तेन अनपेक्षायमाणप्रत्याय कत्वात् असत्यपि प्रमाणान्तरे शब्दः एव कार्येऽर्थे प्रमाणम्। ऋजु पृ २४ ● शब्दः यदि प्रत्यायकः, प्रथमश्रुतः किं न प्रत्याययति। उच्यते। यावदन्त्य श्रुतेन इव वर्णः, अत्र वर्णो इत्यवधारितः भवति, तावद्दूरं श्रुतादर्थावगम इति। भा १।१।०।५ पृ ४४, ● शब्दः वायुरन्यः। शिक्षाकारा आहुः – वायुरापद्यते शब्दतामिति। नैतदेवम्। १।१।६।२२ ● शब्दः। 'संयोगात् विभागात् शब्दाच्च शब्दनिष्पत्तिः' इति वैशेषिकसूत्रम्। ( वै सू २।२।३१ ) अत्र चेयं तेषां प्रक्रिया– आद्यः शब्दः संयोगादुत्पद्यते, यथा भेरीदण्डसंयोगानुगृहीतात् भेर्याकाशसंयोगात् आकाशे शब्दः उत्पद्यते। स उत्पन्नः शब्दान्तरमारभते, सोऽप्यपरम् इति वीचीनिचयन्यायेन कदम्बमुकुलन्यायेन वा कर्णशष्कुल्यवच्छिन्नाकाशदेशे धर्माधर्मोपगृहीते श्रोत्रभावमापन्ने समुत्पन्नः समवाय लक्षणेन सन्निकर्षेण गृह्यते। एवं विभागादपि शब्दः उत्पद्यते यथा वंशदलविभागानुगृहीतात् वंशदलाकाश-विभागात् आकाशे शब्दः उत्पद्यते, सोऽप्यपरमारभते, सोऽप्यपरम् इति पूर्ववद्योज्यम्। अत्र चाद्यः शब्दः कार्यविरोधी, अन्त्यः कारणविरोधी मध्ये मध्यास्तु कार्यकारणोभयविरोधिन इति ज्ञेयम्। ऋजु पृ २२१ ● शब्दः। सत्यपि एकविषयानेकशब्दत्वे अर्थसाधनत्वात् साधुत्वम् अवधार्यते ( हस्तकरपाण्यादिशब्दवत् )। सु पृ २६० ● शब्दः। साधु–असाधुशब्दविषये 'यदा तु किंचिदप्यर्थोपनिबद्धप्रकृति–प्रत्ययादिविभागद्वारप्रक्रियात्मकव्याकरणस्मृतिरचितकालाभावात् अन्वाख्यान–अन्वाख्येय– अन्वाख्यानविधि–प्रयोग–अन्वाख्यातप्रतिषेध–वचनशब्दकस्यापि अवगम्यमानवेदविधिमूलत्वात् अनादित्वे सति सर्वेषां वेद–वेदि–यूप–आहवनीय–अध्वर्यु–गोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सन्दा अनवगतपूर्वापरविभागसम्बन्धे अत्यन्तादृष्टार्थ-त्वमथ, केवलं शास्त्रप्रत्ययाधीनम्, तदा सर्वकालं व्याक्रियमाणे विद्यमानशब्दनियमविधेः न किंचिदनुपपन्नम्। वा १।३।८।२७ पृ २७९। सुधा– अन्वाख्यानं प्रकृत्यादिविभागेन आख्यानम्। अन्वाख्येयाः साधुशब्दाः अन्वाख्याताना विधिः 'व्याकृता वागुच्यते' इत्यादि। प्रयोगो व्यवहारकाले। इति चतुष्टयं साधुशब्दविषयम्। 'ब्राह्मणेन न म्लेच्छितवै' इति अनन्वाख्यातानां प्रतिषेधः, व्यवहारकाले वर्जनं च इति असाधुविषयं द्वयम्। इतिषट्कस्यापि अनादित्वे सति सर्वेषां अन्वाख्यानादीनां सर्वेषां अनवगतपूर्वापरविभागसम्बन्धे सति यदा अत्यन्तादृष्टार्थमात्र एवा शास्त्रीयप्रत्ययाधीनम्, न स्वरूपम्, तदा सर्वकालं व्याक्रियमाणेन विद्यमानस्य शब्दस्य यो नियमविधिः तस्य ( किमु वक्तव्यम् )। पृ २११–१२ ● शब्दः सापेक्षवृत्तिः सैरपेक्षत्वात् बलीयान्। शा १।२।० वर्णक १ ● शब्दः स्फोटरूपो नित्य इति वैयाकरणाः। वर्णरूप एव शब्दः स चानित्य इति नैयायिकाः। वर्णरूप एव शब्दः स च नित्य इति मीमांसकाः। वि १।१।८ ● अनेकस्यापि एकः शब्दः भवति वाचकः। तद्यथा, माता इति मातरमपि

वदति, मातारमपि । माता च परमं दैवतम्, समा च पुत्रेषु इत्येतैरुपनिबध्यमानो जननीवचनोऽवगम्यते । माता समः, स्निग्धश्च इत्येभिरपि अनुबध्यमानः मान्यस्य मातुर्वाचकः । भा. १०।१।३।४, ● अप्रथमान्तः शब्दः न कथंचिदपि अव्यतिरिक्त प्रातिपदिकार्थे भवितुमर्हति । ३।१।६।१२ पृ. ६८७, ● अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागान् उत्पादयन्ति यावद्वेगमभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्दः उपलभ्यते, नोपरतेषु । १।१।६।१३ पृ. ७९-८०, ● अलग्नोऽपि प्रयुज्यमानः ( शब्दः ) नासति सामर्थ्ये प्रत्याययेत् । अतः सोऽपि शब्दात् प्रतीयते इति गुरुण एव । ३।२।१।१ पृ. ७४८. ● एकश्चायं शब्दः एकविषयश्च, आकाशविषयत्वात् । ग्राहकं चास्य आकाशमेव ( श्रोत्रम् ) । बृहती. पृ. ९००. ● एकः शब्दः उपदेशकः प्रयोगस्य, दर्शपूर्णमासयोः समिदादीनां च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तेन च फलसम्बन्धः कृतः ( अतः साङ्गस्यैव प्रधानस्य फलसंबन्धः स्वीक्रियते ) । भा. ११।१।३।१४. ● 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः । तदन्यत्रापि तस्यास्ति निमित्तान्तरकल्पना ॥' ये एव लौकिकाः शब्दास्त एव वैदिकाः त एवामीषामर्था इति स्थितत्वात् लोकप्रसिद्धिप्रतीक्षे वेदे यत्र एकदेशेऽपि जातिनिमित्तता लभ्यते न तत्र पुनः निमित्तान्तरशक्तिकल्पना संभवति । वा. १।४।७।१० ● गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः ( पृ. ४९ ) । तस्मात् गौरिति गकारादिविसर्जनीयान्तं पदं अक्षराण्येव । तस्मादक्षराण्येव पदम् ( न स्फोटः ) । भा. १।१।५।५ पृ. ४८, ● न चैकः शब्दोऽनेकार्थो युक्तः । १२।१।१।८, ● न च सकृदुच्चरितः शब्दः शक्नोत्यर्थद्वयं विधातुम् । १२।१।१।४, ● न हि अनभिधाय मुख्यम्, गौणमभिदधाति शब्दः । ३।२।१।१ पृ. ७१०, ● नहि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते । ७।२।१।२. ● यस्तु कथमपि अविनष्ट एव शब्दः तेषामपि ( म्लेच्छानामपि ) प्रयोगविषयमापन्नः तस्य चार्थमदेव अनादिवृद्धव्यवहारपरंपरया अर्थं जानन्ति । तत् किं तेषां निराकर्तुं शक्यते ? ( न शक्यते ) । वा. १।३।५।१० पृ. २२८ ● यः शब्दः श्रौतेनार्थेन वाक्यार्थे नोपयुज्यते स लाक्षणिकार्थपर्यन्तं तात्पर्यवृत्त्या याति । सु. पृ. १३८९. ● 'यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते । शक्तिस्तद्गोचरा तस्य तन्निबन्धा प्रतीयते ॥' वा. १।३।७।८ पृ. २१६. ● यदा शब्दः केवलगुणवचनतया प्रवर्तमानः नान्येन सम्बन्धं लभते, तदा अनुपदेशकत्वादानर्थक्यं मा भूत् इति द्रव्यपरता आपद्यते । भा. ३।१।६।१२ पृ. ६८६. ● 'यद्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ।' श्लोवा. अनुमान ११०. ● विस्पष्टे हि पदशब्दसामानाधिकरण्ये सति 'अनन्यथासम्भवे च अथन्यनृपिः शब्दो भवति । वा. ३।२।५।१७ पृ ५१२, ● व्युत्पन्नो हि शब्दः प्रत्यायकः । ( व्युत्पन्नः गृहीतशक्तिकः ) । वि. ३।१।१. ● सम्मूर्च्छितानेकार्थसन्निधाने हि शब्दः प्रयुक्तः कियन्तमप्यर्थं जाते प्रत्ययं करोति । तेन च अविविक्ताभिधेयगम्यमानार्थेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः । वा. १।३।९।३० पृ. २९०, ● सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते । अर्थश्च व्यवहारप्रसिद्धयर्थमभिधीयते । १।३।८।९ पृ. २१९. ● शब्दाः एकदेशेऽपि जातिनिमित्ता दृष्टाः सर्वत्र जातिनिमित्ता भवितुं अर्हन्ति । भा. १।४।७।१०, ● शब्दाः केचित् कर्मशब्दाः ( सन्तो ) न भावार्थाः यथा श्येनैकत्रिकादयः । केचित् भावार्थाः ( सन्तो ) न कर्मशब्दाः, यथा — भजनं भागो भूतिरिति । २।१।१।१. ● शब्दाः तावत् द्विप्रकाराः । केचित् वाच्यं स्वप्रधानमाहुः, नोपसर्जनत्वेन । यथा वृक्षौ इति । वृक्षशब्दः स्वार्थप्रधानं उच्चार्यते । केचित् वाच्यमर्थं अन्यप्रत्युपसर्जनीभूतं ब्रुवते, न स्वप्रधानभूतम् । यथा अत्रैव वृक्षौ इति द्विवचनं प्रातिपदिकोपसर्जनं आत्मानं ब्रवीति । न द्विवचनार्थमेव जहाति । टुप्. १०।३।१८।५६ ● शब्दाः नाम- आख्यात-उपसर्ग-निपाता इति चतुर्विधाः । पुनश्च जाति-गुण-क्रिया-

तुल्यार्थत्वादन्योन्यनिरपेक्षभिन्नशब्दोपादानाच्च । न ह्येको धातुस्त्रीन् धात्वर्थानुपादत्ते । न चैकस्मिन् पदे धातुत्रयं परस्परापेक्षं प्रत्ययं प्रत्युपादीयमानं संभवति 'धातोः' (पा. ३।१।९१) इति प्रत्ययोत्पत्तौ विवक्षितैकत्वसंख्यत्वात् । न चैतत्पदत्रयमेकवाक्यतां गच्छति । विभज्यमानसाकाङ्क्षत्वैकार्थत्वयोरभावात् । न चैकापूर्वकल्पनात एकवाक्यताऽऽपद्यते । 'समेषु वाक्यभेदः स्यात्' (२।१।१५।४७) इत्यत्र प्रत्याख्यातत्वात् । न चापूर्वभेदाभेदपूर्वकौ कर्मभेदाभेदौ । विपरीताभ्युपगमात् । यदि च केनचिद्भावना केनचिदुपादीयेत ततोऽवधारणादिभिरिवैकवाक्यगतैः दध्यादिवद्वा भिन्नवाक्यगतैरेकैवानूद्यानूद्य युगपद्वा विशिष्टविधानन्यायेन यागदानहोमैरनुरज्येत, न त्वयः पृथगुपस्थितीत्ययत्रयं ददात्यादीनामेकेन समस्तैर्वोत्पादयितव्या । तत्र यदि तावदेकस्मैवोत्पाद्यते, तत उत्पन्नायाः पुनरुत्पत्त्यसंभवादिदं कर्मान्तरत्वम् । अथैकेन तावदुत्पाद्येत, तथापि विनिगमनायां हेतोरभावाद्विरोधो न शाम्येत् । येन येनाचिदुत्पत्तिरप्येतस्याः प्रतीयते ततस्तद्व्यतिरिक्तेन धातुना नानुरज्यते । येनैव येनैव धातुना कृतानुबन्धा भावनोत्पन्ना तस्यैव श्रौतत्वेन बलीयस्त्वाच्च पदान्तरस्थैर्धात्वर्थैः सह विरुद्धः संभवतीति ततः प्रभृति तैस्तैः स्वपदप्रतिपादितमर्थं भावनान्तरमनुरञ्जनीयम् । एवमेवैकस्य स्वपदोपात्तधात्वर्थानुरञ्जनमौत्पत्तिकं श्रौतं च, धात्वर्थान्तरानुरञ्जनमुत्पन्नभावि वाक्यप्रकरणलभ्यं च । ददातिर्हि यजत्युपनिबद्धां भावनां निरेधन् स्ववाक्यानुषीतां पदान्तरानुवर्तिनी प्रकरणाद्वाक्याच्च प्राप्नुयादेवं भवतिरपि तत्र तथेति बोध्यम् । ननु च ददातिपदेऽप्यसौ पुनः श्रूयमाणा सैवेति प्रत्यभिज्ञायते इति न वक्तव्यं वाक्यप्रकरणाभ्यां ददातिसंबन्धो भवतीति । एवं भावनामात्रसंबन्धः श्रुत्यैव प्रतीयते । यागानुरक्तभावनासंबन्धे तु न श्रुतिव्यापारो युज्यते । ननु चैकत्वादेवास्या एवं भेदव्यवहारो न युक्तः । केन वा कर्मभेदपक्षेऽपि सामान्यैकत्वं नाभ्युपगम्यते । नन्वत्र व्यक्तिनानात्वेऽपि नास्ति प्रमाणम् । कथं नास्ति ? यदा भिन्नधात्वर्थसंनिधानादसौ नानात्वेन प्रतिशब्दमुपलभ्यते । ननु च शब्दवदेव घोपाधिको भेदस्तस्या न पारमार्थिको भावनाभेदः स्यात् । नैवदेवम्, शब्दस्यापि गकारादिभेदः पारमार्थिको नैव कश्चिदनिष्टस्तद्वदिहापि यागादिभेदे सिद्धे शब्दस्थानीयमनुष्ठानसामान्यं निरूप्यते । न च यथा शब्दस्य अर्थान्तरभूता ध्वनयः द्रुतादिबुद्धिमपारमार्थिकीं कुर्वन्त्येवमत्र यागादयोऽदूरव्यतिरिक्ताः । तस्मादस्ति भेद इति । आह च—'यथा रक्तोपधानेन निरुद्धे स्फटिके सति । कृष्णादिचोदनायुक्तं गम्यते स्फटिकान्तरम् ॥ तथैकधातुसंबद्धभावनाचोदने सति । भावनान्तरगामिन्यः स्युर्धात्वन्तरचोदनाः ॥' यस्मात्प्रकृतिप्रत्ययोः स्वार्थाभिधाने प्रवृत्तेः प्रचाराच्च नित्यविवक्षितक्रमत्वेन पूर्वप्रयुक्तप्रकृत्यर्थव्यवहितेषु प्रतिपत्तृषु प्रत्ययांशः संनिपतन् कृतानुबन्धमेव स्वार्थं वदति । तस्मान्न कदाचित्प्रत्ययार्थः शुद्धो लभ्यते । यथोक्तं 'प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहेति । प्रयोगवाक्यशेषभावेन हि समुदायस्य फलसंबन्धः' इति । एकापूर्वकल्पनया हि समुदायानुरक्तभावना कल्पनमाश्रितं फलसंबन्धनिमित्ता वाऽपूर्वकल्पना । प्रयोगवाक्यशेषभावेन चोत्पत्तिवाक्यानां फलसंबन्धो भवति न स्वरूपैः । अवधृतस्वरूपाणि च कर्माणि प्रयोगवाक्येन गृह्यन्ते इत्यवगते भेदे न शक्यान्येकीकर्तुम् । न च ददातिजुहोत्योः प्रयोगवाक्यशेषभावं पश्यामः, 'यजेत स्वर्गकामः' इति केवलयागश्रवणात् । न च तेन दानहोमौ लक्ष्येते । स्वार्थत्यागप्रसङ्गादुभयाश्रयणे वा युगपद्वृत्तिलक्षणापत्तिदोषः । तस्मान्न समुदायकल्पनाऽस्ति । अतश्च धात्वन्यत्वेन पदान्तरस्थानेऽन्यविशिष्टता गम्यते । न च शानान्तरेण निवर्तते । न च धात्वर्थैकत्वम् । आसेचनपरत्वाद्वापादनाभ्यधिकत्वात् । न च त्यागमात्रलक्षणा, स्वार्थश्रुतित्वेनापि वाक्यसमवायोपपत्तेः । न च दाक्षिणानि नाम गुणः कश्चित्प्रसिद्ध इति सामानाधिकरण्यान्नामधेयत्वमेव युक्तम् । अतश्च वाक्यानर्थक्यं मा भूदिति होमो विधीयते । ददातिना तु यागमनूद्य गुणे विधीयमाने द्विरभ्यासेयसंबन्धे वाक्यभेदप्रसङ्गाद्गुणादपि भेदः संभवतीत्यर्थेऽप्युक्ते निर्गुणो वाऽन्यो ददातिपदाहर्तव्यः ।

शा-- ( अस्मिन् अधिकरणे ) शब्दान्तरात् कर्मभेद अभिधीयते । इह एकप्रकरणगतानि अपर्यायधातुनिष्पन्नानि आख्यातानि–' यजति ' ' ददाति ' ' जुहोति ' इत्यादीनि उदाहरणम् । तत्र हि सत्यपि प्रत्ययशास्त्र एकत्वे धातुभेदात् आख्यातशब्दानि मिथ शब्दान्तराणि भवन्ति । तत्र संशय – किं एका एव भावना नाना धात्वर्थानुरक्ता विधीयते उत प्रतिधात्वर्थं भावनाभेद इति । अनेकापूर्वकल्पनाभिया एका एव भावना इति पूर्वपक्ष । सिद्धान्तस्तु– ' प्रत्ययाश समानोऽपि प्रतिधातुप्रयोगत । तत्तदर्थानुसारेण भावना भेदमाप्नुयात् ॥ निष्पद्येत समस्तेभ्यो धातुभ्य प्रत्ययो यदि । तत सर्वविशिष्टा स्यात् द्वन्द्वोत्पन्नस्तुनर्थवत् ॥ यदि वा प्रत्यय शुद्ध सर्वधातुपृथक्कृत । श्रूयेत त्र्यवसर्वैर्विशिष्येत स धातुभि ॥ '

सोम-- सूत्रार्थस्तु– शब्दान्तरे पर्यायधातुभेदे कर्मभेद भावनाभेद धात्वर्थेन भावनाया अनुबन्धस्य अवच्छेदस्य कृतत्वादिति ।

वि-- ' ददाति यजतीत्यादौ भावनैक्यमनाहता । , आख्यातैक्यात्तदेकत्वं धातुभेदोऽप्रयोजक ॥ धातुभेदेन भिन्नत्वमाख्याते श्रूयते तत । उत्पत्त्येकानुरक्तत्वाद्भिद्यते भावना मिथ ॥ नियोगैकत्वत शास्त्रम भिन्नमिति चेन्न तत् । धातुभेदात् शास्त्रभेदे नियोगो भिद्यते बलात् ॥ '

भाट्ट— भावनाभेदरूपीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्ते अधुना शब्दान्तराद्भेदोऽभिधीयते । ज्योतिष्टोमादिप्रकरणस्थाना ' सोमेन यजेत, हिरण्यमात्रेयाय ददाति दाक्षिणानि जुहोति ' इत्यादीना विभिन्नधात्वर्थाना भावनाभेदबोधकत्वमस्ति न वेति चिन्तायां ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इत्यनेन स्वर्गकामकभावनामात्र लाघवाद्विहिते तदनुवादेन सोमादिवाक्ये सोमादिविशिष्टयागादिविधानात् । सर्वेषा चोत्पत्तिशिष्टत्वेन गुणन्यायाभावात् न भावनाभेद । न चानेकधात्वर्थानामेकजातीयत्वनजन्यत्वासंभव, बाधकाभावात् । न च प्रत्ययार्थान्वितस्वार्थाभिधायकत्वात् प्रत्ययाना फलवाक्यस्थेनाख्यातेन धात्वर्थानवच्छिन्न–शुद्धभावनाविधानानुपपत्ति , आख्यातेन धात्वर्थानवच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभावात् । अत एव गुणफलसंबन्धस्थले धात्वर्थानुवादेनापि भावनामात्रविधानम् । अत एव च फलवाक्ये यजि प्रकृतसर्वधात्वर्थोपलक्षण ज्योतिष्टोमपद च छत्रिन्यायेन सर्वनामधेयम् । इति प्राप्ते, कार्यमात्रवृत्तिधर्मस्य विजातीययागत्वादे कञ्चित्प्रति कार्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्न प्रति उपस्थितस्य यत्नस्यैव वैजात्य परिकल्पनया विजातीययत्नत्वेनैव कारणत्वम् । अतश्च प्रतिधात्वर्थवैजात्यात् भावनावैजात्यसिद्धि । विभिन्नधात्वर्थमेव च शब्दान्तरत्वम् । अत एव ' तिस्र आहुतीर्जुहोति ' इत्यत्र संख्यया होमभेदे सिद्ध शब्दान्तरादेव उक्तविधाद्भावनाभेद न तु मूलोक्तादिति ध्येयम् । किञ्च प्राप्तभावनानुवादेन सोमयागाद्यनेकविधाने वाक्यभेदापत्ते तत्तद्गुणधात्वर्थोभयविशिष्टभावनाविधानमेव तत्तद्वाक्येऽङ्गीकर्तव्यम् । तत्र च चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसंबन्ध अन्येषा तु तदङ्गत्वम् । न च स्वर्गवाक्ये एव यागभावनोत्पत्तिपूर्वक फलसंबन्ध सोमवाक्येन तु सोममात्रविधानमिति वाच्यम् । स्वर्गवाक्ये राजसूयन्यायेन इष्टिपशुयागानामेव फलसंबन्धापत्तौ यागान्तरविधाने प्रमाणाभावात् । ततश्च पश्वाद्यंशके सोमविध्यनुपपत्त सोमवाक्ये कर्मान्तरनिष्पत्त्यावश्यकत्वात् । प्रयोजन सोमयागमात्रप्राधान्यम् ।

मण्डन— ' शब्दान्तरे विधियुते खलु कर्मभेद । '

शकर— ' भिन्न शब्दान्तरात्कर्म । '

* शब्दान्तराधिकरणम् । अत्र भावनाभेद शब्दान्तरादिप्रमाणे प्रतिपाद्यते । तत्रापि शब्दान्तरस्य प्रमाणान्तरसिद्धधात्वर्थभेदोपजीवित्वेन भावनाभेदमात्रे व्यापारात् सूचीकटाहन्यायेन प्रथम तस्यैव भेदकता निरूप्यते । अत्र सिद्ध अपर्यायधातुभेदरूपशब्दान्तरात् कार्यतावच्छेदकभेदेन कार्यभेदावगतौ कारणीभूताया भावनाया वैजात्यम् । प्रयोजनम् सिद्धान्ते सोमयागस्यैव प्राधान्यम्, अन्येषा तु तदङ्गत्वात् न विकल्प । पौ

२।२।१।१. • शब्दान्तराधिकरणे यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति, उत्तरो भागो भावयेदिति भाष्यम्। अत्र परो भागो भावनावचनः इति स्पष्टम्। सु. पृ. ५६६.

• न चैवं ' यजति, ददाति ' इत्यत्र यागान्वितायाः अपि भावनायाः निष्कृष्य स्वरूपेणाभिधाने सति तत्र दानान्वयसंभवात्, ' एकधात्वर्थान्वितभावनाया न धात्वर्थान्तरान्वयसंभवः ' इति–शब्दान्तराधिकरणोक्त-विरोधः स्यादिति वाच्यम्। पूर्वपक्षे सिद्धान्तिशङ्कै-षम्। कु. २।२।१।२३.

• ' समिधो यजति ' ' तनूनपातं यजति ... ' इत्यत्र यागभेदे अर्थान्तरपर–धातूच्चारणभेदात् शब्दा-न्तराधिकरणन्यायेनैव भावनाभेदसिद्धिः। कौ २।२।२।१.

• यो यावद्धर्मयुक्तमनुष्ठातुं शक्नोति तेन तावद्धर्म-युक्तं कर्म अनुष्ठेय इति शक्त्या व्यवस्थाया अप्रमाण्या-भावात् न्यायप्राप्तत्वेन काम्येऽपि यथाशक्त्युपबन्धो न दोषः। अन्यथा शब्दान्तराधिकरणपूर्वपक्षादौ का गतिः। सोम. ७।१।१.

• तस्या एव च ( भावनायाः ) शब्दान्तरं भेदक भविष्यति अपूर्वस्यानभिधेयत्वात् कर्मभेदानुनिष्पाद्यमेव च तत् ( अपूर्वं ) इति न पृथक् विचारमर्हति इति शब्दान्तराधिकरणवार्तिके अपूर्वभेदस्य लक्ष्यार्थत्व-निषेधात्। [illegible] पृ. ८७३–८७४.

• शब्दान्तराभ्यासनामधेयगुणप्रकरणानि उत्पत्ति-परता विधेर्बोधयन्ति ( प्रथमाबहुवचनमेतत् ) उत्तरस्य च उत्पत्त्यन्तराभावात्, वाक्यान्तरविहितात् कर्मणः स्ववाक्यविषयस्य भेदं बोधयन्ति। शा. २।१।१.

• शब्दान्तरादिभिः हेतुभिः प्रधानाना भेद उक्तः ( अपूर्वाणाम् )। भा. ७।१।१।१.

• ' ऐन्द्रवायवं ' इत्यत्र तद्धितार्थद्वयभेदस्तावत् प्रकृत्यर्थदेवताभेदात् शब्दान्तरन्यायेन गुणन्यायेन वा सुप्रसिद्ध एव। कौ. २।२।६।१९ पृ. २२७. • ननु शब्दान्तरवत् संज्ञाया भावनायच्छेदकत्वरूपेण धात्वर्थ-वाचित्वाभावात् शब्दान्तरन्यायेन भावनाभेदकत्वा-योगः। सु पृ. ८२०.

• शब्दापचारे न प्रतिनिधिः ( शब्दो मन्त्रः )। ६।३।५।१८–१९. मीको. पृ. २१३० ' देवताऽ-ग्निशब्दक्रियाणामपचारेऽपि प्रतिनिधिर्न भाव्यः ' इत्यत्र अधिकरणं द्रष्टव्यम्।

• व्याकरणस्मृतेः शब्दापशब्दविभागमात्रविषय-त्वम्। वा. २।३।२।३ पृ. ५८६.

• शब्दाभेदे ( वैदिकलौकिकशब्दाभेदे ) ( अध्या-यानध्यायादि ) धर्मव्यवस्थावैयर्थ्यापत्तेः तत्साफल्याय शब्दभेदः कल्प्यते। तद्भेदे च औत्सर्गिकः अर्थभेदः ' तथा चोत्पत्तिसंयोगात् ' ( २।२।८।२१ ) इत्यनेन सेत्स्यति। सु. पृ. ३३१.

• शब्दार्थः आकृतिः व्यक्तिर्वा इति संदेहे आकृतिरिति सिद्धान्तः। १।३।९।३०–३५.

• ' शब्दार्थश्च तथा लोके। ' ११।१।४।२३॥ लोकेऽपि तथैव शब्दार्थो भवति। 'पद्मान्याहर' इत्युक्तः सकृदाहरति, न पुनः पुनः। इति पूर्वपक्षः। भा. ११।१।७।२३. ' लोके कर्मार्थलक्षणम्। ' ११।१।४।२६॥ यच्च लोकवत् इति। लोके कर्म अर्थप्रधा-नम्। कार्यवशात् सकृदपि उक्तः असकृदाहरति, असकृ-दपि उक्तः सकृदाहरति, नाहरति वा। भा. ११।१।८।२६. • शब्दार्थः प्रयोगमात्रेणैव भवति। टुप्. १०।३।१०।३४. • शब्दार्थः यद्याकृतिर्भवेत् न तत्र द्व्या-श्रयवचनः शब्दो भवेत्। ' षड् देया द्वादश देयाः० ' इति। न ह्याकृतिः षडादिभिः संख्याभिर्युज्यते। इति व्यक्तिवादी ( पूर्वपक्षे इदम् )। भा. ११३।९।३१. • ' अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते। तत्तत्व-निर्णयात् तस्माल्लोके भवति निर्णयः॥' वा. ११३।८।१९ पृ. २१८. • न आचार्यवचनात् सूत्रकारवचनात् वा शब्दार्थो भवति। प्रत्ययात् अर्थो गम्यते। ... अपि च नैन कर्ता प्रत्ययार्थः, कर्म वा इत्याचार्या आहुः। भा. ३।४।४।१३ पृ. ९२३, • न च लक्षणया प्रयोगे शब्दार्थः परिच्छिद्यते। यत् कारणं स्वार्थे एव वर्तमानोऽर्थान्तरं लक्षयति, स्वार्थं जहत् नैव लक्षयेत्।

८।२।६।२४, * यश्च प्रतीयते (शब्दात्) स शब्दार्थः। ४।१।१।१३, * य शास्त्रस्थानां (प्रयोगविषयः) स शब्दार्थः। के शास्त्रस्थाः ? शिष्टाः। तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च। १।३।४।९ * यावानेव हि अनन्यलभ्य अर्थः शब्दात् गम्यते स सर्वः शब्दार्थः। भा २।१।१।१ पृ ३७१, * लक्षणं चैतावत् योऽर्थोऽन गम्यते स शब्दार्थ इति। ३।४।४।१३ पृ ९१३ * शब्दार्थस्य अन्वयव्यतिरेकाभ्यां हि विभागोऽवगम्यते। भा ३।२।१।१ पृ ७४७ * शब्दार्थस्य वृद्धव्यवहारगम्यत्वम्। भा २।१।१०।३५, * शब्दार्थयोः अनादित्वेऽपि निमित्तनैमित्तिकभावः अविरुद्धः। १।३।६।१३ * शब्दार्थयोः ऐक्यं लोकवेदयोः। १।३। ९।३०-३५ * शब्दार्थयोः नित्ययोरेव नित्य एव संबन्धः शाश्वतः प्रतीयते। भा ३।७।१९।४० * शब्दार्थयो यदि सश्लेषलक्षणः संबन्धमभिप्रेत्योच्यते (तदा) क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। कार्यकारण-निमित्तनैमित्तिक-आश्रयाश्रयिभावादयः तु संबन्धाः शब्दस्यानुपपन्ना एवेति। उच्यते। यो ह्यत्र व्यपदेश्यः संबन्धः तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षणः इति। (वृत्तिग्रन्थः)। भा १।१।५ पृ ४१, * शब्दार्थयो संबन्धोऽपि नित्यः। १।१।५।७, * शब्दार्थयो संबन्धः। ननु पुरुषकृतोऽपि शब्दार्थयोः संबन्धः कृत्रिमः भवति। यथा देवदत्तो यज्ञदत्त इति। भवति कश्चित् यत्र संबन्धस्य विधायकं वाक्यं भवति। १।२।२।४, * शब्दार्थयो संबन्धः। नहि शास्त्रहेतुकः शब्दार्थयो संबन्धो भवति, नित्योऽसौ लोकतोऽवगम्यते इत्युक्तं 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति। १।२।२।८, * शब्दार्थयो संबन्धः सत्तासलक्षणः। १।१।५।५ पृ ४३ * शब्दार्थानां लोकवेदयोस्तुल्यत्वम्। १।३।९।३०-३५ * अनभियोगश्च शब्दार्थेषु अशिष्टानां अभियोगश्चैतेषाम्। भा १।३।९।१०

* शब्दार्थाधिगमे च अभियुक्तोपदेशः प्रमाणम्। भा ८।२।०।२४,

* शब्दार्थाधिगमे लोकः प्रमाणम्। भा १।३। ४।१३

* शब्दार्थावधारणे हि अयमभ्युपायः, यत् प्रसिद्धसामानाधिकरण्यं नाम। भा १।४।१।८ पृ. ३२५

* शब्दार्थोपायेषु अभियुक्तानां आर्यावर्तनिवासिनां अभिव्याहरतां कर्माणि चानुतिष्ठतां अन्यत्रजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति। भा. २।३।२।३ पृ ५८१

* शब्दार्थज्ञानस्य वृद्धव्यवहारात् औत्पत्तिकत्वमुक्तम्। बृहती पृ २५५। शब्दात् यदर्थज्ञानं तदौत्पत्तिकं पुरुषप्रयत्नानपेक्षं असामयिकं वृद्धव्यवहारादेव शब्दस्य वाचकशक्तिपरिज्ञानेन समयनिरपेक्षेण तदुत्पद्यते इत्युक्तम्। ऋजु पृ २५५

* अनेकशब्दार्थत्वं एकशब्दार्थत्वेन बाध्यते। (अथ अग्नासनाथ)। भा ३।३।७।१४ पृ ८६०.

* शब्दार्थपरिच्छेदे लौकिकः प्रयोगो हेतुः न वैदिकः। भा २।१।४।१२

* शब्दार्थसंबन्धः न अनित्यः। भा, ३।४।४।१३ पृ ९२९ * शब्दार्थसंबन्धः नित्यः 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः'। (सूत्रम् १।१।५।५)। औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भावः उच्यते लक्षणया। अवियुक्तः शब्दार्थयो भावः संबन्धः नोत्पन्नयोः पश्चात् संबन्धः। औत्पत्तिकः शब्दस्यार्थेन संबन्धः। भा १।१।५।५ * शब्दार्थसंबन्धः लोकप्रयोगाधीनः। मणिका पृ १५६, * शब्दार्थसंबन्धः वृद्धव्यवहारगम्यः। पृ २८० * 'न हि शब्दार्थसंबन्धः प्रसिद्धः शास्त्रहेतुकः।' भा १।२। २।४, * 'नित्याः शब्दार्थसंबन्धा यथावस्थितगामिनः। नाऽऽस्य प्रत्ययं हेतुः स्वच्छन्दपरिकल्पितम्॥' २।३।२।३ पृ ५८२ * शब्दार्थसंबन्धस्य लोकव्यवहारगम्यत्वात्। कार्ये चार्थे रूपशब्दः लौकिकाः प्रयुञ्जते। बृहती पृ २७

* शब्दार्थसंबन्धनित्यत्ववादः। (पूर्वपक्षसूत्र-) भा-- यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि शब्दस्यार्थेन संबन्धः। कुत ? स्वभावतो हि असंबन्धा-

नैतौ शब्दार्थौ । मुखे हि शब्दमुपलभामहे भूमौ अर्थम् । शब्दोऽयं न तु अर्थः, अर्थोऽयं न शब्दः इति च व्यपदिशन्ति । रूपभेदोऽपि भवति, गौः इतीमं शब्दमुच्चारयन्ति, सास्नादिमन्तमर्थं अवबुध्यन्ते इति । पृथग्भूतयोश्च यः संबन्धः ॥ कृतको दृष्टः, यथा रज्जुघटयोरिति । १।१।५।५ पृ. ४५ पं. १–६.

श्लोवा— 'पुरुषाधीनविज्ञानः (संबन्धः) तेभ्यः प्रागनिरूपितः । यः संज्ञासंज्ञिसंबन्धः स चेदिष्येद् ध्रुवं कृतः ॥ ४५ ॥ (संबन्धाक्षेपवादे) भिन्नदेशाद्यधिष्ठानाद् यथा रज्जुघटादिषु । संबन्धो नास्त्यनयोः किंचित् तेनासंगतता स्थितः ॥' ४६॥

बृहती— 'यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि' (भा. पृ. ४५) इति कोऽभिप्रायश्चोदकस्य ? यदि तावत् 'कृतकः कार्यः, न सामयिकः' इत्यभिप्रायः, ततः सिद्धं साध्यते । पुरुषान्तरप्रत्ययान्तरानपेक्षता हि शाब्दं प्रमाणं इति भवतोऽभिप्रेता, चक्षुरादीनामिव रूपग्रहणे । न पुनः उत्पत्तिमत्ताऽपि नेष्यते । उत्पद्यते एव हि संबन्धः, क्रियागर्भत्वात् तस्य । क्रियायाश्च उत्पत्तिमत्त्वात् तदनुवर्ती संबन्धोऽपि उत्पत्तिमानेव । अथ 'कृतकः रज्जुघटयोरिव पुरुषप्रयत्नजन्यः' इत्यभिप्रायः, तदयुक्तम् । चक्षुरादेः आलोकाभावे कदाचित् कार्यमकुर्वतः तत्सद्भावे च कार्यं कुर्वतोऽपि पुरुषान्तरप्रयत्नान्तरानपेक्षत्वात्, संबन्धस्य तथा शब्दस्यापि संबन्धः स्यात् इति । तस्मात् असमर्थमिव सिद्धान्तलक्षणे भाष्यं प्रतिभाति 'कृतकस्तर्हि' इति ।

नेदमसमर्थम् । अयमस्याभिप्रायः– नेदमुत्तरोत्तरादितुल्यं (द्वितीयादिश्रवणं) उत्पन्नस्यापि अनुग्राहकत्वं कार्यसमधिगम्यमेव, अनवगतिपूर्वकत्वात् अवगतेश्चक्षुरादीनाम् । [ अयमपि ग्रन्थस्त्रुटितः स व्याख्यानतोऽनुमेयः । ] शब्देन सामयिकत्वं कृतकता चोक्ता । (ऋजु– यस्मात् व्यवहारे अयमस्यार्थ इत्यवगम्य ततः शब्दादर्थं प्रतिपद्यते तस्मात् संबन्धान्तरपूर्विकैव अर्थावगतिः इति सिद्धा सापेक्षता । तदिदं कृतकशब्देन सामयिकत्वं कृतकता चोक्ता । यदा अयमर्थः प्रतिपादयितुमभिप्रेतः तदा मया अयं शब्दः प्रयोज्यः इति योऽयं प्रयोगनियमः स समयः । तेन निर्वृत्तः सामयिकः शब्दार्थयोः संबन्धः । तस्मिंश्च पक्षे शब्दप्रयोगात् अर्थं प्रतिपादनाभिप्राय प्रतीत्य तत्पुरुषार्थमर्थज्ञानम्, अस्य शब्दस्य अयमर्थः इति यावत् । पुरुषस्य संकेतः, तेन संबन्धः कृतकोऽभिप्रेतः । तस्मिंस्तु पक्षे शब्दादेवार्थज्ञानम् । पक्षद्वये चास्मिन् पुरुषप्रयत्नापेक्षत्वात् संबन्धस्य तत्पुरुषत्वाच्च वेदादर्थावगतेः पौरुषेयत्वमेव वेदानाम् । पुरुषाश्च प्रमाणान्तरेण अर्थमवगम्य अवगमयन्ति इति सापेक्षता । ततश्च अप्रामाण्यं चोदनाया इति स्थितोऽयमाक्षेपः ) । बृहती. पृ. १०८–१०९.

( पूर्वोक्तं आक्षेपं शब्दार्थनिरूपणग्रन्थेन व्यवहितत्वात् अनुवदति भाष्यकारः– ) अथ संबन्धः कः इति । यत् शब्दे विज्ञाते अर्थो विज्ञायते स तु कृतकः इति पूर्वमुपपादितम् । तस्मात् मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह संबन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति । तदिदानीमुच्यते ( उत्तरम्– ) अपौरुषेयत्वात् संबन्धस्य सिद्धमिति । कथं पुनरिदमवगम्यते अपौरुषेय एव संबन्ध इति ? पुरुषस्य संबन्धुरभावात् । कथं संबन्धा ( –द्धृ ) नास्ति ? प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम् । ननु चिरवृत्तत्वात् प्रत्यक्षस्य अविषयो भवेदिदानीन्तनानाम् । नहि चिरवृत्तः सन् न स्मर्येत । न च हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा । न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति । स्यादेतत्, संबन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणं अनादियमाणा विस्मरेयुरिति । तन्न । यदि हि पुरुषः कृत्वा संबन्धं व्यवहारयेत्, व्यवहारकाले अवश्यं स्मर्तव्यो भवति । तत्प्रतिपत्तौ हि कर्तृव्यवहारो अर्थः सिध्यति, न विप्रतिपत्तौ । नहि वृद्धिशब्देन अपाणिनेर्व्यवहारतः आदैचः प्रतीयेरन्, पाणिनिकृतिं अननुमन्यमानस्य वा । तथा मकारेण आपिङ्गलस्य न सर्वगुरुः त्रिकः प्रतीयेत, पिङ्गलकृतिं अननुमन्यमानस्य वा । तेन कर्तृव्यवहारौ सम्प्रतिपद्येते । तेन वेदे व्यवहरद्भिः अवश्यं स्मरणीयः संबन्धस्य कर्ता स्यात्, व्यवहारस्य च । नहि विस्मृते 'वृद्धि-

रादैच्' (पा १।१।१) इत्यस्य सूत्रस्य कर्तरि, 'वृद्धिर्यस्याचामादि' (पा १।१।७३) इति किंचित् प्रतीयेत । तस्मात् कारणात् अवगच्छामो न कृत्वा सम्बन्धं व्यवहारार्थं केनचित् वेदाः प्रणीता इति । यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि । यथा विद्यमानस्यापि अनुपलम्भनं भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे । तस्मात् अपौरुषेय शब्दस्य अर्थेन सम्बन्ध इति ।

ननु अर्थापत्त्या सम्बन्धारं प्रतिपद्यामहे । नहि अकृतसम्बन्धात् शब्दात् अर्थं प्रतिपद्यमानान् उपलभामहे । प्रतिपद्येरंश्चेत् प्रथमश्रवणेऽपि प्रतिपद्येरन् । तदनुपलम्भनात् अवश्यं भवितव्यं सम्बन्धा इति चेत् । न । सिद्धवदुपदेशात् । यदि सम्बन्धुरभावात् नियोगतो नार्था उपलभ्येरन् ततः अर्थापत्त्या सम्बन्धारमवगच्छाम । अस्ति तु अन्य प्रकार । वृद्धानां स्वार्थेन व्यवहरमाणानां उपशृण्वन्तो बाला प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते । तेऽपि वृद्धा यदा बाला आसन्, तदा अन्येभ्यो वृद्धेभ्य, तेऽप्यन्येभ्य इति नास्त्यादिरित्येवं वा भवेत् । अथवा न कश्चिदेकोऽपि शब्दस्यार्थेन संबन्ध आसीत्, अथ केनचित् सम्बन्धा प्रवर्तिता इति । अत्र वृद्धव्यवहारे सति नार्थादापद्येत संबन्धस्य कर्ता । अपि च व्यवहारवादिन प्रत्यक्षमुपदिशन्ति, व्यवहरन्ति इतरे संबन्धारम्, न च प्रत्यक्षे प्रत्ययिनि कल्पना साध्वी । तस्मात् संबन्धुरभाव ।

(सूत्रपदानि योजयति–) अव्यतिरेकश्च । यथा अस्मिन् देशे सास्नादिमति गोशब्द, एवं सर्वेषु दुर्गमेष्वपि । बहुषु सम्बन्धार कथं संगस्यन्ते? एको न शक्नुयात् । अतो नास्ति संबन्धस्य कर्ता । अपर आह– अव्यतिरेकश्च । न हि संबन्धव्यतिरिक्त कश्चित् कालोऽस्ति, यस्मिन् न कश्चिदपि शब्द केनचिदर्थेन सम्बद्ध आसीत् । कथम्? सम्बन्धक्रियैव हि नोपपद्यते । अवश्यमनेन संबन्धं कुर्वता केनचित् शब्देन कर्तव्य । येन क्रियेत तस्य केन कृत? अथ अन्येन केनचित् कृत, तस्य कतेति तस्य केनेति नैवावतिष्ठते । तस्मादवश्यं अनेन संबन्धं कुर्वता अकृतसम्बन्धा केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्या । अस्ति चेत् व्यवहारसिद्धि, न नियोगत संबन्धा भवितव्य इत्यर्थापत्तिरपि नास्ति । स्यादेतत्, अप्रसिद्धसम्बन्धा बाला कथं वृद्धेभ्य प्रतिपद्यन्ते इति । नास्ति दृष्टेऽनुपपन्नं नाम । दृष्टा बाला वृद्धेभ्य प्रतिपद्यमाना । न च प्रतिपत्ता सम्बन्धा सम्बन्धस्य कर्तुं । तस्माद्वैषम्यम् ।

अर्थेऽनुपलब्धे । अनुपलब्धे च देवदत्तादावर्थे अनर्थकं संज्ञाकरणमशक्यं च । विशेषान् प्रतिपत्तुं हि संज्ञा क्रियन्ते विशेषाश्चोद्दिश्य । तद् विशेषेषु अज्ञायमानेषु उभयमपि अनवक्लृप्तम् । तस्मात् अपौरुषेय शब्दस्य अर्थेन संबन्ध । अतश्च तत् प्रमाणं अनपेक्षत्वात् । न चैवं सति पुरुषान्तरं प्रत्ययान्तरं चापेक्ष्यते । तस्मात् चोदनालक्षण एव धर्मो नान्यलक्षण । बादरायणग्रहणमुक्तम् । भा १।१।५।५ पृ ५२–५८

बृहती— 'अथ संबन्ध क? यत् शब्दे विज्ञातेऽर्थो विज्ञायते' इति क पुनरयं सम्बन्ध पृष्टश्च उपन्यस्तश्च? पूर्वोक्त एवेति वदाम । ननु चासौ संज्ञासंज्ञिलक्षण सम्बन्ध, तस्मादन्य एवायं सम्बन्ध इति मन्यते । तदयुक्तम् । तत्रापि प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षण सम्बन्ध इति स एवायं ज्ञाप्यज्ञापकलक्षण सम्बन्ध उक्त ।

ननु च प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षण संबन्ध इति वदता प्रत्याय्यस्य प्रत्यायकस्य इति षष्ठ्यभिधानेन सम्बन्धान्तरमुक्तं भवति । नैवम् । तदेवेद प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षण इति षष्ठ्या प्रतिपादितम् । कुत एतत्? ननु व्यतिरेकं षष्ठी प्रतिपादयति । अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेक । प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणसंबन्धस्य अभिधाने निमित्तम् । अन्यथा प्रत्याय्यप्रत्यायकोपन्यासोऽनर्थक । नैकं न व्यपदिशन्ति भवान् संज्ञासंज्ञिलक्षण सम्बन्ध इति वक्तव्यम् । 'अत एव कृतक इति पूर्वपक्षवादिन' इत्यनेन ग्रन्थेन पूर्वोक्तस्यायमुपन्यास इति मन्यते ।

सर्वं चैतत् ( भाष्ये ) ' नास्तीत्यस्यासन्निकृष्टस्य ' इति । उपलभ्यमानो निर्विषयः अनेन वा विपर्ययेण ( उपलब्धानुपलम्भेन ) विषयी वक्तव्यः । तस्मात् ( शब्दः उपलब्धो मध्ये पुनरनुपलभ्यमानो नास्तीत्यभ्युपगमनीयः, ततश्च विनष्टः, विनष्टे च ) शब्दे ज्वालादिष्विव आपतिता प्रत्यभिज्ञा ( भेदाग्रहणमात्ररूपा, न पुनः परमार्थतस्तद्ग्रहणरूपेति । एतं चोद्यमाशङ्क्य समर्थ्य चोद्यं परिहरति— ) अहो बत अनुपलब्धो अविवेकोऽयम् । यथैवात्यन्तानुपलब्धविषयानुपलब्धिः ' नास्ति ' इत्यस्य ज्ञानस्योत्पत्तौ नेष्टे ( निश्चयतां न याति ), तथा सद्ग्रहणविषयेऽपि अर्थे ( प्रत्यभिज्ञायमानेऽर्थे ) । तस्मादनुपलब्धिमात्रमेवेदम्, यदन्तरा शब्दे ( न पुनर्नास्तित्वरूपमनुपलब्धिः ) । तथा च लौकिकाः जायादिषु नानुपलब्धिमात्रेण नास्तीत्यवगच्छन्ति, पुनर्दर्शने विश्वासदर्शनात् । तस्मात् प्रत्यभिज्ञाप्रत्यक्षापेक्षोऽयं प्रमाणाभावस्तत्र वक्तव्यः । पुनः ? प्रत्यक्षाद्भावस्य निरपेक्षस्यैव प्रत्यक्षत्वम् । तदेतत् ' आनुपूर्व्यां सिद्धम् ' इत्यनेनोक्तम् ( भाष्येण ) । यदप्यत्रानुमानं सर्वभावविषयमुक्तं ( बौद्धैः ) नास्तिताऽवगतौ, तदप्यत्र ( शब्दे ) न प्रवर्तते ( यतः ) ' अन्ते क्षयदर्शनात् ' इति हि तत्र ( अनुमाने ) हेतुः । न च शब्दे अन्ते क्षयोऽस्ति । अतो न तेनापि ( अनुमानेन ) बाध्यते इयं प्रत्यभिज्ञा, घटादिषु कदाचित् ( प्रत्यभिज्ञानमिदमनुमानं ) आपतिष्यति इत्यपि ( संभाव्यते, तेषां क्षयदर्शनात् । न पुनस्तेष्वपि प्रत्यभिज्ञा शक्यते आकम्पयितुमित्यनन्तरमेव वक्ष्यामः ) ।

अनपेक्षत्वात् । २१ ॥

भाष्यम्— येषामनपेक्षाणामुत्पत्तीनां दृष्टा भाव एव दृश्यते, तेषामपि केषाञ्चिदनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते । यथाऽभिनव पटः दृष्टः । न चैनं क्रियमाणमुपलभ्यमानाः । अथवाऽनित्यतामागच्छन्ति कालेन दृष्टाः । तन्तुव्यतिषङ्गविनाशेऽपि तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यन्तीत्यवगम्यन्ते । नैवं शब्दस्य किञ्चित्कारणमवगम्यते यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते ।

बृहती— ' अनपेक्षत्वात् ' इति । सत्यामपि प्रत्यभिज्ञायां कदाचिदसमवायिकारणोपलब्धेः अनित्यता आशङ्क्येत घटादीनामिव, तदप्यत्र दर्शनाभावान्नास्ति इति स्थिता प्रत्यभिज्ञा, तदपेक्षतया च नित्यत्वं शब्दस्य ।

श्लोका— ' एवं स्थितस्य शब्दस्य श्रुतिकालात् क्षणान्तरे ( श्रवणकालात् क्षणान्तरे स्थितस्य शब्दस्य ) । संभाव्यते विनाशित्वं न भूयोऽन्येन हेतुना । ( भूयः अन्येन हेतुना विनाशित्वं न संभाव्यते ) ४४२ ॥ यथा शस्त्रादिभिर्भेदाज्ज्ञात्वा या पटादयः । नश्यन्तीत्यवगम्यन्ते नैवं शब्देऽस्ति कारणम् । ४४३ ॥

प्रख्याभावाच्च योगस्य । २२ ॥

भाष्यम्— इह पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । ननु वायुकारणकः स्यादिति वायुकृतः संयोगविभागैः शब्दो भवतीति । तथा च शिक्षाकारा आहुः— वायुरापद्यते शब्दतामिति । नैतदेवम् । वायवीयश्चेच्छब्दो भवेत् वायोः सन्निवेशविशेषः स्यात् । न च वायवीयानवयवान् शब्दे सतः प्रत्यभिजानीमो यथा पटस्य तन्तुमयान् । न चैवं भवति । स्पर्शेदेवं स्पर्शनेनोपलभेमहि । न च वायवीयानवयवान् शब्दगतान् स्पृशामः । तस्मान्न वायुकारणकः । अतो नित्यः ।

बृहती— ' प्रख्याभावात्० ' इति अनपेक्षताया असिद्धताशङ्का निराक्रियते । सेयमाशङ्कोपन्यस्यते, ' वायुकृतः संयोगविभागैः शब्दो भवति ' इति ( भाष्येण ) । तथा च शिक्षाकारवचनमनुगुणानि दृश्यन्ते ' वायुरापद्यते शब्दताम् ' इति । तदिदं निराक्रियते । यदि वायवीयः शब्दः स्यात् वायोरवयवसन्निवेशविशेषः स्यात्, न च वायवीयान् सन्निवेशविशेषान् शब्दे उपलभामहे । ननु न चाक्षुषो वायुः । ( उत्तर— ) स्पर्शनमप्युपलम्भकमेव, तेनोपलब्धाः स्युः, न चोपलभामहे, तस्मादनपेक्षा प्रत्यभिज्ञा । कथं तर्हि शिक्षाकाराणां ? तदवयवत्वात् शब्दोपलब्धेरुपचारः ( वायवीयोपचारः ) ।

श्लोका— ' शब्दो यथा पौद्गलिको निषिद्धः स्याद्वायवीयस्य स एव मार्गः । तस्मान्निवारितहेतुमार्गः सर्वत्र साक्षाद्भवतीति नित्यः ॥ '

(यतोऽस्य हेतुर्नास्ति उच्चारणस्याभिव्यञ्जकत्वात्, यतश्च भागा न सन्ति, यतश्च सर्वदेशे साक्षाद्भावात् अपरोक्षाभावात् सर्वगतः, तस्माद् व्योमादिवन्नित्यः) । ४४४ ॥

लिङ्गदर्शनाच्च । २३ ॥

भाष्यम्— लिङ्गं चैव भवति 'वाचा विरूपनित्यया' इति । अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति । तस्मात् नित्यः शब्दः । ( विरूपा च सा नित्या चेति विग्रहः । रूपयतीति रूपं कर्ता । विगतं रूपं यस्या इति कर्तृरहितेत्यर्थः, अत एव नित्या वाक् । इयं च श्रुतिः अग्निस्तुतिपरा सती वाचो नित्यत्वं द्योतयतीति लिङ्गं भवति ) ।

बृहती— तथा च वेदाक्षराण्यस्मिन् पक्षे अनुगुणतराणि दृश्यन्ते 'वाचा विरूपनित्यया' इति । कोऽन्यातिशयः ? नित्यताऽभिधानं श्रुत्या । ( 'वायुरापद्यते शब्दताम्' इति, न तु श्रुत्या अनित्यतोच्यते ) तस्मात् प्रत्यभिज्ञाप्रमेयत्वात् नित्यताऽवस्थिता शब्दे ।

शा— शब्दस्यार्थप्रत्यायकत्वं स्वाभाविकमिति यदुक्तं तदाक्षिप्यते शब्दस्यानित्यत्वात् । न ह्यनित्यस्य शब्दस्य वृद्धव्यवहारपरम्परया स्वाभाविकप्रत्यायकत्वं शक्यते ग्रहीतुम्, अगृहीतमपि चेत् स्वभावतश्चक्षुरादिवत्प्रत्याययेत् प्रथमश्रवणेऽपि प्रत्याययेत्, तस्मादनित्यत्वे शब्दस्य देवदत्तादिशब्दवत्पुरुषकृतमेव प्रत्यायकत्वमापद्यते । कथं पुनरनित्यत्वं शब्दस्य ? प्रयत्नानभिव्यङ्ग्यत्वे सति तदनन्तरमुपलब्धेः घटादिवत्तदुत्पत्तिमत्त्वमवसीयते । अन्यथा किमिति तदनन्तरमेवोपलभ्यते न पूर्वम्, उपलब्धस्य च द्रागेव तिरोभावाद्विनाशित्वमध्यवसीयते । न चासिद्धमनभिव्यङ्ग्यत्वम्, अभिव्यक्त्ययोगात् । सा हि प्रतिबन्धकनिरासेन वा संस्कारविशेषाधानेन वा । न तावत् प्रतिबन्धनिरासः— प्रतिबन्धकानुपलब्धेः । स्तिमिता वायवः श्रोत्रमाच्छाद्यावस्थिताः शब्दोपलब्धिं प्रतिबध्नन्ति, तेषु प्रयत्नोत्थापितैः कौष्ठ्यैः वायुभिरुत्सारितेषूपलभ्यते शब्द इति चेत्, एवं तर्हि सर्वे शब्दाः सर्वगतत्वात् श्रोत्रं प्राप्यावस्थिताः प्रतिबन्धकेषूत्सारितेषु युगपत् श्रूयेरन् । अथ संस्काराधानम्, तथापि त्रैविध्यम्— शब्दस्य वा संस्कारमादध्युः कौष्ठ्या वायवः, श्रोत्रस्य वा उभयोर्वा । शब्दस्य चेत् तस्यैकत्वात् सर्वगतत्वादनवयवत्वेनावयवसंस्कारायोगात् सुघ्नस्थैर्वायुभिः संस्कृतः शब्दः पाटलिपुत्रेऽप्युपलभ्येत, तदिदमुक्तं 'तत्र सर्वैः प्रतीयेत' इत्यादिना । श्रोत्रसंस्कारपक्षेऽप्ययमेव दोषः । यदि काणादकापिलवैदिकमतेन आकाशमहंकारो दिग्वा श्रोत्रं तस्यैकत्वात् सर्वगतत्वादनवयवत्वाच्च सर्वपुंसामेकमेव श्रोत्रं स्यात्तच्चैकदेशस्थैरपि ध्वनिभिः संस्कृतमिति कः सर्वेषां शब्दोपलब्धिं वारयेत् । तदिदम्— 'आकाशश्रोत्रपक्षे च' इत्यादिना 'श्रोत्रादेरियमेव दिक्' इत्यन्तेन दर्शितम् । अस्मिंश्च पक्षे श्रोत्रस्य सर्वशब्दसाधारणत्वादेकशब्दोपलब्ध्यर्थमपि संस्कृतं श्रोत्रं प्रवणत्वात् सर्वान् शब्दान् घटाद्युन्मीलितमिव नेत्रं समानदेशस्थान् घटादीनवबोधयेत् । तदिदम्— 'सकृच्च संस्कृतं श्रोत्रम्' इत्यादिना दर्शितम् । अयं च दोषः पूर्वोपक्षिप्तेऽपि शब्दसंस्कारपक्षे दर्शयितव्यः । सर्वे हि शब्दाः श्रोत्रदेशे अवस्थितास्तत्रैकस्मिन् संस्क्रियमाणे बलादन्येषामपि संस्कारः स्यादेव । नहि समानदेशानां समानेन्द्रियग्राह्याणां कस्यचित् संस्कारः कस्यचिच्च असंस्कारः इति व्यवस्था सम्भवति घटादावदर्शनात्, तदिदमुक्तम्— 'एतदेव प्रसक्तव्यम्' इत्यादिना । उभयसंस्कारपक्षे तूभयेऽपि दोषाः समुच्चित्य दर्शयितव्याः, तस्मात् न प्रयत्नाभिव्यङ्ग्यः शब्दः । तदन्यस्तु असौ प्रादेशिकश्च, श्रोत्रं च कर्णशष्कुल्येव, तथा सति हि कैश्चिदेव कश्चिदेव शब्दः श्रूयत इत्युपपद्यते, अन्यथा श्रोत्रव्यवस्था शब्दव्यवस्था चोभयमपि न स्यात् । किंच नानादेशस्थैश्च वक्तृभिरुच्चारितः शब्दो युगपन्नानादेशेषूपलभ्यते 'तदेकस्य नित्यस्यानुपपन्नं' इति भाष्यम् । तत्र नित्यस्यानुपपन्नमिति प्रतिज्ञा, एकस्येति हेतुः, नित्यो व्याप्येकः स्यात् एकस्यानुपपन्नं नानादेशेषु उपलम्भनमिति । ननु नानात्वस्य नित्यत्वे सति एकत्वं भवति, अनेकान्येव हि गकारादीनि नित्यानि भवन्त्वित्यत आह— 'असति विशेषे नित्यस्य नानात्वम्' ( शा. भा. ) इति । एतदुक्तं भवति— प्रत्यभिज्ञाख्यविशेषप्रत्ययबलेन ह्रस्वनायतनगकारयोरेकत्वावगमात्

अतः संस्कृतेन शब्देन यस्येन्द्रियं संनिकृष्टं स एव शृणोति नान्य इत्युपपन्नम् ।

'युगपद्देशभेदश्च स्यादेकस्यापि सूर्यवत् । ये विन्ध्यनिलया ये च पारियात्रे व्यवस्थिताः ॥ प्राग्भागे उदयन् सर्वैरस्तभास्वान्निरीक्ष्यते । प्रत्यग्भागे तथाऽस्तं यन्मध्याह्ने चोपरि स्थितः ॥ भिन्नाश्च तेषां प्राग्भागास्तथा प्रत्यक् तथोपरि । तेनास्य दृश्यमानस्य विस्पष्टा भिन्नदेशता ॥' तथा यस्मिन् यावद्दूरे देशे कैश्चित् सूर्योदयो दृश्यते तद्देशवर्तिनोऽन्येऽपि ततः परस्तात्तावति पश्यन्ति ततोऽस्त्यस्ति भेदाभेदः । न च सूर्यनानात्वमाशङ्कनीयम्, न हि केचित् भिन्नं सूर्यं पश्यन्ति । किं पुनरेकदेशस्थस्यैव सवितुर्नानादेशोपलम्भे कारणम् ? उच्यते— अतिदूरवर्तिनोऽस्य यथावद्देशं अजानन्तः स्वसंनिधिमध्यस्यन्तो देशभेदं मन्यन्ते । विस्पष्टं चैतत् । तथाहि— यः प्रवाह्णे यस्मिन् यावद्दूरे देशे सूर्यं पश्यति— 'अस्मिन् क्षेत्रेऽस्मिन् पर्वते सूर्यः' इति, स सवितारमीक्षमाण एव तद्देशं गतस्ततः परस्तात्तथैव तं पश्यति तेनावगम्यते सर्वेषां देशानामग्रतः स्थितोऽसौ संनिहितवदवभासते इति । ये चादित्यापेक्षया स्तोकदेशाः पर्वतादयोऽपि द्वियोजनस्थितानां त्रियोजनस्थितानां च पुरुषाणां तुल्यवदवभासन्ते, तस्मादेकस्यैवापि संभवति नानादेशोपलम्भः । तथा एकमेव मुखं भिन्नेषु आदर्शेषु युगपत् दृश्यते । ननु प्रतिबिम्बं नामार्थान्तरं तत्र दृश्यते । न । तस्याभावादनुपलम्भाच्च, नहि मूर्तमध्ये मूर्तान्तरं संभवति । किंच शयानस्यानुरूपं भूमेरुपरि नाभिदघ्ने पार्श्वस्थिता कम्बोपरिष्टादवनिदर्शे स्वमुखं कुर्वन्नुदकस्थापम्नादर्शस्थितमिव मुखप्रतिबिम्बं पश्यति, तस्मिंश्च देशे पार्श्वस्थाः पुरुषा न कश्चिदपि पश्यन्ति, तेन दृश्यादर्शनविरुद्धः प्रतिबिम्बाभ्युपगमोऽर्थो न शक्योऽभ्युपगन्तुम् । तस्मादादर्शेनाम्भसा च प्रतिहतं नायनं तेजः परावृत्त्य मुखमेव गृह्णाति युगपत् । तस्मादेकस्यापि नानादेशोपलम्भो न नानात्वं शब्दस्य साधयति । ननु सवितुः संनिधानप्रमाणगुणा नानादेशावगतिः, शब्दे तु कथम् ? सर्वगतत्वात्, सर्वगतो हि शब्दो भिन्नदेशैः ध्वनिभिः स्वं स्वं देशेऽभिव्यज्यमानो भिन्नदेशोऽवभासते, ध्वनयो हि श्रोत्रदेशमागत्यापि शब्दं व्यञ्जयन्तः स्वोत्पत्तिदेशमिव शब्दं भासयन्तीति दर्शनबलादभ्युपगम्यते । ननु प्राप्यकारि श्रोत्रम्, न च ध्वन्युत्पत्तिदेशः श्रोत्रेण प्राप्यते इति कथं तस्य श्रोत्रेण ग्रहणम् ? तदग्रहे च कथं तद्विशिष्टशब्दग्रहः ? उच्यते— नायं श्रोत्रजस्तद्विशिष्टशब्दप्रत्ययः, किंतु श्रोत्रं हि स्वदेशस्थितं शब्दं बोधयदपि न देशविशिष्टं बोधयति किंतु स्वरूपमात्रेण, यतस्तु दिश आगता ध्वनयस्तया विशिष्टं शब्दं बोधयन्ति, सा हि दिक् श्रोत्रप्राप्ता शक्यते श्रोत्रेण ग्रहीतुम्, यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वं तथापि शब्दे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यते इति दृष्टत्वादङ्गीक्रियते कालवत् । यथाहि कालो न स्वातन्त्र्येणेन्द्रियैर्गृह्यते अथ च विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपीन्द्रियैर्गृह्यते तद्वत् । ततश्चास्यां दिशि शब्द इति विशिष्टग्रहणं तावत्सिद्धम् ।

ध्वनयश्च क्रमेण मन्दीभवन्तः प्रत्यासन्नाद्दूराद्दूरतराच्च देशादागतास्तीव्रं मन्दं मन्दतरं च शब्दं बोधयन्ति । बोधविशेषाच्च ध्वन्युत्पत्तिदेशः प्रत्यासन्नदूरादिरूपेणानुमानात् हृदयदेशमागच्छति तत्र यः शब्दस्य परमार्थदेशः श्रोत्रदेशस्तस्याग्रहणात् दिग्विशिष्टस्य शब्दस्वरूपस्य ध्वन्युत्पत्तिदेशस्य च ग्रहणात् तयोः संसर्गभ्रमादेवंविधः प्रत्ययो भवति, अस्यां दिश्येतावदन्तराले शब्द इति, तस्मादभिव्यञ्जकदेशभेदादुपपन्नं नित्यस्यापि नानादेशोपलम्भनमित्यदोषः । ननु अयं दोषः, यद्सति बाधके भ्रान्तित्वम्, प्रत्यभिज्ञाया वा कः पक्षपातो येन सा भ्रान्तिर्न स्यात् । अयमस्ति पक्षपातः, न ह्यसंभवति तद्भ्रान्तित्वे भ्रान्तित्वमङ्गीकर्तुं युक्तम्, नानादेशोपलम्भस्य त्वपरिहार्यं भ्रान्तित्वम् । अनित्यपक्षेऽपि श्रोत्रगत एव परमार्थतो गृह्यते श्रोत्रस्य प्राप्यकारित्वात्, न च तदनुगमने येन तद्देशग्रहणस्याभ्रान्तित्वं स्यात् ।

यदपि श्रोत्रस्याप्राप्यकारित्वमेवाश्रित्य नानादेशोपलम्भाभ्रान्तित्वं समर्थ्यते, तदयुक्तम् । अप्राप्यकारित्वे हि संनिकृष्टविप्रकृष्टयोर्युगवच्छ्रवणमुपलभ्येयाताम्, तदेतत् मनोऽपि प्रसिद्धं कथंचिदप्राप्यकारित्वे समर्थयितुं शक्यम् । किंच क्षणिको वा शब्दः स्यात् स्थायी वा ? यदि क्षणिक-

शब्दः । प्रदीपे तु प्रभामण्डलस्यावयवविश्लेषमन्तरेण अत्यन्तानुपलब्धेर्निःशेषावयवस्य चावयविनः अवश्यम्भावी विनाशः, विनष्टे च पूर्वस्मिन् प्रदीपे पश्चात्तनमवश्यं प्रदीपान्तरमेव भवति, दृष्टे च भेदे प्रत्यभिज्ञा सादृश्यनिमित्तेति कल्प्यते । शब्दे तु न किंचिद्भेदे प्रमाणमस्तीति विशेषः ।

तस्य शब्दस्य यत्नेऽपि विनाशो नास्ति यतः सूक्ष्म विनाशकल्पना स्यात्, तस्मान्नित्यः शब्दः । प्रयोगश्च भवति— नित्यः शब्दः श्रावणत्वात् शब्दत्ववत् । न च शब्दत्वं नास्तीति शङ्कितव्यं प्रत्यभिज्ञानात्, अरण्ये हि गच्छन्नश्रुतपूर्वं शब्दविशेषं श्रुत्वा प्राणिनः कस्यायं शब्द इति संदिहते, न च सामान्यदर्शनमन्तरेण विशेषसंशयो घटते । तथाऽवान्तरजातिरपि वर्गतृतीयगकारादिष्वनुवृत्ता ककारादिभ्यो व्यावृत्ता कदाचिदस्ति । तथा वर्गप्रथमेषु द्वितीयेषु चतुर्थेषु पञ्चमेषु च यथास्वमनुवृत्ताः सन्ति जातयः । कथमवगम्यते ? प्रत्यभिज्ञानादेव । तथाहि— नियत्यपि दूरदेशे दकारमुच्चरितं श्रुतवतो गकारादिषु संशयो भवति न चायं संशयो दत्वनिबन्धनो गकारादिष्वभावात्, अतोऽस्ति तृतीयादिष्वनुवृत्तमन्येभ्यो व्यावृत्तं रूपं यदुपलम्भादेव संशयः । तथा घकारोच्चारणे भकारादिषु संशयः, नान्येषु । तेन चतुर्थेष्वप्यस्ति सामान्यम्, एवं प्रथमेषु द्वितीयेषु पञ्चमेषु च यथास्वं सामान्यानि तैरेव दृष्टान्तैः । शब्दस्य तु श्रावणत्वहेतुना नित्यत्वानुमानम् । ननु शङ्खादिनादानामनित्यत्वेऽपि श्रावणत्वादनैकान्तिको हेतुः । न । तेषामपि प्रत्यभिज्ञया नित्यत्वात् । यदि तेषु प्रत्यभिज्ञा नास्ति, ततो 'ध्वन्यन्यत्वे सति' इति विशेषणाद्व्यभिचारः । यथा चानित्यता ध्वनीनां, तथा कार्यत्वान्नाश्रित्वस्यानुपपत्तेराश्रयभूतेन केनचिद्द्रव्येण भवितव्यम्, तस्य चानेकत्वे प्रमाणाभावादेकत्वे द्रव्यस्यैकद्रव्याश्रितत्वाभावात् द्रव्यत्वे शब्दस्य संयोगविभागयोरनपेक्षकारणत्वाभावाद्धर्मत्वे सति पारिशेष्यात् गुणत्वमेव ध्वनीनां भवति । तत्र पार्थिवविशेषादिगुणत्वे तद्ग्रहणप्रसङ्गात् गुणत्वे वा श्रवणान्तरग्राह्यत्वं तद्वन्नेष्येत, तस्मान्न पृथिव्यादिगुणत्वम् । वायुगुणत्वं तु युक्तम् । गुणत्वाद्धि संयोगाद्भेरीदण्डसंयोगादन्यतो वा निष्पद्यमाना वायवस्तच्छब्दविशेषगुणका निष्पन्नाः सर्वासु दिक्षु प्रविशमानाः श्रोत्रेण संयुज्यन्ते, ततश्च संयुक्तसमवायात् तद्गतः शब्दः श्रोत्रेण गृह्यते । यस्मादेव वायुगुणः शब्दस्तस्मादेवैश्चिदुच्यते, 'शब्दलिङ्गमाकाश' इति तन्निरस्तम् । वर्णानां तु नित्यानां द्रव्यत्वमेवाङ्गीक्रियते । नन्वेषामपि शब्दत्वात् ध्वनिवद्गुणत्वानुमानमिति चेत् । न । वर्णा न गुणाः ध्वन्यन्यत्वे सति श्रावणत्वाच्छब्दत्ववत् दिग्वत् कालवच्चेति प्रतिसाधनसद्भावात् । यथा च दिक्कालयोः श्रावणत्वं तथा प्रागेवोक्तम् । यत्तु स्पर्शविरहित्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपादिवच्छब्दस्य गुणत्वमिष्यते, तस्यापि यथोक्तमेव प्रतिसाधनमित्यास्तां तावत् । तस्मात् प्रयत्नान्तनयोः प्रत्यभिज्ञानाद्वर्णानां न तावत्प्रत्युच्चारणमन्यत्वम् । एवं चोच्चारणं शब्दस्य न कारणं किंत्वभिव्यञ्जकमिति सिद्धम् । न चोच्चारणादन्यत्कारणं संभवतीत्यकार्यत्वम्, अत एवाविनाशान्नित्यत्वसिद्धिः । इदमेव हि नित्यत्वं यत्स्वरूपसद्भावे सत्युत्पत्तिविनाशरहितत्वम् ।

सिद्धान्तचन्द्रिका—— 'भाष्यवार्तिकयोर्दृष्टमुपयुक्तं स्वदर्शने । ग्रन्थकारेण च त्यक्तं प्रमेयं लिख्यते मया ॥' नन्वस्तु नामैव नित्यत्वं तथापि आनुपूर्व्यनित्यत्वादनित्यत्वमापन्नम्, पदं हि वाचकमिष्टं तच्च क्रमाधीनम्, विभक्तानां वर्णानामवाचकत्वात् क्रमश्चानित्यः । तथाहि देशतः कालतो वा क्रमो भवति । न च वर्णानां सर्वगतानां नित्यानां च स्वतः क्रमः संभवति । ध्वनयो हि क्रमवर्तिनः क्रमेण शब्दानभिव्यञ्जयन्तः स्वीयं क्रमं वर्णेष्वपि दर्शयन्ति, क्रमवत्ता च पुरुषाधीना यथाविवक्षं तदुपपत्तेः । अतः पुरुषपारतन्त्र्यात् अप्रामाण्यापत्तिः । अतो निष्फलमेव वर्णानां नित्यत्वप्रतिपादनम् । नहि तन्नित्यत्वे वाक्यस्य पदस्य नित्यत्वं सिध्यति । नहि परमाणूनां नित्यता कार्ये घटादौ नित्यत्वं दृष्टम् । यथाहुः —— 'वर्णाः सर्वगतत्वाद्वा न स्वतः क्रमवृत्तयः । अनित्यध्वनिकार्यत्वात्क्रमस्यापि विनाशिता ॥ पुरुषाधीनता चास्य तद्विवक्षानुवर्तनात् । वर्णानां नित्यता तेन निष्फला परमाणुवत् ॥' किंच क्रमं विना वर्णानां प्रतिपादकत्वा-

समवायत्वस्य च वाचकत्वात् पदस्य न क्रमविशिष्टानां वर्णानां तस्य चानित्यत्वाद्वाचकानित्यत्वमिति । अत्रोच्यते— न तावत् क्रमस्य पदत्वमस्ति । वस्त्वन्तराधारस्य स्वतन्त्रस्य क्रमस्यादर्शनात् । अतोऽत्र गुणप्रधानभाव एव विचारणीयः किं क्रमविशिष्टा वर्णा एव वाचकाः उत वर्णाश्रितः क्रम इति । एवं च सति क्रमवतां वर्णानामेव वाचकत्वं प्राधान्यात् न क्रमस्य । स्वपदार्थान्तरेण तस्यासम्भवात् । न ह्यसौ स्वतन्त्र एव वस्तुतत्त्वेन क्वचिद्व्यवह्रियते । अत एव क्रमविशिष्टा वर्णाः पदात्मकाः प्रतिपादकाः न क्रममात्रम् । नन्वस्तु नाम तथापि क्रमस्य पुरुषायत्तत्वात् तद्विशिष्टवाचकस्यापि पौरुषेयत्वमापतत्येव, तन्न । अत्राहुः— 'न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात् । यथा न हि क्रमः कश्चित् स्वातन्त्र्येण प्रयुज्यते ॥ यथैवास्य परैरुक्तिस्तथैवैनं निगच्छति । यतोऽप्येवमतश्चास्य क्रमस्यानादिता ॥ तेनैव व्यवहारस्यादौगस्त्येऽपि नित्यता । यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता ॥' इति । ननु वर्णानामपि व्यवहारादेवानादिप्रवाहत्वरूपनित्यत्वमस्तु किं कूटस्थनित्यतयेति चेत् । नैवम् । वर्णानामनित्यत्वे व्यवहारस्यैवानुपपत्तेः । तथाहि वर्णेषु नित्येषु सत्सु तानेवाश्रित्य प्रयोगविशेषेण शक्यते क्रमविशेषो निष्पादयितुं परमाणुभिरिव घटादीनि । वर्णाभावे तु निर्मूला रचना स्यात् । न हि निरुपादानं कार्यत्वेन सम्भवति । न च नित्यविभूनां क्रमानुपपत्तिरिति वाच्यम् । ध्वनिद्वारा तदुपपत्तेः । ताल्वादिसंयोगविभागक्रमवशेन भेदितानां ध्वनीनामपि क्रमो भवति । ताल्वाद्यो ध्वनयश्च जात्या नित्याः । तेन गकारौकारविसर्जनीयानां क्रमनिष्पत्त्यै तदभिव्यञ्जकानां ध्वनिजातीयानां तदनुरूपेण क्रमेण प्रेरणं क्रियमाणे ताल्वादिसजातीयानां स्थानानां संयोगविभागौ क्रमेणारभ्येते इति तद्द्वारेण व्यापकानामपि वर्णानां क्रमग्रह इति । केचित्तु क्रमस्य कूटस्थत्वमेवाहुः । तथाहि— पौर्वापर्यं क्रमः, चिरक्षिप्रात्मकं च दीर्घादिरूपम्, पूर्वापरचिरक्षिप्रप्रत्ययाश्च कालालम्बनास्तेन ध्वनिभिर्वर्णेषु पूर्वापरभागेन व्यज्यमानः काल एव क्रम इति । ननु काल एव चेत् क्रमः स त्वेको विभुर्नित्यश्च कथं पूर्वापरेण रूपेण विभक्तो भासते । उच्यते— यथा वर्णो नित्यः सर्वगतोऽपि दीर्घादिरूपेण विभक्तो भासते ध्वन्युपाधिवशात्, तथा कालोऽपि स्वयमभिन्नोऽपि आदित्यगतिक्रियोपाधिवशात् भिन्नो भासते, उपाधयश्च विनष्टवर्तमानानागताः सूर्यादिक्रिया इति तद्वशेन कालेऽपि अतीतादिविभागः । क्षिप्रत्वं चास्य क्रियाविच्छेदात्, मन्दक्रियाविच्छेदात् चिरत्वमिति क्रमस्य नित्यत्वे पदस्यापि नित्यत्वं सिद्धम् । यथाहुः— 'तस्मान्न पदधर्मोऽस्ति विनाशी कश्चिदीदृशः । येन नित्यं पदं सिद्धं वर्णानित्यत्ववादिनाम् ॥' ननु ध्वनिधर्मा क्रमादयः कथं वर्णानामर्थप्रत्यायकत्वाङ्गं भवन्ति । अत्राहुः— 'परधर्मोऽपि चाङ्गत्वयुक्तमश्वगजादिवत् ।' किं पुनः क्रमादीनां व्यवहारनित्यत्वे प्रमाणम् ? अर्थापत्तिरेवेति ब्रूमः । पूर्वोक्तार्थापत्तिर्वाचकरूपस्यैव नित्यतां कल्पयति न वर्णस्वरूपमात्रस्येति । इति शब्दाधिकरणम् ।

वि— 'विध्यादिरूपो यः शब्दः सोऽनित्योऽथवाऽनित्यः ।, अनित्यो वर्णरूपत्वाद् वर्णे जन्मोपलम्भनात् ॥, प्रत्यभिज्ञाबलाद् वर्णस्य नित्यता । उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥' तस्मान्नित्ये शब्दे कारणदोषाभावान्नास्ति अप्रामाण्यम् ।

भाट्ट— शब्दस्य नित्यत्वे तत्र प्रमाणान्तरप्रमासम्बन्धोऽनादिः स्यात् । तदेव न सम्भवति, ताल्वादिव्यापारपूर्वकत्वस्य गकारादेः श्रवणेनोत्पादविनाशयोरङ्गीकर्तव्यत्वात् 'स एवायं गकारः' इति प्रत्यभिज्ञाया सादृश्यविषयत्वेन गौणत्वात् । न च ताल्वादिव्यापारस्य अभिव्यञ्जकत्वमात्रं सम्भवति । तथा श्रोत्रशब्दान्तरानिग्रहणयोग्यतानुकूलसंस्कारोत्पादकत्वेन, तद्ग्रहणप्रतिबन्धकदोषनिरासेन वा स्यात् । उभयथाऽपि दिगादिरूपश्रोत्रस्य नित्यव्यापकशब्दस्य वा संस्कृतत्वात् सर्वेग्रहणप्रसक्तिः । किं च नित्यत्वपक्षे गकारादिव्यक्तेरेकत्वान्नानादेशोच्चारणे देशभेदो नोपलभ्येत । तेन प्रतिदेशं भिन्ना एव शब्दा अनित्याश्च । इति प्राप्ते, व्यक्तिनाशे तु तस्य ध्वंसप्रागभावव्यक्तीनां च कल्पने अतिगौरवापत्त्या उक्तप्रत्यभिज्ञाया गौणत्वायोगेनाव्यच्छेदक

श्रीयते । च स्मृतिहेतो संस्कारादित्र एव । स्मृतिहेतुर्हि संस्कारो यदुपलम्भप्रभावितस्तेनैवोपलम्भा-नन्तरं जनयितुमर्हं नार्थान्तरं इत्यर्थविषया तत्र प्रतीति-रनुपपन्नेति तद्व्यतिरेकिणः संस्कारस्याश्रयणम् । तस्य च कार्यैकरूपत्वादाश्रयणाभावे प्रतीतिदर्शनं तथाभावः एवो-त्पत्तिरनुमीयते, तेन क्रमविपर्यये व्यक्तिभेदे व्यवधाने च कार्यदर्शनाच्चैव संस्कारस्यानुदयादर्थप्रत्ययाभावः । तस्य यस्य चार्थस्य प्रतीतौ यस्य यस्य वर्णस्य निमित्त-भावस्तस्य तस्य तदर्थप्रतीतावनुगुणसंस्कारार्थकत्वं स्वाभा-विकम् । सहायविरहात्तु कार्यानुदय सहायैश्च कार्यो-त्पत्तिरिति तेभ्य एवार्थप्रत्ययः । तस्मान्न प्रत्यक्षतो नाप्यनुमानतो वा वर्णव्यतिरिक्तपदोपलब्धिरिति वर्णात्म-कमेव पदम् ।

क पुनरर्थः ? अभिधेयः । अभिधेय एव कः ? येन सह शब्दस्य अपौरुषेयः सम्बन्धः । अथ कः सम्बन्धः ? प्रत्याय्यप्रत्यायकभावः । न तर्ह्यपौरुषेयः सम्बन्धः । स्वभावतः शब्दस्याप्रत्यायकत्वात् । यदि हि स्वभावत एव शब्दोऽर्थं प्रत्याययेत्तत्र प्रथमश्रुतः किं न प्रत्याययेत्ततोऽवगन्तुकामोऽपेक्षते किंचिच्छब्द इति । देवदत्तादिपदेषु च पुरुषसङ्केतायत्ता अर्थप्रतीतिर्दृष्टेति गवादिष्वपि तदपेक्षाश्रीयते । तदपेक्षा चेदर्थावगतिर्न तदपौरुषेयः शब्दस्य प्रत्यायकत्वम् ।

उच्यते । यद्यपि प्रथमश्रुतात् शब्दादर्थं नाव-बुध्यते तथापि स्वाभाविकमेव शब्दस्यार्थप्रत्यायकत्वं पुनः सङ्केतापेक्षम् । तथाहि । वृद्धयोर्व्यवहरतोरेकस्य वाक्यं श्रुत्वा परस्य प्रवर्तमानस्य प्रवृत्त्या बुद्धिमनु-मापयति । तस्याश्च शब्दश्रवणानन्तरभावित्वात् शब्दस्य हेतुतां तावदवधारयति । किन्तु तेषां पार्श्ववर्तिना व्युत्पि-त्सुना नव. शब्दात् न्यायमर्थमप्रतीयता पुनरेषा चिकि-त्सोदयते यदि प्रत्यायकः शब्दस्ततोऽस्मानपि किमिति नार्थं प्रतिपादयति । अथ प्रत्यायक एव ततो वृद्धमपि कथमवबोधयति । तेषामेव चिकित्सता पुनरेषा कल्पना प्रभवति । नूनमस्ति कश्चिदस्य वृद्धस्य विशेषो यतोऽर्थमवबुध्यते । कोऽसौ विशेष इति निरूपयताम् । पुनः शब्दश्रवणे वृद्धव्यवहारावगतार्थप्रत्यायकत्वमात्रेण व्यवस्थायामवगमदर्शनात् अर्थप्रत्यायकत्वावगम एव विशेष इति निर्धारणा जायते । न पुनः सङ्केतप्रतीति-र्वृद्धस्य विशेष इति कल्पना शक्या, सङ्केतस्यैव तदानीमप्रतीतेः । व्युत्पन्नेतरशब्दार्थौ हि सङ्केतवाक्या-दर्थमनुपलभमानः सङ्केतं प्रतिपद्यते नान्यथा । ननु उत्तरकाले सङ्केतदर्शनात् किमिति सङ्केतभूतमेव प्रत्या-यकत्वं नाश्रीयते । न, शब्दस्वभावत एवार्थप्रतीतिरूप-कार्यसिद्धेः । यदि हि शब्दमात्रादर्थप्रतीतिर्न सम्पद्यते तत सङ्केतोऽपि तत्कारणमिति कल्प्यते नान्यथा उपपद्यते तु शब्दमात्रादेवार्थावगतिः प्राग्व्युत्पन्नेन मार्गेण । नन्वेवं सति देवदत्तादिष्वपि कथं सङ्केतस्य कारणत्वम् । उच्यते । प्रत्याय्यपरिहारस्तत्र सङ्केतो न तु कल्प-नित्यः । तेन देवदत्तादिषु सङ्केतैरर्थप्रतीतिकारणत्वम् । गवादिषु तु केनचिदर्थदर्शनकल्पनीयो नावकाशं लभते इत्यपौरुषेय एतेषामर्थेन प्रत्याय्यप्रत्यायकलक्षणः संबन्ध इति सिद्धम् ।

असन्निकृष्ट इति किमिदम् ? प्रमाणान्तरेणाप्रतीत इति । यद्येवं कथमसौ शब्दैरवबोध्यते ? उक्तं वृद्ध-व्यवहारावगतसंबन्धः शब्दोऽवबोधक इति । यश्चार्थो न प्रमाणान्तरेणावगम्यते कथं तद्विषयो वृद्धव्यवहारः अवसीयते । कथतरां च तद्विषया प्रतीतिरनुमीयते । कथतरां च वाचकशक्तिः शब्दस्य कल्प्यते इति । वाक्यार्थमातृकायामस्यासौ विधीयतामित्यत्रोत्तरम् ।

न पुनरसन्निकृष्टोऽर्थो नियोगार्थ एव । नियोगो हि प्रमाणान्तरानवगतमपूर्वमर्थमवबोधयतीति वाक्यार्थमातृ-कायामुक्तम् । न च नियोग एवैकस्तस्यावबोधकः, विषयव्यतिरेकेण तदप्रतीतेः पदान्तराणामपि तदन्वयि-स्वार्थपरतयैव व्युत्पत्तेस्तेन वाक्येनैव नियोगार्थः प्रती-यते । तत्र लिङादिप्रत्ययो नियोगार्थशरीरमेवाभिदधाति प्रकृतिस्तद्विषयम् । पदान्तराणि च विषयविशेषणं नामधेयं नियोज्यं चाभिदधतीति नियोगार्थप्रतीतौ व्याप्रियन्ते । संनिपत्योपकारकाङ्गवाक्यानि च यद्यपि नियोगान्तरयुक्तानि तथापि प्रधाननियोगान्वितस्वार्था-भिधायकतया तन्नियोगप्रतिपत्त्यावेव पदान्तरवद्वर्तन्ते । विनियुक्तमन्त्रसमाम्नायोऽपि द्रव्यभूत नियोगजात

नियोगाङ्गतया समर्पयन्तद्विशिष्टनियोगावगमनेन उपक्षीयते, नियोगाङ्गता तु योग्यतया प्रयोगकाले नैयोगिककर्मतत्साधनस्मारणेन मन्त्राणाम् । अनुवादा अपि विधेयस्तुतिमुत्पादयन्तः स्तुतिविषयनियोगप्रतिपत्तिपरा एवेति कृत्स्न एव वेदोऽनधिगतेऽपूर्वे कार्यात्मनि प्रमाणम् । अत एव को वेदार्थ इति जिज्ञासमानेभ्यश्चोदनासूत्रेण कार्यात्मा वेदार्थ इत्युक्तम् ।

ननु सिद्धोऽपि ब्रह्मात्मा वेदान्तानामर्थः प्रतीयते । उच्यते । व्युत्पत्त्यपेक्षः शब्दोऽर्थमवबोधयति । व्युत्पत्तिश्च वृद्धव्यवहारे । व्यवहारश्च कार्यप्रतीतिनिबन्धनः । कार्यप्रतिपादकतयैव शब्दव्युत्पत्तिः । तथापि कश्चिच्छब्दः साक्षादेव कार्यप्रतिपादकतया व्युत्पद्यते कश्चिच्च कार्यान्वितस्वार्थपरतया ।

ननु विनापि व्यवहारं सिद्धार्थप्रतिपत्तिद्वारादपि लौकिकवचनात् सम्भवत्येव व्युत्पत्तिः । यथा 'पुत्रस्ते जातः' इति । अत्र हि मुखप्रसादादिभिर्लिङ्गैः लोकैः श्रोतुर्हर्षोत्पत्तिरनुमीयते । हर्षोत्पत्तिश्च हर्षहेतुमन्तरेण न सम्भवति प्रियार्थप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतं तेन 'पुत्रस्ते जात' इति वाक्येन प्रियोऽर्थो बोधित इति कल्प्यते । पुत्रजन्मैवास्य प्रियमुत्पन्नमिति प्रमाणान्तरावगतमिति तदभिधायकत्वमेव कल्प्यते । प्रतिपदमावापोद्वापाभ्यां व्यवहार इव स्वार्थविशेषसम्बन्धावगमश्च । तथा व्युत्पन्नेतरपदविभक्त्यर्थः काष्ठैः पचतीति वर्तमानोपदेशेऽपि पाके कारणं तत्काष्ठशब्देन प्रतिपाद्यते इत्यवगम्य प्रत्यक्षेण काष्ठानां कारणभावमवगच्छन् काष्ठशब्दे व्युत्पद्यन्ते । किञ्च अस्य शब्दस्यायमर्थ इत्यपि व्युत्पत्तिर्दृश्यते । न तत्र शक्यते वक्तुं कार्यान्वय एव शब्दस्यार्थ इति । अपि च येन नाम कार्याभिधायित्वं तावता च कार्यान्विताभिधानस्याप्युपपत्तेर्न शक्यते विशेषान्विताभिधानशक्तिः कल्पयितुम् । लोके च सिद्धार्थान्येव प्रायशो वाक्यानि प्रश्नोत्तराणि दृश्यन्ते । कुशलं ते कुशलं ममेत्यादीनि ।

अत्रोच्यते । सर्वपुरुषाणां तावद्वृद्धव्यवहार एव प्रथमं व्युत्पत्तिरङ्गीकरणीया । न खलु व्यवहारमन्तरेण विद्वान्व्याख्याने व्युत्पत्तिरवकल्प्यते । यद्यपि मुखप्रसादादिभिर्हर्षोत्पत्तिरनुमीयते, हर्षोत्पत्त्या च हर्षहेत्ववगमस्तन्निमित्तता च शब्दस्य तथापि 'पुत्रस्ते जातः' इति वाक्यस्य पुत्रजन्माख्यहर्षहेतुप्रतिपादकता हर्षहेतूनामानन्त्यात् दुरनुमाना । न च पारिशेष्येण तत्प्रतिपादकत्वावगमः । भूतभविष्यद्वर्तमानानां सन्निहितव्यवहितानां पारिशेष्यावधारणाया अत्यन्तदुष्करत्वात् । व्यवहारः पुनः प्रत्यक्षविनिश्चितार्थविषय उपलभ्यमानस्तद्बुद्ध्यनुसारेण तद्गतामेव शब्दस्य वाचकतामनायासेनापादयन् व्युत्पत्तावुपायतां गन्तुमलम् । व्यवहारश्चेद् व्युत्पत्त्युपायः, कः कार्यान्विताभिधानं शब्दानामपहरेत् । न हि कार्यावगमं विना व्यवहारोऽवकल्पते इत्युक्तं वाक्यार्थमातृकायाम् । एवं लोके यः सिद्धार्थपरतया पदानां प्रयोगः स लाक्षणिको भविष्यति । कार्यान्वयो हि परस्परपदार्थान्वयाव्यभिचारीत्यविवक्षित्वा कार्यान्वयं परस्परपदार्थान्वयविवक्षयाऽपि लोकाः शब्दं प्रयुञ्जते । विवक्षावशेन च लक्षणया तत्परताऽपि तत्र निर्वहति । वेदे तु लक्षणानिबन्धनं किञ्चित् नास्तीति स्वाभाविककार्यपरत्वं नापहर्तुं शक्यते । एवं सिद्धपरेऽपि वाक्ये या व्युत्पत्तिः साऽपि कार्यपरतां न जहाति । सर्वपदानामेव हि स्वाभाविकी वृद्धव्यवहारसिद्धा कार्यपरता, लाक्षणिकी च सिद्धपरतेति । सर्वव्यवहारेषु कार्यान्वयाव्यभिचारात् तदन्विताभिधायिता न शक्यते हातुमिति न सामान्येनार्थान्तरमात्रान्विताभिधानं शक्याश्रयणम् । अतश्च वेदान्तानामपि आत्मा ज्ञातव्यः इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । अथ सिद्धार्थप्रतिपत्तिपरत्वेन व्युत्पत्तेरभावात् वृद्धव्यवहारावगतायाः पदानां अन्विताभिधायिताया अनुपपत्तेः, कार्यपरत्वे न प्रमाणान्तरानवगतात्मस्वरूपानुवादेनैव वर्णनं कर्तव्यम् । अपि च सिद्धार्थपरत्वेऽपि शब्दस्य न वेदान्तानां परमानन्दादिरूपत्वे ब्रह्मणः प्रामाण्यमवकल्प्यते । तत्र हि ब्रह्मस्वरूपानुवादेनानन्दादिरूपविधिराश्रयेय. । ब्रह्मस्वरूपं च प्रमाणान्तरसिद्धमेवाश्रयणीयम् । ब्रह्मशब्दस्य च लोके प्रमाणान्तरसिद्धमहत्त्ववाचित्वेन सिद्धेर्वेदेऽपि स एवार्थः । तथा च सति निरतिशयपरमानन्दरूपविधिः सकलप्रतिपत्तिविरुद्धः । सर्वप्रतिपत्तिषु

हि प्रमाणस्मृतिभूतस्यात्मा प्रकाशते । न च स्व परमानन्द संवेद्यते । न च सांसारिकदुःखाभिभूतत्वात् तस्याप्रकाश, अभिभवानुपपत्तेः । अविच्छिन्न हि दुःखमनवच्छिन्नश्चानन्द इति नात्मीयतया महतोऽभिभव सम्भवति । स्वप्रकाशस्य च अभिभवावरणमित्यत्तो नाममात्र एव । अभिन्नात्मनस्त्वप्रतिपादनमपि प्रमाणान्तरनिरुद्धमेवेत्युक्त तत्त्वालोके । सकलविकारशून्यता अपि विज्ञानादिविकारोत्सत्त्व प्रमाणान्तरविरुद्धैवेति परस्परान्यतरयोगतया नानन्दादिपरत्वम् । अजरामरत्वयोस्तु प्रमाणान्तरप्रसिद्धयोरनुवादत्वादप्रामाण्यमिति ।

नन्वप्रामाण्यमपि शाब्दमस्ति लौकिकम् । तत्कथमिति न लक्षितम् । उच्यते । न शाब्दमप्रामाणिकं शाब्दमस्ति, शब्दाद्धि यद्विज्ञानमुत्पद्यते तच्छाब्दं स्यात् । न च वेदव्यतिरेकेण तत्सम्भवति । लौकिकं हि वाक्यं नार्थे स्वतः निश्चयमापादयति, लौकिकवचसामनृतभूयिष्ठतया व्यभिचारस्य शङ्कितत्वात् ।

नन्वेवमपि वैदिकमपि वचो नार्थनिश्चायकं स्यात् शब्दोत्पादितस्य अर्थज्ञानस्य लोकेऽर्थव्यभिचारित्वात् । अथोच्येत वैदिकाद्वचनात् स्वतस्तावन्निश्चयो जायते । पश्चात्तनस्तु संशयस्तद्विरोधात्मलाभं न लभते । यथा स्थाणौ समीपवर्तिनि स्थाणुरूपतया निश्चिते न पुनरूर्ध्वता स्थाणुपुरुषसंशयं प्रसूते । दूरस्थो हि यत्रस्थिताया संदेहो जायते । यत्र च निश्चितोऽर्थस्तत्रोपलब्धिर्व्यवस्थितमित्यर्थो न युक्त । न चाव्यभिचारनिश्चयपूर्वकं शब्दस्य निश्चायकत्वं येन व्यभिचारे निश्चयो न स्यात् । किन्तु स्वभावत इन्द्रियवच्छब्दो निश्चयहेतुरिति । तन्न । सञ्जातेन निश्चयेनोभयथा दृष्ट्या स संशयः स निश्चयेनैव न शक्यते निराकर्तुम् । वाक्यदोषान्तरो हि संजातो निश्चयेन निरुध्यते । स पुनरन्यथैव एव नासौ तेन निरुध्यते ।

उच्यते । युक्तमस्मिन् लौकिके वचसि सन्देहः । पुरुषा हि स्वेच्छानिबन्धना एव पदानि आशयदोषेण वा भ्रमेण वा प्रमादेन वा अशक्त्या वा प्रयुञ्जाना दृश्यन्ते । तत्र यद्यपि तदुक्तानां पदानामन्विताभिधानसामर्थ्यमस्ति तथाप्यनन्वितार्थत्वशङ्कया नान्वयो निश्चीयते । कथं तर्हि लौकिकवाक्येभ्यो व्यवहारप्रवृत्तिः ? उच्यते । संशयानोऽपि लोको व्यवहरति । संदिग्धायामपि वृष्टौ कृष्यादिके कर्मणि प्रवर्तते । अथवा अस्त्येव निश्चयोपायः । यो हि पुरुषो एवमवधारितो नायमशक्तो न प्रमादी सम्यग्वेदितार्थविषयप्रमाणः सकलाशयदोषरहितश्च नानभिप्रेतार्थमन्वितार्थानि प्रयुङ्क्ते इति तद्वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वादन्वयज्ञानं तावदनुमीयते । अन्वयज्ञानाच्चान्वयोऽप्यनुमीयते । ज्ञानं हि ज्ञेयाविनाभावि ज्ञेयानुमाने भवत्येव लिङ्गम् । तदेवं लौकिकाद्वचसो लिङ्गभूताद्वक्तृज्ञानमनुमीयते । ततोऽर्थं निश्चित्य व्यवहारं प्रवर्तते । एवं च निश्चितेऽन्वये निवृत्तायां शङ्कायां वाक्यादप्यर्थनिश्चयो जायते । किन्तु तस्यां दशायामनुवादकत्वेन । अत एव लौकिके वचने न शाब्दं प्रमाणम् । अभिप्राये शब्दो लिङ्गम् । अभिप्रायोऽर्थे लिङ्गम् । शब्दस्त्वर्थे पश्चान्निश्चयं जनयन्नप्यनुवादकत्वान्न प्रमाणम् । ननु अशक्तप्रमादिभ्रान्तदुष्टाशयप्रयुक्तानां पदानां अनन्वितार्थत्वदर्शनात् पुरुषान्तरवचनेष्वनन्वितार्थत्वाशङ्का जायते तन्निवृत्तिमात्र एव पुरुषस्य वक्तुः शक्तत्वाप्रमादित्वाऽभ्रान्तत्वादुष्टाशयत्वज्ञानं व्याप्रियताम् । अर्थनिश्चयस्तु वाक्यादेवापास्तसंदेहादस्तु । मा भूत् वक्तृज्ञानादनुमितादर्थनिश्चये जाते वाक्यस्यानुवादकत्वमिति । उच्यते । अभ्रान्तत्वं नाम पुरुषस्य यथार्थज्ञानयोगित्वम् । आशयदोषविरहश्च यथानिश्चितार्थविवक्षा । शक्तत्वं च यथाविवक्षितपदप्रयोगसामर्थ्यम् । शक्तस्यापि यथाविवक्षितविक्षेपश्च प्रमादो यस्यैतच्चतुष्टयमस्ति स प्रत्ययितः । तस्यैतद्वचनम् । तस्य ज्ञाननियमोऽस्य वाक्यप्रमाण इति । तेन तदीयवाक्यश्रवणे तद्गतसम्यग्ज्ञाननिश्चयो जायते एव । समीचीनं चेत् ज्ञानमुत्पद्यते यद्यथाविषयकादि यस्य यथा प्रतीयमानोऽर्थोऽस्ति तेन समीचीनज्ञाननिश्चयोऽन्तर्गतार्थनिश्चय एवेति न संशयनिवारणमात्रं पुरुषविशेषविशेषज्ञानं व्याप्रियते किन्त्वर्थनिश्चय एवेति निश्चितेऽर्थे निवृत्ते च संशये वाक्यमर्थनिश्चयं कुर्वदप्यनुवादकत्वान्न प्रमाणम् ।

ननु तर्हि वक्तृज्ञानस्यान्यतोऽनवगतस्य अवगमकं पौरुषेयं वाक्यं तदेव शाब्दं प्रमाणमस्तु । न, तदानुमानत्वात् । वक्तृज्ञाने हि निश्चितसम्बन्धं प्रत्ययितवचनम् । वक्ता तु धर्मी । ज्ञानविशेषयोगित्वाख्यप्रयोगिते तस्यैकदेशानिति । अत एव च भगवान् काश्यपो वेदान् पौरुषेयान् मन्यमानः शाब्दमनुमानेऽन्तर्भूतमुवाच तस्येदं कारणं कार्यमिति लैङ्गिकमुक्त्वा एतेनैव शाब्दमप्युक्तमिति । वक्तृज्ञानं हि कारणं वाक्यं च कार्यम् । अत एवान्यैरप्युक्तम् । वक्तुरभिप्रायं तु सूचयेयुरिति । स एव तथा प्रतिपाद्यमानतया आश्रय इति । ननु यदि वाक्याद्वक्तृज्ञानानुमानं वक्तृज्ञानाच्चार्थानुमानं तर्ह्यनवगतेऽर्थे कथं ज्ञानविशेषोऽनुमातुं शक्यः । अर्थेनैव निराकारस्य ज्ञानस्य विशेषो न चानिश्चितोऽर्थो ज्ञाने विशेषमापादयति । उच्यते । अनवगतेऽप्यर्थे ज्ञानविशेषोऽनुमातुं शक्यत एव । यादृगर्थप्रतिपादनयोग्यानि पदानि प्रयुक्तानि तादृगर्थविषयं ज्ञानमनुमीयते । नन्वेवं वेदस्य प्रामाण्यमपास्तम् । व्युत्पत्त्यपेक्षो हि वेदे शब्दात् अर्थावगमो वृद्धव्यवहारे च व्युत्पत्तिः । वृद्धवाक्यानि लैङ्गिकभूतानि न तर्हि स्वार्थे प्रमाणतया व्युत्पन्नानि । उच्यते । यावद्धि पदानां अर्थविशेषवाचकत्वं नाधीयते तावत् वक्तृज्ञानविशेषोऽपि नानुमीयते । विशिष्टात् हि वाक्यात् विशिष्टं ज्ञानं अनुमातव्यम् । न च अर्थविशेषप्रतिपादकत्वात् अन्यो वाक्यस्य विशेषोऽस्ति इत्यवसेयं अर्थविशेषप्रतिपादनसामर्थ्यमेतेषाम् । अर्थप्रतिपादनसामर्थ्यावधारणमेव च व्युत्पत्तिस्ततैवार्थप्रतीतिः । अनुवादकत्वेऽपि च शब्दानामस्त्येव प्रतिपादकत्वम् । वेदे च व्युत्पत्तिबलेनार्थप्रतिपत्तौ तावता प्रामाण्यमुपपद्यत एव । ननु वेदेऽपि शङ्कया भवितव्यमित्युक्तम् । सत्यमुक्तम्, अयुक्तं तत् । न तावदन्यथानिश्चयानुपपत्तिः वेदे संभवति । वञ्चकत्वादिकर्तृदोषवशेन ह्यनन्वितार्थपदप्रयोगो लोके दृष्टः । न च वेदे कर्ता पुरुषोऽस्ति । तेन तदाश्रितास्तावद्दोषा अनन्वितार्थपदवचने हेतवो वेदे शङ्कामपि नावतारयन्तीत्यर्थनिश्चयस्तावज्जायते । न च पौरुषेयवाक्यजन्यनिश्चयस्य व्यभिचारात् वैदिकेऽपि निश्चये व्यभिचारशङ्का उचिता, शङ्काया दर्शनमूलत्वात् । यथाभूते हि यद् दृष्टं तत् तथाभूते एव पुनः शङ्कामवतारयति । अपि च लौकिकस्यापि तत्र व्यभिचारो नास्ति । प्रत्ययितवचनादप्रत्ययितवचनमपि भेदेन न प्रतिपद्यमानः प्रत्ययितवचने दृष्टज्ञानपूर्वकत्वं स्मरन् तत्र स्मरणग्रहणाद्विवेकेनानवबुध्यमानो ग्रहणव्यवहारं प्रवर्तयति । तत्र न कश्चिद्व्यभिचारः ।

ननु च पदसंघातात्मकतया वेदा अपि पौरुषेया एव । पदसंघाता हि पौरुषेया एव दृश्यन्ते, भारतादिवत् । तथा च काठकादिसमाख्याऽपि वेदे प्रवर्तते । न चेयं प्रवचननिमित्ता समाख्येति कल्पयितुं युक्तम् । साधारणत्वात् प्रवचनस्य । बहवो हि प्रवक्तारः । कर्ता पुनः असाधारणो भवति । कृतस्य करणायोगात् । असाधारण्येन व्यपदेशा भवन्ति । यथा वैयासिकी भारतसंहितेति । अतः पौरुषेयत्वेन वेदानां तदर्थस्य प्रमाणान्तरविषयत्वात्तद्विषये वक्तुः प्रमाणाभावादनिश्चितार्थत्वाशङ्का तत्पदेषु भवन्ती केन वार्यते ।

उच्यते । पुरुषकृतत्वं तावद्वेदानां भारतादिवन्न स्मर्यते । समाख्या तु पौरुषेयी प्रमाणान्तरानुसारिणी न शक्नोति स्वयमर्थव्यवस्थां कर्तुम् । यदि विचारयन्तः कृतकत्वमेव निर्णेष्यामस्ततः करणनिबन्धना समाख्या भविष्यति । अथ तु यत्नेनान्विष्यन्तोऽपि पौरुषेयतां नोपलप्स्यामहे ततः प्रवचननिबन्धनेति वक्ष्यामः । तदपि साधारणं स्यात् । प्रकृष्टं हि वचनं कस्यचिदेव कुत्रचिदेव तावत्संघातप्रवक्तृत्वं न पौरुषेयतामनुमापयितुं क्षमम् । वेदार्थविषयवाक्यविरचनासामर्थ्यानुपपत्तेः । परस्परसहतार्थतया तावद्वेदा उन्मत्तप्रणीता इति न शक्यते वक्तुम् । उन्मत्तप्रणीतस्य चेयतो ग्रन्थराशेः प्रथममध्ययनं कथं प्रवर्तते । के हि सचेतसः उन्मत्तोक्तमेतावन्तं ग्रन्थराशिं महता क्लेशेनाधीयीरन् धारयेयुरध्यापयेयुश्च । न च बुद्धादिग्रन्थवत् बुद्धिपूर्वकारिणा प्रोत्साहिता महत्यायासे प्रवर्तेरन्, नातो बुद्धिपूर्वकारिप्रणीता वेदा इति वाच्यम् । न हि बुद्धिपूर्वकारी वेदान् रचयितुमलम् । तदर्थस्य बुद्धा-

वारोपयितुमशक्यत्वात् । प्रमाणान्तराविषयो हि अपूर्वो मा चदाय स प्राग्वेदवचनेभ्यो बुद्धिस्थतामापादयितुमशक्य । ननु बुद्धादिवचनान्यप्येवमेव अपौरुषेयाणि स्यु । न । तेषा साध्यसाधनभावमात्रपरत्वात् । साध्यसाधनभावस्य कस्यचित्कदाऽपि बुद्धावारोपयितु शक्यत्वात् । ज्योतिष्टोमादिषु दृष्ट स्वर्गसाधनत्व चन्यत्र दत्ता-दावारोपयितु शक्यते । अपूर्वे त्वपूर्वत्वादेवारोपेणापि नावतरति । अथ कथ तुल्येऽपि लिडादिप्रयोगे बुद्धादिवचनानि साध्यसाधनभावमात्रपराणि न वेदवाक्यानि । उच्यते । बुद्धादिवचनानि तावत् साक्षात् दृष्टकर्तृपुरुषाणि । तेन यदेव पुरुषा प्रमाणान्तरेण बुद्धिस्थीकर्तुमीशते तद्विषयाण्युक्तान्येवेति निश्चीयते । पुरुषाश्च नापूर्वं बुद्धौ निवेशयितुमलम् । साध्यसाधनभाव त्वन्यत्र दृष्ट बुद्धिस्थीकृत्य विरचयितु क्षमन्ते । वेदेषु तु साक्षात्कर्ता नोपलभ्य । तेन स्वमहिमानुसारेण तावदर्थो बोद्धव्य । स चापूर्वात्मक प्रतीयते । प्रतीते च तस्मिन् वक्तृणा तद्विषयवाक्यरचने बुद्धिपूर्वकारिणामिति पौरुषेयत्व नानुमीयते । ये एव हि पदसङ्घाता पौरुषेयत्वे विचारयितु शक्यन्ते तानेव पौरुषेयत्व दृष्टमित्यशक्यविरचनेषु पौरुषेयत्वानुमान न लभते । न च पौरुषेयत्व विना पदसङ्घातात्मकत्वमेव नोपपद्यते । उच्चारणवशेन हि पदानि सहतत्वमापद्यन्ते । तच्चोच्चारणान्तरपूर्वक वा स्यात् स्वबुद्धिप्रभव वा, दृश्यते ह्यन्येनापि प्रयुक्तमन्येनाधीयमान भारतादिवत् यथाऽन्यतना पुरुषा भारतादिकमुच्चारणान्तरमधीयते तथा वेदानपि सर्वपुरुषा पठन्तीति किमनुपपन्नम् । अत सिद्धमपौरुषेया इति । अपौरुषेयत्वेनास्ति प्रमाणान्तरापेक्षा प्रत्यक्षवत् । अत प्रमाणमनपेक्षत्वादित्युक्तम् ।

ननु ‘ चित्रया यजेत पशुकाम ’ इत्यादिचोदना पश्वादिफलानुबद्धस्यार्थं बोधयन्ति । न च कर्मानन्तर फलमुपलभ्यते । न च कालान्तरे फल भविष्यतीति शक्यम् । कर्माभावात् । अत प्रमाणान्तरबाधाद् प्रमाण शास्त्रम् ।

उच्यते । न तावच्छास्त्रेणानन्तरभावितया फल श्राव्यते येनानन्तरफलादर्शनेन बाध स्यात् । न च कालान्तरे कर्माभावात् फलोत्पादासम्भव । कालान्तरस्थायिनोऽपूर्वादेव फलोत्पत्त्यवगमात् । न च कालान्तरे प्रतिग्रहादिकारणान्तरदर्शनमपूर्वस्य फलसाधनता बाधते । काम प्रमाणद्वयसमर्पित उभय फलसाधनमस्तु । शास्त्रेण अपूर्वं फलसाधनमवबोधितम् । प्रत्यक्षादिभि प्रतिग्रहादिरपि । न च कालान्तरभाविनि फले कर्तुर्भोक्तृत्वमनुपपन्नम् । नित्यत्वात् । बुद्धीन्द्रियशरीरेभ्यो हि भिन्न पुरुष कर्मणा कर्ता स च नित्यतया कालान्तरभावीन्यपि फलानि भोक्तुमलमिति न प्रमाणान्तरबाधादपि शास्त्रस्य प्रामाण्यमाक्षेप्तु शक्यम् ।

अत्रापि शिष्टि शास्त्रमिति ज्ञान शास्त्रम् । शिष्यते अनेनेति तु शब्द , स च द्विविध प्रत्यक्षोऽनुमेयश्च । किं पुन शब्दानुमाने लिङ्गम् ? ‘ अष्टका कर्तव्या ’ इति वचनम् । कथम् ? इय तावत्स्मृति त्रैवर्णिकैरविगानेन परिगृहीता । न च निर्मूलाया परिग्रह उपपद्यते । मूल च न प्रत्यक्षादि सम्भवति । तस्य कार्यत्वाविषयत्वाभावात् । स्मृतौ चापूर्वकार्यावगमात् शास्त्र सम्भवति मूलम् । ननु च तदपि मूल नाव कल्पते । प्रयत्नेनापि आलोच्यमानस्य अनुपलम्भात् । न चानुपलभ्य शब्दोऽर्थमवबोधयति । न च अयमनवगमवमूल भवितुमर्हति । उच्यते । सत्यम् । वयमिव मन्वादयोऽपि तच्छास्त्र प्रत्यक्ष नोपलभन्ते । अनुमान तु तेषामप्यस्माकमिव सम्भवति । स्मृत्यन्तर हि महाजनपरिगृहीत दृष्ट्वा तेऽपि तत्कर्तुं स्मृत्यन्तरानुमित शास्त्र मूलभूतमनुमातु शक्नुवन्ति, एवमन्वादिनाऽस्मृतिपरम्पराया लिङ्गभूताया सम्भवात् नानुमानविघात । शब्दार्थसम्बन्धवत् । यथाहि वृद्धव्यवहारदर्शनेन प्रयोज्यवृद्धस्यार्थप्रतिपत्ति प्रकल्प्य तस्याश्च शब्दश्रवणानन्तरभावित्वेन शब्दस्य तत्कारणता प्रतीत्य कथ पुनरमीमाप्रतिपादक शब्द अस्य अर्थप्रतिपादक इति च वितर्क्य पुन स्वय तत शब्दादर्थमवगम्य प्रतिपादकत्वेनावगत शब्दोऽर्थमवबोधयतीति निश्चित्य वृद्धस्यार्थप्रतिपत्तिसामर्थ्यं कल्पयित्वा स कथमनेन वृद्धेनार्थप्रतिपादकतया शब्दोऽवधारित इति विचिन्त्य नूनमस्यापि वृद्धव्यवहारान्तरदर्शनमेव व्युत्पत्त्युपायभूत ममेव वृद्धा

न्तरस्यापि अपरवृद्धव्यवहारान्तरदर्शनमेवेत्यनादिवृद्धव्यवहाररूपलिङ्गपरम्परया परिकल्प्य लोको व्युत्पद्यते। तथा स्मृतिपरम्परामनादिमेव कल्पयित्वा शाखानुमानमपि कुर्वन्ति। न चानुमितस्य शाखस्यार्थप्रतिपादकत्वमनुपपन्नम्। लिप्यनुमितवत्। सर्वदा च तस्याश्रवणमनाम्नातत्वात्। अनाम्नानमेव कस्मादिति चेत्। आचार्यैरनाम्नानात्। तदपि कथमिति चेत्। आचार्यान्तरैरनाम्नातत्वादिति न दोषः। न च तस्यानन्तरम्। वर्णात्मकत्वात्। प्रत्येकं च वर्णानां श्रोत्रेन्द्रियग्राह्यत्वात्। वेदत्वं च तस्याप्यपौरुषेयं वाक्यरूपत्वात् तन्मात्रवर्तिजातेः वेदशब्दस्य। तस्मादनुमेयमपि शाखास्ति।

अन्यच्चापि शाखा किंचिदध्याहारापेक्षा पिण्डपितृयज्ञादिशाखा वैदिकशाखा च। पिण्डपितृयज्ञादौ हि नियोज्यपदाश्रवणादपरिपूर्णं वाक्यम्। ननु पदानामन्विताभिधायित्वेन व्युत्पत्तेर्यत्रैकपदप्रयोगेऽन्वितार्थान्तरापेक्षत्वात् अन्विताभिधानस्य तदसिद्धावपरिपूर्णता। अनेकपदप्रयोगे तु अन्विताभिधानस्य सिद्धत्वात् किंनिबन्धनमपरिपूर्णत्वम्। उच्यते। अथाप्यभिहितार्थस्यानुपपत्त्या वाक्यस्यापरिपूर्णता। अत्रापि लिङादिभिरपूर्वं कार्यरूपमभिधीयते। न चानुष्ठानमन्तरेण कार्यरूपता निर्वहति, न च कर्तारमन्तरेणानुष्ठानोपपत्तिः। न च अधिकारमप्रतीत्य कर्मणि कर्तृता प्रतिपद्यते। कर्मणि चाधिकारो नियोगे नियोज्यस्य अवगम्यते। यो हि ममेदं कार्यमिति प्रतिपद्यते स स्वकीयकार्यसाधनं कर्म स्वार्थतया प्रतिपद्यमानः अधिकारी स्यादिति नियोज्याश्रवणेऽपि कार्यत्वानिर्वाहादनुपपन्नमपरिपूर्णत्वम्। अतो लोके अपरिपूर्णवाक्यपरिपूरणाय शब्दाध्याहारवदध्याहारो वेदेऽपि आश्रीयते। कः पुनरयमध्याहारो नाम? अधिकारस्य बुद्धौ निवेशनम्। बुद्धौ सन्निहितं श्रूयमाणः शब्दः स्वार्थमन्वितमभिधत्ते। तस्य च विशेषाकाङ्क्षा योग्यता लाघवं च कारणम्। तथाहि। यद्यपि जीवनमन्तरेण नित्ये च तथापि तस्मिन्नियोज्यविशेषणे समासीयमाने विशेषणमनुष्ठानाक्षेपकत्वं कल्पनीयं काम्ये त्वधिकारिविशेषणे तदर्थितयैव प्रवृत्तेर्विधेरनुष्ठानाक्षेपकत्वकल्पना न कर्तव्या। यद्यपि चोदनाद्दुरितक्षयोऽपि पुरुषैरिष्यते तथापि तस्योपात्तदुरितक्षयापेक्षत्वाद्गौरवम्। तस्मात्तत्फलपुरुषाभिलषणीयं सकलदुःखसंभेदरहितं सुखं स्वर्गपदाभिधेयं नियोज्यविशेषणं कल्प्यते। कथं पुनः तादृक्सुखवाचकता स्वर्गशब्दस्यावसीयते। उच्यते। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादिसमाम्नाये सकलदुःखसंभेदरहिताभिलाषोपनीतदीर्घतरसुखसाधनत्वे नार्थवादैः स्तूयमानं कर्म दृश्यते। स्वर्गशब्दोऽपि लोके कस्मिंश्चिदर्थे श्रीत्या वृत्त्या प्रयुज्यमानो दृश्यते। योऽयं च चन्दनादौ प्रयोगः सोऽपि प्रीत्युपगमे तस्यैव प्रयोगात् प्रीतिसाधनवाचकत्वकल्पनेऽपि प्रीतेरपि वाच्यत्वाश्रयणात् प्रीतिमात्रवाचकस्य तत्साधने लक्षणया अपि प्रयोगोपपत्तेर्लाक्षणिक एव। तत्र यदि विप्रकृष्टकार्यतः स्वर्गशब्दः तथा सुखे वर्तते ततोऽर्थवादानां मुख्यैव वृत्तिः स्तुतावपि स्यादिति तादृशसुखवाचकता स्वर्गपदस्याश्रीयते, चन्दनादिष्वपि यो लाक्षणिकः प्रयोगः, सोऽपि प्रयत्नार्थं. सुखस्य तत्र तद्विधसुखसाधनत्वादनेनैवोपपन्नः। तथा च यावत्तावत्सुखसाधने स्वर्गशब्दं न प्रयुङ्क्ते किन्तु सातिशयप्रीतिजनके। स्वर्गपदाभिधेयसुखसाधने चोक्तेन न्यायेनाम्नाय एव प्रमाणं तदन्यथानुपपत्त्या च तदुपभोगयोग्यदेहदेशसद्भावोऽपि नानुपपन्नः। सामान्यतोदृष्टानुमानं तु न नियोज्यकल्पनायां प्रमाणम्। अध्ययनादौ व्यभिचारदर्शनात्। विश्वजिदादिप्रयुक्ता वानुष्ठानलाभादपरिपूर्णताऽपि नास्ति, विकृतिषु करणोपकारकपदार्थवर्गाणामनाम्नानात् तद्व्यतिरेकेणोपकारासंभवात् तदभावे करणस्य कार्यसाधनासमर्थत्वात् कार्यस्य कार्यत्वानिर्वाहादपरिपूर्णत्वे सति परिपूरणार्थमध्याहारः कर्तव्यः। न च तावत्कार्यान्तराध्याहारो नोपपद्यते, विशेषाकाङ्क्षाभावात्। करणोपकाराध्याहारेऽपि प्रकृतिवदपरिकल्पनाध्याहारे पुनरपि पदार्थानामभावे निर्वाहासंभवात् प्रकृतोपकाराध्याहारः कर्तव्यः। तथापि प्रकृतीनां बहुत्वात् चोदनालिङ्गसामान्यात् या बुद्धौ संनिधीयते तदीयोपकाराध्याहारो युक्तः। तदध्याहारे तथैवापरिपूर्णे पदार्थाकाङ्क्षाया तदुपकारोपस्थापितैः

पदार्थैरन्विताभिधानम्। यद्यपि चाप्याद्युपकार प्रकृतौ तत्पदार्थजन्यतया निर्ज्ञात तथाप्यपूर्वप्रयुक्तत्वात् पदार्थाना प्राकृतापूर्वसम्बन्धस्यैव सततस्योपकारस्य ते पदार्था जनका नापूर्वान्तरसम्बन्धस्येति संप्रति चैकत्रापूर्वे संबन्धमुपगत करणोपकारो न तत्पदार्थजन्यतया अवसीयते इत्यस्ति तज्जनकपदार्थापेक्षेति पूर्वप्रतीतसम्बन्धेनोपकारेणोपस्थापितै· पदार्थैरन्वितो विध्यर्थ स्वशब्देन अभिधीयते। उपमान तु प्राकृतोपकारपदार्थसंबन्धे न प्रमाणम्। सादृश्यमात्रविषयत्वात्। अतोऽध्याहारापेक्षमपि प्रमाणं शास्त्रम्।

तथा प्रत्यक्षमपि शास्त्र वचन यत्तत्यवधारणाय लोकप्रसिद्धन्यायापेक्षम्। यावद्धि लोकप्रसिद्धन्यायानुसारेण वचन यत्तत्त्वधारण न क्रियते न तावत् समीचीनार्थबोधोत्पादनक्षम शास्त्रम्। तथाहि, ‘ उद्भिदा यजेत पशुकाम ’ इति किं गुणविधि उत नामधेयमिति सदेहे न्यायाभासावादित-गुणविधिनिराकरणक्षमसन्न्यायानुसारेण वृत्ता नामधेयाध्यवसानेन व्यक्तिनिर्धारणं यावन्न क्रियते तावत्समीचीनवाक्यार्थबोधो नास्तीत्यनेन मार्गेण न्यायापेक्ष शास्त्रम्। अत एव इतिकर्त यताभूता वेदस्य स्वार्थमवबोधयतो मीमांसा। तथा चाहु – ‘ धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त यताभाग मीमांसा पूरयिष्यति ॥’ इति। किंपुन पदजातमेक शास्त्रम्। न च शक्य वक्तु यावता पदजातमेकार्थवत् तावदेक शास्त्रम्। अर्थभेदे तु शास्त्रभेदो मन्त्रवत्। यथा मन्त्रेषु यावता पदजातेनैकोऽर्थः प्रतीयते तावदेक वाक्यमित्यवगम्यते तथा शास्त्रमपीति। युक्त मन्त्रेषु प्रमाणान्तरप्रमितार्थेषु। तत्र हि तत्तदन्यथात्व पाऽर्थस्यावधारयितु शक्यते। शास्त्र तु प्रमाणान्तराऽप्रतीतार्थावबोधक तदर्थस्य तत्तदन्यथात्व वा शक्यते नाप्यतोऽवगन्तुम्। उच्यते। शब्दाना मर्थावच्छेदेनैव सर्वत्रैकत्वोपपत्ते। पदताऽपि वर्णाना मर्थावच्छेदेनैव। स स्वर्थोऽवच्छेदक शास्त्रस्य शास्त्रादेवावगम्यते। क पुनरसौ ? विषय। शास्त्र च। क पुनर्विषयो नाम ? उच्यते। कार्यमेव हि निष्पाद्यं, कार्यं च कृतिसाध्यम्। कृतिश्च प्रयत्न। स च सर्व एव भावार्थसबन्ध। तेन कार्ये प्रतीयमानं कृतिविशिष्ट प्रतीयते। नान्यथा। कृतिरपि भावार्थेन विशिष्यते। तेन भावार्थ कृतिं विशिषन् कार्य विशिनष्टीति विषय उच्यते। यो हि येन विशिष्यते स तस्य विषय। अतश्च यावति पदसघ एको विषयस्तावत्येको नियोगार्थ, तदेकत्वाच्चैक शास्त्रम्। तत्र नियोगाभेदस्यापि विषयाभेदोऽनपत्वाद् विषयाभेदादेव शास्त्रमेक व्यवस्थाप्यते तद्भेदाच्च भिन्नम्। पञ्चधा च विषयभेदोऽवसीयते। तत्र यजति जुहोति ददातीत्यभिधानभेदाद्यागादीना भेदोऽवगम्यते। देवतोद्देशेन द्रव्यत्यागो याग। का पुनर्देवता ? कश्चोद्देश·? कश्च त्याग ? उच्यते। स्तोत्र शस्त्र यद्गुणवचन यदुद्देशेन च हविषा त्यागश्चोद्यते सा देवता। तत्रैव याज्ञिकवृद्धाना देवताशब्दप्रयोगात्। यत्र ह्याग्नेयादिदेवतार्थानुष्ठाने प्रवृत्तोऽग्निमुद्दिश्य हविस्त्यजति तत्रैवमाहुरियन्त देवतेति। उद्देशश्च चतुर्थ्यन्ततद्वाचकशब्दप्रयोग। त्यागश्च सकल्पित स्वे औदासीन्यसकल्प। स चानभिसहितपरस्वत्वापत्तिफलको याग·। देवनिवेशनमात्र पक्षे नोपाधिकश्च स एव होम। अभिसहितपरस्वत्वापत्तिफल च दानमिति। अभिधानभेदान्नजन्यायानुबन्धभेदावगम। तथा विध्युच्चारणात् असत्यप्यभिधानभेदे भावार्थभेदोऽवगम्यते। अप्रतिकृष्टार्थावबोधनस्वरस हि सर्वमेव विध्याम्नानम्। तदर्थबोधेन एवमवसीयते नून भिन्ना इमे धात्वर्था इति। तद्भेदे विषयभेदाद्विषयिणो भेदोपपत्तेरसंनिकृष्टावबोधस्वभावता विध्याम्नानस्य निर्वहति। नन्वेव तर्हि पुरुष स्वेच्छया पुनर्विधिमामनति तदापि तर्हि विषयभेद· स्यात्। न। स्वतन्त्रत्वादुच्चारणस्य। यद्धि न पूर्वोच्चारणदर्शनपूर्वकमुच्चारण तदपौरुषेय स्वातन्त्र्येण परिच्छेदकम्। यत्पुनर स्वतन्त्र तत्पौरुषेय प्रमाणान्तरोपात्तार्थावबोधकम्। न च तत्र भेदे प्रमाणमस्तीति न भेदो विषयस्य। शाखान्तर्गतस्तर्हि विध्याम्नानाभ्यासो भेदक स्यात्। नेत्युच्यते। अभ्यासाभावात्। यत्र ह्येक एव वक्ता पुन पुनस्तमेव अर्थमुच्चारयति तत्राभ्यासो व्यपदिश्यते। शाखान्तरगत विधिं पुरुषान्तर पठतीति नाभ्यास शक्यते वक्तुम्।

एवमपि पुरुषान्तराम्नानमेव कस्माद्भिन्नमर्थं न प्रतिपादयति । उच्यते । एकार्थप्रतिपादकत्वेऽपि तदाम्नानस्यासन्निकृष्टार्थस्योपपत्तेः । तस्य हि पुरुषस्य सोऽप्यर्थोऽसन्निकृष्ट एव यद्यपि पुरुषान्तरेण प्रतीतः । एकत्वं तु कथम् । विषयैक्यात् । तदेकस्य चाभिधानैक्यात् । तथा वाक्यमपि तदैक्येन । यद्येवं तर्हि 'य एवं विद्वान् पौर्णमासीं यजते' इत्यत्रापि तद्भेदः स्यात् । न । अभ्यासरूपस्य भेदस्यानिर्वाहात् । रूपभेदेन हि भेदो निर्वहति यागस्य हि द्रव्यदेवते रूपम् । ताभ्यां हि स रूप्यते । नते हि ताभ्यां स भवतीति । यत्रत्यन्त्र द्रव्यमनिहितमपि यत्किञ्चिदुपादाय क्रिया सिध्यति, यद्यपि चाग्नावनिरूपणमपि प्रोक्षमाण्यं द्रव्य गम्यते तथापि देवता नाभिहिता भवतीति विधानमन्तरेण तदलाभः । न च यजिरेव तद्व्यक्तस्यार्थमाचक्षाणो देवता विधातुमलम् । विशेषावगमे कारणाभावात् । नापि 'आग्नेयी अमावास्यायामनूच्येते' इति मन्त्रविधानात् मान्त्रवर्णिकदेवताश्रवणं सम्भवति । मन्त्रविधेरभावात् । आग्नेयभागयोरेव विधिद्वित्वानानुरोधादिति स्थितम् । तस्मादनुवादमन्तरेण रूपालाभादनुवादोऽयमिति नाभ्यासात् कर्मभेदः । नन्वेवं तर्हि प्रकृतकर्मरूपकथनानुवादः किमिति न स्यात् । ततश्चानूदितानां 'दर्शपूर्णमासाभ्यां यजेत' इत्यधिकारसम्बन्धात् राजसूयवत् सर्वयजीनां प्राधान्यं स्यादङ्गत्वमाघारादीनां न सिध्येत् । उच्यते । सर्वानुवादाश्रयणे दर्शपूर्णमासाभ्यामिति द्विवचनं नोपपद्यते । समुदायानुवादद्वयेन सर्वेषामेव दर्शशब्दवाच्यता पूर्णमासशब्दवाच्यता चापद्यते । ततश्च दर्शश्च पूर्णमासश्चेति कर्मधारयोऽयं समासः । तत्र यजीनां विशेष्याणां बहुत्वात् बहुवचनं स्यान्न द्विवचनम् । अतस्तदनुरोधेन केषाञ्चिदेव तावत् 'य एवं विद्वान् पौर्णमासीं यजते' इत्यनुवादो न सर्वेषाम् । तथा 'य एवं विद्वानमावास्यां यजते' इति केषाञ्चिदेवानुवादः । तेनानुवादद्वयेन समुदायद्वयापत्तेर्द्विवचनान्तोपपदर्शनेन तेषामेवाधिकारसम्बन्धः । तत्र केषां पूर्णमासीगुणोऽनुवादः केषां चामावास्यागुणः इत्यपेक्षायां कालनिमित्तोपपदानुसारेण उत्पत्तिवाक्यगतानामेवानुवादः इति निश्चयो जायते । अन्यथा विशेषाग्रहणादिति न सर्वानुवादो न सर्वेषां प्राधान्यमिति । तथा गुणान्तरयोगादप्यनुबन्धभेदोऽवगम्यते । उत्पत्तौ यत्कालानुबद्धं यत्कर्म प्रतीयते तद्योऽन्येन कालेन अनुबद्धं तत्र शक्यते अवगन्तुमित्यनुबन्धभेदावगमः । तथा पञ्चान्तरादपि अनुबन्धभेदोऽवगम्यते । अन्याय्य ह्येकस्यार्थस्यानेकशब्दत्वमिति भेदस्यायम् औत्सर्गिकः । यत्र तु बलीयसा प्रमाणेनानेकशब्दत्वमपि गम्यते भवति तत्रैक्यम् । तथा विधानान्तरादपि कर्मान्तरत्वावगमः । विधानान्तरे च सन्निहिते कर्मण्यनेकगुणसंयुक्तकर्मग्रहणात् । तत्र हि गुणविधित्वाश्रयणे सम्भवत्यनेकगुणश्रवणादनेकगुणविधाने वाक्यभेदप्रसङ्गात् । गुणविशिष्टकर्मविधौ तु तस्यैवैकस्य विधानात् एकवाक्यत्वनिर्वाहात् कर्मैव विधेयम् । विधीयते चेत्तत् प्रकृतादन्यत्वम् । तथाऽसन्निधानादप्यप्रत्यभिज्ञानात् कर्मविधानावगमात्कर्मभेदावगमः । प्रकरणान्तरमपि कर्मणः प्रक्रियान्तरं विधानान्तरमेव । सत्या तु भावार्थमात्रभेदे प्रभवति न विषयभेदे । यथा 'सप्तदश प्राजापत्यान्' इति प्राजापत्यप्रातिपदिकोपात्तानां द्रव्यदेवतासम्बन्धानां नियोगविषयत्वम् । ते च सकृदेवाभिहिताः सकृदेव सम्बध्यन्ते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिति न भेदेन विषयभावं भजन्ते । वाक्यभेदादपि शास्त्रभेदोऽवसीयते । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति च । नहि यावज्जीवचोदना कामाधिकारे कालविधानार्था । फलागमप्रसङ्गात् । यावज्जीवनलक्षितो हि कालो विधेयः । किंच जीवनकाल एव नियोगस्य प्रवृत्तत्वात् यावदर्थसम्बन्धेन विधेयत्वम् । तावांश्च कालो नानभ्यस्तेन प्रयोगेण शक्यते व्याप्तुमिति यजेतेत्यपि यागमभ्यस्येदिति वर्णयितव्यम् । ततश्चाभ्यासलक्षणाऽप्यपरेति जीवतोऽधिकारान्तरमेतदाश्रयणीयम् । जीवने ह्यधिकारिविशेषणे सति जीवतो अवश्य यागेन भवितव्यमिति सिद्धा यागेन जीवनव्याप्तिरभिधीयते यावज्जीवमिति । ततश्च नियोगभेदान्नियोगस्यापि भेदः अवश्यभावि । तद्भेदाच्च शास्त्रभेद एव । नियोज्यो हि स्वसंबन्धितया ममेदं कार्यमिति

सकेतश्च तद्वाक्यघटकपदानां तत्तदर्थे, लिङश्च प्रवर्तनात्वादिविशिष्टे बोध्य । मणि पृ ९१. ● शब्दभावनायाः भाव्य आर्थीभावना । विधायको लिङादि करणम् । अर्थवादसम्पादिता स्तुति इतिकर्तव्यता । सेयं शब्दभावना लिङादिभि गम्यते । मि. २।१।१ वर्णक १

● शब्दभावनेतिकर्तव्यतानिरूपणम् । सेयं द्वयी अपि (विधिप्रतिषेधरूपा) शब्दभावना प्राशस्त्याप्राशस्त्यज्ञानानुगृहीतैव स्वफलभूतां प्रवृत्तिं निवृत्तिं च जनयति इति तदितिकर्तव्यतात्वेन अपेक्षते, एतादृशे च अर्थवादे स्वाम्नानार्थवत्त्वाय लक्षितम् । तस्याश्च इतिकर्तव्यतापेक्षा तदन्वयश्च अर्थभावनावत् विध्यन्वयात् कर्तव्यत्वेन प्रतीतौ तत एव च भावकरणयो आकाङ्क्षापूर्वमन्वये स्यात् नान्यथा । न च शब्दभावना ज्योतिष्टोमादिप्रकृतिविकृतिविधिवाक्येषु स्वरूपतः तत्त्वेन कर्तव्यत्वेन प्रतीयते, किंतु अर्थभावनैव । अत अध्ययनविधौ सा विधीयमानत्वात् कर्तव्यत्वेन प्रतीयते । तदुक्तं वार्तिके 'सा तत्र भवतीति' इति । व्याख्यातं चाभियुक्तैः 'अध्ययनविधिवशात् कार्यत्वेन प्रतीयते' इति ।

ननु तत्रापि आख्यातप्रत्ययोक्तार्थभावनैव अध्ययनकरणिका विधीयते न तु अन्या, तस्या आख्यातवाच्यत्वाभावात्, लिङा च विधित्वानुक्ते । अत्रोच्यते । न तावत् ऋतुहोमवत् द्वितीयाभङ्गोऽत्र 'पुरोहितं वृणीते' इतिवत्तु द्वितीयाऽङ्गभूतप्रधानभाव स्वाध्याय प्रति गुणभूताध्ययनभावना अवगता । तत स्वार्थज्ञानानुपपत्त्या अयमेव विधि अर्थस्यानुसारेण स्वाध्याय समर्थिनि इष्टे विनियुज्य पर्यवस्यति इति तृतीये उक्तम् । तत्र विध्यर्थो तावत् पुरुषप्रवृत्तिरेव दृष्टम् । तत्र च शब्दानां करणत्वं वा कर्तृत्वं वा निरूप्यते इति वार्तिकात् लोके उभयविधत्वसम्भवेऽपि वेदे प्रवर्तयितृपुरुषाभावेन कर्तृव्यापारव्याप्यत्वनियामकत्वाभावात् स्वाध्यायः कर्तृत्वेनैव स्वाध्यायो विनियुज्यते । अन्तरङ्गं च कर्तृकारकक्रियया । अत एव आख्याताभिहिता संख्या अनभिहितेऽपि कर्तर्येव अन्वेति इत्युक्तं क्त्वाधिकरणे । एवं कर्तृतया स्वाध्याये विनियुक्ते अर्थवादे गुणत्वात् विधायकस्य च प्राधान्यात् प्रातिपदिकवाक्यस्था लिङ् कर्तृत्वेन विनियुज्यते, अध्ययनेन उपात्ता लिङ् भावयेयुरिति । तत 'किं' इत्यपेक्षिते सामर्थ्यादेव पुरुषप्रवृत्तिं इति भावयेयु इतियत् अध्याहृत्य संबध्यते । श्रुतार्थापत्तिमूलकश्चाय अध्याहारः 'इषे त्वा छिनद्मि' इत्यादिवत् । तदुक्तं अर्थवादाधिकरणवार्तिके 'तत्र किमित्यपेक्षिते सामर्थ्यादेव पुरुषप्रवर्तनं इति गम्यते' इति । तेन इदं श्रुतानुमितैकदेशनिष्पन्नं महावाक्यं भवति 'अध्ययनसंस्कृता स्वाध्यायपदोपात्ता लिङ् पुरुषप्रवृत्तिं भावयेयु' इति । अयमेव च वाक्यार्थ पारमार्थिकः, अन्यथा शब्दभावनायाः कार्यत्वानवगमात् तदितिकर्तव्यताभूतप्राशस्त्यलक्षणया अर्थवादप्रामाण्यं न सिध्येत् ।

ननु अर्थवादाधिकरणे एव आद्यसूत्रे च आचार्यैः 'कर्मसु अर्थज्ञानस्य लैङ्गिकविनियोगात् तदर्थं अध्ययनविधिं अधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेत् इति' इत्युक्तम् । तद्विवक्षया कर्तृत्वेऽपि प्रवृत्तिफलत्वोक्तिश्च । सत्यमुक्तम् । न तु विरोधः । शब्दभावनाया हि लिङादीनां कर्तृत्वे सति अर्थात् फलवदर्थावबोधे करणत्वं फलितं भवति इति प्रवृत्तिकर्तृत्वमेव अर्थावबोधकरणत्वेन फलितं व्याख्यातं इत्यविरोधः । प्रवृत्तिफलत्वं तु फलवदर्थावबोधद्वारा इति न भाष्यद्वयविरोधः । लिङो हि प्रवृत्तिरूपस्य वाक्यार्थस्य इष्टसाधनतया बोधं कृत्वा प्रवृत्तिं जनयन्ति नान्यथेति ।

ननु एवमपि चेतनप्रवर्तनात्मा विधिः कथं अचेतनान् लिङ नियुञ्जीत इति चेत्, सत्यम् । उपायासत्त्वेऽपि उपेयसत्यत्वात् । यथा वर्णलोपागमविकाराद्यसत्यत्वेऽपि तेन सत्यमेव साधुत्वं ज्ञाप्यते शिष्टपरिगृहीतव्याकरणप्रामाण्यात् । एवमिहापि अध्येता तावत् 'लिङ् मां प्रवर्तयति' इति लिङ्व्यापारभूतशब्दभावनाकर्म यदा बुध्यते तद्गतचैतन्यस्य लिङि आरोपात् नियोज्यत्वमसत्यमेव । तेन उपायेन शब्दभावनाकर्तव्यत्वं सत्यं ज्ञाप्यते अर्थवादप्रामाण्यात् । तस्या हि अकर्तव्यत्वे तदितिकर्तव्यताभूतप्राशस्त्यानपेक्षणात् तदन्वयाभावाद् अर्थवादप्रामाण्यं न स्यादिति । एवं कर्तव्यत्वेन अवगताया

पद शमितृविषयकमेव सम्पन्नं भवति । 'नाब्राह्मण शामित्रं प्राश्नीयात्' इति शामित्रविकारपशुभक्षणस्य अब्राह्मणशमितृविषये प्रतिषिद्धतया अब्राह्मण शमिता कर्मेदानं स्व भाग न भक्षयेत् किंतु ब्राह्मणाय दद्यात् इत्यर्थस्य स्वरसत प्रतीते (अयमस्त्रभिन्नस्य । के )। अब्राह्मणशब्दस्य समानवाक्यस्थान्यरहितप्रथमान्तत्वाच्छ शेषास्वशमितृपरत्वे सम्भवति व्यवहितपूर्ववाक्योपात्त-यजमानपरताया अनुचितत्वाच्च ।

अधिकरण तु विशसितृपर नेयम् । शमिता हि द्वेधा संज्ञपयिता विशसिता च । तत्र संज्ञपने श्रूयमाण शमिता ऋत्विग्भ्य अन्य एव चातुर्वर्ण्यान्तर्गत कश्चित् । विशसन तु समाख्यायशात् आध्वर्यवम् । अत एव पशुपर्वप्रकरणे 'शमित्र चैव विप्राणा' इति आदित्य पुराणवचनमुपपद्यते । ततश्च पूर्वयुगेषु चतुर्णा वर्णाना अ पतम शमिता । कलौ तु शूद्र एव शमिता । कु १।७।१३।२९

ॐ शमिता एव एव ॥

चमसाध्वर्यूणामिव पृथग्वरणाभावात् शमितृपदेन यौगिकवृत्त्या पुनर्भूतसाधारणो य कश्चिदभिधीयत इति गिरा तृतीय । त च नामितारो बहव भवा । 'शमितारो नयन्ति' इति विधौ 'शमितार उपेतन' इत्यादिमन्त्रेऽपि बहुवचनदर्शनात् । इति प्राप्ते, शमितृत्व चैकस्य अन्येषामपि पशुना सह शमितृदेश गमनदर्शनात् शमितृसाहित्यमात्रेण सर्वेषां शमितार इति निर्देश । विनिक्ष्योद्गातार इत्युद्गातृसाहित्येन प्रयोगदर्शनात् । सकर्ष १।१।१२

ॐ शमिता च शब्दभेदात् । ३।७।१३।२८ ॥

ज्योतिष्टोमे अग्नीषोमीयादिपशुयागे 'शमितारमुप नयति' इति शमिता उक्त । शमन पशुमारणस्य तेजस नाशन पशुमारण इत्यर्थ । शमनकर्ता च शमिता । स किं पूर्वोक्तस्य षोडशस्य ऋत्विग्गणस्य, दशस्याश्च चमसाध्वर्युभ्यो भिन्न एव तदन्त एव वा कश्चित् इति विचारे पूर्वपक्षसूत्रमिदम् । च-शब्द भिन्नत्वस्य साम्यस्य व्यपदेशादन्य ऐरस्त्वस्य च अनुकर्षणार्थ । शमिता च भिन्न स्यात्, शब्दभेदात् । अध्वर्युहोत्रादिशब्देभ्य भिन्न एवाय भिन्नार्थकश्च शमिता इति शब्द । किंच 'क्रोमा च अर्धं वैकर्तन च शमितु, तद् ब्राह्मणाय दद्यात् यदि अब्राह्मण स्यात्' इति शमितु अब्राह्मणत्व व्यपदिष्टम् । व्यपदेशात् व्यपदेशाच्च शमिता भिन्न एव । वैकर्तन पार्श्वस्थ मेदो मासखण्ड ।

प्रकरणाद् वोत्पत्त्यसंयोगात् । २९ ॥

अग्नीषोमीयादिपशौ शमिता नाम ऋत्विग्भ्य चमसाध्वर्युभ्यश्च भिन्न एवेति पूर्वसूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तयति सूत्रम् । वा-शब्द पूर्वपक्षव्यावृत्त्यर्थ । शमिता ऋत्विग्भ्यो नान्य । कुत ? उत्पत्त्यसंयोगात् । उत्पत्ति वाक्ये (वरणवाक्ये) शमितु संयोगस्य सम्बन्धस्य अभावात् । उत्पत्तिवाक्ये शमितु अनुक्ते इत्यर्थ । यत्तु पूर्वपक्षे 'क्रोमा च अर्धं वैकर्तन च शमितु, तद् ब्राह्मणाय दद्यात् यदि अब्राह्मण स्यात्' इति शमितु अब्राह्मणत्वव्यपदेश उक्त तथापि अनुत्पत्त्यसंयोगात् इत्येवोत्तरम् । अत्र उत्पत्तिशब्द कर्मण्युत्पत्तौ भाव्य । उत्पत्ति 'क्रोमा च' इत्यादिवाक्य उत्पत्ति इत्यर्थ । तया उत्पत्त्या तु शमन शमिता तद्वाक्यस्थस्य अब्राह्मणशब्दस्य संयोगाभावात् । अब्राह्मणशब्द न शमितार व्यपदिशति । कथ उत्पत्त्यसंयोग इति चेत् तत्राह प्रकरणात् इति । अध्वर्यो प्रकरणात् अध्वर्युणा तद्गुणो वा प्रतिप्रस्थाताऽपि कश्चित् शमिता इति हनु शक्यत्वात् उत्पत्त्य संयोग । एव प्रकरणात् उत्पत्त्यसंयोग । उत्पत्त्यसंयोगाच्च शमिता न अब्राह्मण । ततश्च ऋत्विक्ष्वेव कश्चित् शमिता इति सिद्धान्त ।

प्रकरण प्रक्रिया प्रकृतिप्रत्ययव्युत्पादनम्, शमयति पशु संज्ञपयति इति शमिता इति । ततोऽपि ऋत्विगेव कश्चित् । ननु 'स ब्राह्मणाय दद्यात् । यदि अब्राह्मण स्यात्' इति शमितु अब्राह्मणत्वोक्ते कथ शमिता ऋत्विक्षु संभवति इति चेत् तत्राह प्रकरणात् इति । अब्राह्मणपद न शमितृपर किंतु यजमानपरम्, दद्यात् इति यजमानस्य प्रकरणात् प्रकृतत्वात् । यदि यजमान अब्राह्मण क्षत्रियो वा वैश्यो वा स्यात् तदा शमितु पशुभाग ब्राह्मणाय यजमानो दद्यात् इत्यर्थ । तथा च ऋत्विगेव कश्चित् शमिता । के

● 'शमिता च शब्दभेदात्' ( ३।७।१३।२८ ) इत्यधिकरणे वार्तिककृतोक्तम्– अत एव आर्त्विज्यं निन्दन्ति– इति । तथापि विशेषनिषेधो दोषनिरोधार्थत्वेन अर्थवानेवेति । बाल. पृ. ५७. ● शमिता द्वेधा, संज्ञपयिता विशसिता चेति । तत्र संज्ञपयिता ऋत्विग्भ्योऽन्यः । विशसिता तु अध्वर्युगणान्तर्गतः कश्चित् । कु. ३।७।१३।२९. ● शमिता ऋतावृत्विग्बाह्यः. य. कश्चित् इति स्थित तृतीये । संकर्ष. १।१।१२. ● शमिता । शमयति इति शमिता । यौगिक एव शब्दः । भा. ३।७।१३।२९. ● शमितारः नापूर्वाः किंतु प्रतिप्रस्थात्रादय एव शमितारः । संज्ञाभेदस्तु पशुसंज्ञपनयोगात् । वि. ३।७।१३. ● शमित्रा सह शामित्रशालायां गन्तार. इतरे ऋत्विज एवेति केचित् न ह तद्विधा ये केचित् । संकर्ष. १।१।१३.

● शमीधान्यभक्षणस्य न निषेध., आग्रयणाऽकरणेऽपि । संकर्ष. ३।१।१२. मीको. पृ. ८०६ 'आग्रयणाकरणेऽपि मुद्गादिशमीधान्याना०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● शमीमय्यः हिरण्मय्यो वा स्रुच. समाख्याः फलगप्रधासेषु सिद्धान्ते । पूर्वपक्षे तु नानावृक्षस्रुच उत्पादयितव्याः पर्णमयीत्वेन । भा. २।१।४।१२.

● शम्या यथायुधम् । 'यथायुधानि समरन्ति' 'नाम्यथा इयद्युगदधानि' । वि. ३।१।०.

● शयानत्वं परिधिधर्मः । वि. १२।२।११.

● शराः बर्हिःशब्दलक्षिते तत्कार्ये विहिताः तत्कार्यभूयस्त्वेन प्राप्यमाण बर्हिः बाधन्ते । 'शरमयं बर्हिर्भवति' । भाट्ट. १०।४।१. ● शरैरपि कुशाः प्राप्ता एव बाध्यन्ते इत्युक्तं बलाबलाधिकरणे ( ३।३।७ ) । धा ३।६।१।८. ● शरै. कुशानां अगत्या बाधः । सु पृ. ८८३.

● शरादिषु । मुख्यक्रमस्य औपदेशिकप्रयोगविप्रकृष्टत्वेन औपदेशिकत्वात् तस्यापि अतिदेशोत्तरकालकल्प्ये शरादिषु बाधोत्पत्तेः मुख्यक्रमस्य कल्प्यत्व इति चेत । प्रयोगविधे. औपदेशिकत्वेऽपि मुख्यक्रमस्य कल्प्यत्वात् शरन्यायानुपपत्तेः । भाट्ट. ५।१।१०

● शरेषीका शरस्य दर्भविशेषस्य इषीका पुष्पगुच्छादधोभागे वर्तमानः काण्डः शरेषीका । तया अञ्जन कुर्वन्ति । के.

⸎ शरन्यायः । शरकुशन्यायः । सौमारौद्रयागे उपदिष्टैः शरैः आतिदेशिकाना कुशाना बाधः ॥

प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् । १०।४।१।१ वर्णकं २ ॥

भाष्यम्— एव वा । इदमाम्नायते 'सौमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्' इति । तत्रेदं श्रूयते 'शरमयं बर्हिर्भवति' इति । तत्र संशयः किं कौशं निवर्तते, नेति । किं प्राप्तम् ? उभयस्य प्रमाणावगतत्वात् समुच्चय. ।

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् । २ ॥

भाष्यम्— एवं प्राप्ते, ब्रूम. । चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेतेति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोगः । तस्मात् प्राकृतस्य निवृत्तिरिति । ( विस्तरादिसर्वग्रन्थेषु अनेन द्वितीयेन सूत्रेण द्वितीयमधिकरणमेव स्वीकृतम् । भाष्यीयं तृतीयं वर्णकं तु द्वितीयाधिकरणीय द्वितीय वर्णक इति स्वीकृतम् ) ।

शा— उभयो कुशशरयोः प्रमाणावगतत्वात् समुच्चयः, प्रकृतकार्यत्वाच्च निवृत्तिः ( कुशानाम् ) इति ।

सोम –– पूर्वाधिकरणोक्त–शरवैफल्यसाधनार्थत्वात् संगतिः । 'नित्यं वृद्धशरादिभ्यः' ( पा. ४।३।१४४ ) इति विकारार्थे शरशब्दात् मयटः प्रतिपदोक्तत्वेन प्राप्त्यभावात् विकारार्थ एवायं मयट् । ततश्च बर्हिषो द्रव्यस्य कुशविकारत्वासंभवात् तेन तत्कार्ये लक्षणं कल्पयित्वा तत्र विधानात् प्रत्यक्षवचनेन कार्यापत्त्या युक्तो बाधः ( शरैः कुशानाम् ) ।

वि–– 'समुच्चेयं शरमयं कौशेनोतास्य बाधकम् ।, प्रत्युर्ध्वं निवेशाद्धो, मैवं प्रतिपदोदितः ॥' २.

भाट्ट–– 'सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इति विहितेष्टौ 'शरमयं बर्हिः' इति

श्रुताः शरास्तु प्राकृतबर्हिर्बाधका एव । न च पाषाणमयी भूमिरितिवत् मयद्य बहुशरसंयोगमात्रविधानात् कुशबाधानापत्तिः, अदृष्टार्थत्वप्रसङ्गेन शराणामेव बर्हिःकार्योद्देशेन विधानात् । न च तथापि बर्हिःकार्यस्य स्तरणस्य शरविकारताऽनुपपत्तेः विकारार्थमयडनुशासनानुपपत्तिः । वस्तुतः संस्कारविशिष्टस्य द्रव्यस्य प्रकृतौ कुशप्रकृतिकस्य विकृतौ शरप्रकृतिकत्वेन 'खादिरो यूपो भवति' इतिवत् विकारार्थमयडनुशासनोपपत्तेः । शास्त्रदीपे तु अथान्ये बर्हिःशब्दे स्तरणादितत्कार्यलक्षणया तदुद्देशेन शरमात्रविधानात् युक्त एव कुशबाधः । न च तथापि चोदकेन कार्यस्य स्वजनकपदार्थविशिष्टस्यैव पूर्वं प्राप्ततया पश्चाद्वैपरीत्येन अन्यतराकाङ्क्षया अन्वीयमानानां शराणां कुशाविरोधेनैव अन्वयात् कुशाभावे प्रतिनिधित्वेनैव अन्वयोपपत्तेर्न कुशानां बाध इति वाच्यम् । आकाङ्क्षाक्रमेण कार्योपस्थित्यनन्तरं तज्जनकपदार्थापेक्षायामेव शरविधिप्रवृत्त्यङ्गीकारात् शरैरेव तदाकाङ्क्षाशान्तौ तत्कार्ये कुशवैशिष्ट्याभावेनैव कुशानामतिदेशेन वस्तुतः प्राप्त्यभावात् । अत एव लौकिकी प्रतिमादावेऽपि प्राप्तबाधः । शराणां च विकृत्याकाङ्क्षायामनिवृत्तायामेव ग्रहणम् । अस्तु वा कार्याणामेव प्रथममतिदेशेन अनन्तरापेक्षया पदार्थानां पृथगतिदेशः, तत्रापि अतिदेशप्रापितकार्योद्देशेन शरविधेर्न कुशादेः अतिदेशकल्पनेति । निरूपितरूपाणामेव च पदार्थानां पृथगतिदेशात् सोऽपि बाधानुपपत्तिः । अतस्तस्य युक्तो बाध, इति प्रत्युदाहरणमात्रमिदम् । २.

मण्डन--- 'कुशानां बाधकाः शराः ।' २.

शंकर--- 'बाध्यास्तिवत् शरैः कुशाः ।' २.

● शरन्यायः नक्षत्रेष्टौ उपदिष्टैः उपहोमैः नारिष्ठहोमानां अतिदिष्टानां शरवत् बाधः । इति प्राप्ते, अतिदेशेन कार्यप्रत्यभावेन नारिष्ठानामपि प्राप्त्युपपत्तौ शरन्यायवैलक्षण्येन समानस्थानत्वमात्रस्य अप्रयोजकत्वात् । शराः हि बर्हिः-शब्दलक्षिते तत्कार्ये विहिताः युक्तं यत् तत्कार्यप्रत्यभावेन प्राप्यमाणं बर्हिर्बाधन्ते इति । भाट्ट. १०।४।१.

● प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात् शरन्यायानुपपत्तिः । भाट्ट ५।१।१०.

● शरपुरुषीय इति न्यायः । काकतालीयवदय मिति । यथा– शरश्च क्षिप्तः प्राकाराच्च पुरुष उदितः. स तेन हतस्तत्तुल्यं शरपुरुषीयमिति । साहस्री. ६७९.

● 'शरमयं बर्हिः' इति शराः कुशान् निवर्तयन्ति श्येने । भा. १०।४।१।१, ● 'शरमयं बर्हिर्भवति' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन । १२।३।२।८ ● शरमयं बर्हिरिति वचनम् । यत्र पाश्चात्त्यमपि प्रमाणं बलवत् भवति यथा 'शरमयं बर्हिः' इति वचनम्, न तत्र दौर्बल्यम् । कल्प्यत्वे पर दौर्बल्यम् । रत्न. ५।१।१०।१८.

● शरवत् । यथा 'शरमयं बर्हिः' इति वचनप्रामाण्यात् शरैः कुशा बाध्यन्ते । भा. १०।७।३।११, १०।७।१६।१९. ● शरवत् । 'शरमयं बर्हिः' इति वचनस्य शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्तते । अध्वरकल्पायां तु प्रयोगवचनाश्रयः क्रमः कल्प्यः । तस्मात् आतिदेशिकः क्रम एवेति बार्हस्पत्यचरुनिर्वापः पूर्वं ततः सारस्वतापयस्या । भा. ५।१।१०।१७–१८ । बर्हिःकार्ये शरविधानार्थं तत्कार्यप्राप्तये चोदकस्य उपजीव्यत्वेऽपि कुशप्राप्तेरनपेक्षत्वात् चोदकप्राप्तकुशबाध । सोम.

● शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते 'शरवणमेवेदं कुशवनम्' इति । भा. ८।३।६।१३, स तत्र शरशब्दो भाक्तः प्रयुज्यते । दीर्घत्वात् पृथुपत्रत्वात् सादृश्यवादोऽसौ– 'शरवणमेवेदं कुशवनम्' इति । स्वार्थे वर्तमानः सादृश्यं गमयति, स्वार्थं त्यजत् कथं गमयेत् । तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेषु । ८।३।६।१४.

● 'शरदि वैश्यः' अग्निमादधीत । भा. ११।१।२।२, ● 'शरदि वैश्यम्' उपनयीत । ६।१।७।३३.

● शरावः । 'चतुःशरावमोदनं निर्वपेत्' इत्यादौ शरावादिशब्दस्य तत्परिमिते प्रयोगदर्शनम् । सु. पृ. ९२६.

● शरीरं आतिवाहिकं नाम पूर्वोत्तरदेहयोरन्तराले ज्ञानसंतानसंधारणार्थं कल्प्यते, तदपि विन्ध्यवासिना निराकृतम् । 'अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना । तदस्तित्वे प्रमाणं हि न किंचिदवगम्यते ॥'

श्लोका आत्मवादे ६२ ● शरीरं चतुर्विधं जरायुज अण्डज उद्भिज्ज स्वेदज चेति । मणि. पृ. ८६

● शरीरग्रहणस्य ॥ नादृष्टादृते किंचित् कारणमस्ति । तस्मात् विशिष्टेन्द्रियशरीरादि फल पशुसम्बन्धसमर्थं पशुफलात् कर्मणो भवतीत्येव बोद्धव्यम् । भा ४।३।११।२७ वर्णक २.

● शरीरसन्निवेश सामुद्रिकविषय । सु पृ १३०

● शर्करा ( अग्निचयने ) घृतेनाक्तया न तैलादिना । नि ११८।१९.

⧗ शर्करोन्मज्जनीयन्यायः । यथा– शर्करा च क्षिप्ता पुरुषस्यो मज्जनम् , तत्तुल्य शर्करोन्मज्जनीयमिति । साहस्री ६८०

● शलाशब्दस्य अभिगुमेपगतस्य कात्स्न्येंनोद्दरणस्य प्रकाशकत्वम् । ३।८।०।२०–२७ मीको पृ ३४१ ' अभिगुनेपगता श्येनशलादिशब्दा ० ' इत्यत्र अधिकरण द्रष्टव्यम् ।

⧗ शल्यकनाखुन्याय । अय शान्तिपर्वणि अ० ८८ श्लो० ६ टीकायाम् । ' यथा शल्यकता नाखु पद धूनयते सदा । अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥ ' इति । शल्यकर्त्तीक्ष्णतुण्ड आखु विशेष । स हि निद्रितस्य मनुष्यस्य पादतलस्थ मांसमतीक्ष्णनैवोपायेन भक्षयति । खादनस्तु ईषद्वेदनया पद किंचिद्धूनयते कम्पयते, न तु तीव्रवेदनया मनुष्यन् आखु निवारयति । तद्वत् राष्ट्रं समापिबेदित्युक्तम् । साहस्री . ७६२ .

⧗ शरोद्वर्तनन्याय । यत्र क्रिया निष्फला, तत्र अस्य न्यायस्य प्रवृत्ति । साहस्री २९९ .

● शवशिरसो स्पर्शन स्मृतिनिषिद्धम् । भा. ६।६।१।२.

● शवति: गतिकर्मा कम्बोजेष्वेव दृष्ट., विकारमस्य आर्या प्रयुञ्जते शव इति मुनत्रयाभिधानात् इत्यादि । तदय एव हि प्रकृतौ नामशब्दाश्च प्रतिदेशमर्थभेदेषु व्यवस्थिता दृश्यन्ते । तस्मात् सर्वत्र इय अभिधाने निवर्णिते स्यात् । वा. ३।३।८।८ पृ. २१७ । अत्र निरुक्तम्– ' अथापि प्रकृतय एव एकेषु भाष्यन्ते विकृतय एकेषु, शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते . विकारमस्य आर्येषु भाषन्ते शव इति । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु । ' २।२ । कम्बोजेषु म्लेच्छेषु इति दुर्गाचार्य ।

अत्र पातञ्जलं महाभाष्य पस्पशायाम्– ' शवति गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकारे एनमार्या भाषन्ते शव इति । हम्मति सुराष्ट्रेषु, रहति प्राच्यमध्येषु ( गतिकर्मा इत्यनुषङ्ग । प्रदीप. ), गमिमेव तु आर्या प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ' इति ।

● शशविषाणं नास्ति इति कथमुच्यते ? पूर्वं षेत्राभावेऽवगते नास्तिशब्दोऽनुवादक इति केचित् । अथवा सामान्येन प्रागभावादिषु नास्तिशब्द प्रवर्तमान शशविषाणशब्देन विशेष्यते, न शशविषाणम्, अ यभिचारात् तेनेत्यदोष । अथवा येन अवयवार्थौ गृहीतौ समासाद्य राजपुरुषादिवत् सामान्यतो दृष्टेन पदद्वयर्थस्मति प्रसक्ता, न च कदाचित् शश शृङ्गरहितत्वेन अवधारितपूर्व तस्य एतत्संसर्गानुसधान वार्यते । अथवा विनैव समासेन शश अधिकरणत्वेन निर्दिश्य विषाण च शशादिगत विनैव अध्यारोपेण अनयो सम्बन्धो नास्तीति कथिते तेनैव अनुभूतसम्बन्ध शश विषाणशब्द तमेवाभाव गमयिष्यति । अथवा शश मूर्धवर्तिना पृथिव्यवयवाना उपर्युपरि चीयमानानां दृढ दीर्घसंनिवेशरूपेण परिणताना नीचैर्वृत्ताकारेण यत् अवस्थान सोऽस्य वाक्यस्य अभ्यासमन्तरेण उक्तविषय समर्थनि इत्यविरोध । तथा च आह– ' या निषेधा क्रियामात्रे यात्रीत्यवमादय । निवृत्तीत्यादिभि मेव वस्तुरूपा प्रतीयते ॥ ' तेन स्वरूपमुख्यार्थाना शशविषाणादीना अयथापि प्रसिद्धत्वम्यवस्थापित्नि अर्थे सिद्धो गौणप्रयोग । वा १।४।१४।२३–१ पृ २५९–२६०

⧗ शशविषाणन्याय. । अयमपि अत्यन्ताभाव विषयासामग्र्यनाति । तस्मात् ईश्वरे हि शशविषाणवत्

प्रवादः, एव चैत्यकरण-वन्दनशूद्रप्रव्राजनस्नानादीना धैराद. समशति । मूलान्तरकल्पन च शाक्येन प्रत्या-ख्यातम् । 'लोभादिकारणं चात्र बहुनैगान्यत् प्रती-यते । यस्मिन् सन्निहिते दृष्टे नास्ति मूलान्तरा नुमा ॥ शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेश नाम् । हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥ न च वैदिकमूलत्वमुच्यते गौतमादिवत् । हेतु पश्चाभिधीयन्ते ये धर्मे दूरतः स्थिताः ॥ एत एव च ते, येषां वाङ्मात्रेणापि नार्चनम् । पाखण्डिनो विकर्मस्था हैतुकाश्चैव एव हि ( मनुनोक्ता ) ॥' एतदीया ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः । 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः ॥' इति । तस्माद्धर्मं प्रति शाक्यादि एतजातीयकं प्रामाण्येन अनपेक्ष्यं स्यात् इति सिद्धम् । वा. १।३।४ पृ. १९४-१९६.

शा— यान्येतानि त्रयीविद्भिर्न गृहीतानि शाक्या-दिभि ( आदिशब्देन वार्तिकोक्तपाशुपतपाञ्चरात्रादि-ग्रहः -मीम. ) निर्मितानि धर्मशास्त्राभासानि, तेषा-मनेन अप्रामाण्य पूर्वोक्तमूलोक्तकर्तृसामान्यप्युदाहरण त्वेन उच्यते । तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्य प्रत्यक्षपूर्वे निराकृतम् । मन्वादिवत् वेदमूलत्वेन प्रामाण्य इह निराक्रियते । तेषां हि अमन्यपि प्रसिद्धवैदिके-ष्टिहोमादिभि कर्तृसामान्ये भिन्नग्रन्थाना वेदा मूल भविष्यन्ति । यथैव आथर्वणस्य त्रयीभिन्नग्रन्थानन्यता, तथा चतुर्भ्योऽपि वेदेभ्य भिन्नरूपा वेदा सन्त्वेव । ते च इदानीं प्रलीना. । मन्वादीनामपि हि केचित् प्रलीनशाखामूलत्वम् अनुमन्यन्ते, तद्वदत्रापि भविष्यति । इथ न समर्थित प्रामाण्ये नाप्रामाण्य युक्त इति मतमि केचित् आशङ्क । सा च मन्दविप्रलापेन निरा करणीयैव इत्येतमर्थं इदमधिकरणम् । सिद्धान्तस्तु- अविच्छिन्नवैदिकप्रसिद्धानुवृत्ता मन्वा( ? न्वा) दिषु भानुस्मरणानाम्नि वेद कल्पित । शाक्यादिषु इतरत विपरीत श्रौतविप्रलापात्त च तत् इयेव विज्ञाना स्मरणम् । वेदविरुद्धेषि एव तेषां प्रामाण्य मनुमन्यन्ते । दृष्टानुसारिणी च कल्पना, न तद्वैपरीत्येन । अतोऽत्र वेदकल्पना दवीयसी इति अप्रामाण्यमेव तेषां असन्मूलत्वादिति । १।३।३ पृ. २७.

भाट्ट— शाक्यादीनामपि क्षत्रियत्वप्रसिद्धे वेद-दर्शनसंभवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वं तन्मूल भूतवेदश्च इदानीं प्रलीनः । इति प्राप्ते, शिष्टैव शिष्टाना धर्मत्वेन परिग्रहस्य पूर्वाधिकरणोक्तस्य हेतो अभावात्, प्रत्युत अप्रमाणत्वेनैव तेषां स्मरणात् वेदप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकारात् वेदमूल-त्वकल्पनाऽनुपपत्ते अप्रामाण्यम् । १।३।२.

शंकर— 'शाक्यादेश्चाथ वर्णकम् ।' ( वार्तिके रचित खण्डनपरम् ) ।

* शाक्यादिशास्त्रखण्डनम् । कल्पसूत्राधिकरणस्य द्वितीय वर्णकम् । 'शाक्यादिनिर्मिते धर्मशास्त्रा-भासे निराकृते । धर्मप्रयोगशास्त्रत्वं तस्य वेद-मिहोच्यते ॥ येनैवाप्तत्वकल्प हि वेदस्य प्रति-पाद्यते । न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥ बोधकत्वात् प्रमाणत्वं स्वतस्तस्यापि लभ्यते । न च संदिहाने बुद्धिर्न विपर्ययते क्व-चित् ॥ अकर्तृकतया नापि कर्तृदोषेण दुष्यति । वेदवद् बुद्धवाक्यादिरकर्तृस्मरणदर्शनात् ॥ बुद्ध-वाक्यप्रमाणताऽपि प्रत्यक्षनिबन्धना । तद्-द्रष्टृत्वनिमित्ता वा काठकाद्भिरस्मादिवत् ॥ यान-देशोदितं किंचिद् वेदप्रामाण्यसिद्धये । तत्सर्वं बुद्धवाक्यानामविशेषेण गम्यते ॥ तेन प्रयोग-शास्त्रत्व यथा वेदस्य सम्मतम् । तथैव बुद्धशास्त्रा-देर्वक्तुं मीमांसकोऽर्हति ॥' इति ( १।३।११ ) । 'एन प्राप्ते वदामोऽत्र तत्राऽसन्नियमादिति । अमन्निबन्धनं ह्येतत् पूर्वोक्त सर्वमीक्ष्यते ॥ ईदृक्षा परमार्थेन बुद्धिरर्थेषु जायते । अन्या भ्रान्तिरजाताऽपि त्वन्या जाताऽपि दुष्यति ॥ परेण सह केषाचिद् वाक्यानि जल्पताम् । उभय प्रातिभासिक्यो जायन्ते परवाक्यतः ॥ स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् । छाया तथापि रक्षन्तो जल्पन्ति प्रतिशब्दवत् ॥

संस्कृता धर्मा इत्यस्य सर्वकालं स्वयमेव प्रतिषिद्धोऽपि विनाश कृत इति असाधुशब्दनिबन्धनत्वात् इत्यन्तेन हेतुना वेदबाह्यनकशास्त्रान्तरस्याप्रामाण्यसिद्धिः । याताश्च अकृतक अविनष्ट शब्दराशि तस्य व्याकरणमेवैक उपलक्षणम्, तदुपलक्षितरूपाणि च 'वेदे यथोपलभ्यन्ते नैवं शाक्यादिभाषिते । प्रयोगनियमाभावात्तोऽप्यस्य न शास्त्रता ॥'

अथनियमात् व्याकरणोक्तनियमाभावात् इत्यर्थः । क्षणिकत्व-निराकृतनित्यत्व सिद्धानित्यत्वात्यन्ताविश्रमान प्रयनियमाभ्युपगमाभिप्रायेण वा अथनियमात् इत्युक्तम् (क्षणिकत्वेन निराकृतेन नित्यत्वेन सिद्ध अनित्यत्व यस्य ग्रन्थस्य) । असता वा क्षणभङ्गशून्यवादानात्म कायादीना असद्धेतुभिर्वा प्रतिपादननियमात् तदेककर्तृकधर्मवचनानामपि अप्रामाण्यम् । 'कर्तृस्मरणदार्ढ्याच्च नैषामकृतता मता । तेनाकृतकगम्येऽर्थे स्वातन्त्र्याच्च प्रमाणता ॥' वा. १।३।६।१२ पृ २३४–२३९.

* शाक्वर अच्छावाकस्य साम पृष्ठं विश्वजिति । भा ७।३।१।८, * शाक्वरं मैत्रावरुणसाम विश्वजिति सर्वपृष्ठे । १०।६।७।१४. * शाक्वर साम । षष्ठे पञ्चमेऽहनि पृष्ठं शाक्वरसामनिष्पाद्यम् । विश्वजिति षोडशात् प्राप्तम् । वि. ७।३।१.

* शाखा छेदनादिप्रयोजिका, नोपवेष । ४।२।३।८–९, मीको पृ ११७४ 'उपवेषाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * शाखा प्रहरतिना प्रत्यासानाऽपि न यागसाधिका । टुप ४।२।४।११ * शाखा वत्सापाकरणाया विहिता । भा ६।४।१४।४४, * शाखा सानाय्यार्था । तामनुनिष्पद्यते उपवेष । ११।३।१३।२८. * शाखा कठकाद्या शाखाव्यपदेश्या प्रविभक्ता विधिसंघरूपस्य वेदाख्य वृक्षस्य कतिपयाङ्गाख्यपुष्पफलाश्रयत्वात् । यथा एकस्य वृक्षस्य एकमूलं सर्वशाखाधारभूतं स्कन्धं तथा एकस्यैव धर्मास्यमूलो पत्तिनिष्ठ्यात्मस्कन्ध-स्वरूपत्वात् वृक्षत्वोपचार । यथा वृक्षस्य पुष्पफलानि न एकैकस्यां शाखायां समस्तानि सन्ति तथा वेदशाखायामपि एकैकस्यां ऋग्वेदादिप्रतिपाद्यहोत्रादिसमस्ताङ्गाख्यपुष्पफलासंभवात् शाखात्वोपचार । सु पृ ९९१–९९२. * शाखा (वेदस्य) । शाखा इव शीला शाखा । तद्यथा वृक्षस्य शाखा, एवमिहापि वृक्षस्थानीयस्य वेदस्य शाखा । किं शाखासाम्यम् ? यथा नाना अवस्थानम् । न चैकैकस्यां कृत्स्नं पुष्पं फलं सन्निहितम् । एवमिहापि, नैकैकस्यां कृत्स्नं गुणकाण्डं सन्निहितम् । भा २।४।२।१८, * शाखामधिकृत्य 'प्राचीमाहरति' इति शाखावादोऽयं न तु दिग्वाद । शाखिनस्तु दिग्वादमाहु । ४।२।२।७ * "शाखया वत्सानपाकरोति, यत् पलाशशाखया वत्सानपाकरोति" दर्शस्य औपवसथ्येऽहनि प्राप्त । वि ४।२।२–३, * शाखाया प्रहरण नाम आहवनीये त्याग । ४।२।४. * शाखाया प्रहरणं प्रतिपत्ति । भा ६।४।१४।४४ * शाखानाम् । नानादेशपठ्यमानाना शाखाना प्रमादिभि पुरुषैः तद्देशागमनात् श्रोतुमशक्ये तद्गतश्रुत्यनुपलब्धिसंभव । एकशाखागतानामपि श्रुतीना नानाप्रकरणस्थाना तत्तत्कर्तृधर्मत्वबाधेन पुरुषधर्मत्वस्य प्रमादिभि निर्णेतुमशक्ते स्मृतिमूलत्वनिरूपणानुपलब्धिसंभव । सु. पृ. २२१ * शाखाया एकस्या ब्राह्मणानेकत्वेऽपि तदेक कर्म । यथा उद्गातॄणां पञ्चविंशषड्विंशब्राह्मणयो ज्योतिष्टोमद्वादशाहौ । था २।४।२।९ पृ ६३५

ॐ शाखाया तत्प्रधानत्वात् । ४।२।२।७ ॥

अमिमत्रैकदेशोऽयं सन् पृथक् आचार्यं अधिकरणान्तरपरत्वेन भाष्ये व्याख्यात । वस्तुतस्तु अग्रमसूत्रद्वयमेव पृथक्कृत्य प्रथमवर्णत्वेन व्याख्यातं इति निश्चयो भवति । सिद्धान्तसूत्रमिदम् । दर्शपूर्णमासयो वत्सापाकरणार्था पलाशादिशाखा अधिकृत्य श्रूयते 'प्राचीमाहरति' 'उदीचीमाहरति' 'प्रागुदीचीमाहरति' इति । अत्र प्राच्यादिशब्द दिशि वर्तते इति चेन्न । किंतु प्राच्यादिशब्द दिग्विशेषस्य प्राच्यादिदिशि निरूढाया शाखाया प्रयुक्त । तत्प्रधानत्वात् शाखाप्रकरणबलेन शाखाप्रधानत्वात्, प्राच्यादिशब्दस्य । तस्मात् शाखावादोऽयम्, न तु दिग्वाद । वै

■ शाखाया तत्प्रधानत्वादुपवेषेण विभाग स्याद् वैषम्य तत् । ४।२।३।८ ॥

दर्शपूर्णमासयो 'मूलत शाखा परिवास्य उपवेष करोति ' इति श्रूयते । मूलत मूलात् परिवास्य छित्त्वा । अत्र छेदनस्य प्रयोजक शाखा उपवेषश्च उभयम्, उत शाखैव प्रयोजिका उपवेषस्तु तदनु निष्पादी इति विचारे सिद्धान्तसूत्रम् । परिवास्य इति शाखाया अन्वेति । तत्प्रधानत्वात्, शाखा इति द्वितीया श्रुत्या शाखाया प्राधान्यबोधनेन परिवासनस्य शाखा प्रधानत्वात् । उपवेषेण तु परिवासनस्य विभाग स्यात् अन्वयो न स्यात्, तस्य करोतिना अन्वयात् । तत् एतत् शाखोपवेषयो वैषम्य भवति परिवासने अन्वया नन्वयरूपम् । तस्मात् छेदनापरपर्यायस्य परिवासनस्य शाखा प्रयोजिका उपवेषस्तु अनुनिष्पन्न इति सिद्धान्त ।

श्रुत्यपायाच्च । ९ ॥

दर्शपूर्णमासयो 'मूलत शाखा परिवास्य उपवेष करोति ' इति श्रुतम् । मूलत मूलात् प्रान्देशभागे । परिवास्य छित्त्वा । अत्र परिवासनेन शाखाया एवा न्वय न उपवेषस्य इत्युक्त सिद्धान्तिना पूर्वसूत्र । तत्र शङ्का, ननु मूलस्यापि शाखावयवत्वात् शाखाया इव प्राधान्यमस्ति इति मूलत परिवास्य इति अन्वय स्यात् इति चेन्न श्रुत्यपायात् । श्रुते अवयविन्या शाखाया वाचकस्य शाखापदस्य अवयवात् मूलात् अपायो भवति । अवयविवाचक अवयवे न शक्त्या प्रवर्तते । ततश्च मूल शाखाशब्देन ग्रहीतु न शक्यते नापि तस्य परिवासनेनान्वय । तस्मात् शाखैव परि वासनस्य प्रयोजिका नोपवेष । उपवेषस्तु तदनु निष्पन्न । के

● शाखासु पौर्वापर्यं नास्ति । न च तत्र पौर्वा पर्यमस्ति येन ज्ञायेत अन्यया शाखया प्रथम विहित शाखान्तरीये पुन श्रुतिभूता भेत्स्यतीति । आह च 'शाखाना युगपद् वृत्तत्वे पुन श्रुतिरन्यथा । नहि तत्रैकया तत्र प्रथमाध्ययन स्थितम् ॥' वा २।४। २।१६ पृ ६२८.

● शाखाध्ययनम् । स्वशाखात्यागेन परशाखाध्य यनानुपपत्त स्वशाखाध्ययनपूर्वक मेधावितया शाखान्त राध्ययन युक्तम् । सु पृ ९९०

● शाखान्तराणि (वेदस्य) । 'एकस्य वेदवृक्षस्य किंचित्कर्मफलाश्रयात् । एव शाखा प्रसिध्यन्ति बहुत्वा नैकवृक्षवत् ॥' यदि प्रतिशाख कर्मभेद स्यात् तत एकमूलाभावात् आदित एवाऽऽरभ्य भिद्यमान त्वात् समस्तकर्मान्यपुष्पफलान्तरत्वात् वृक्षान्तरवत् वेदान्तराण्यवोच्येरन् । न शाखान्तराणि । एककर्ममूल विधिस्कन्धरूपत्वे सति इतिकर्तव्यताया क्वचित् किंचि दधिक इत्यालोच्य सारूप्यादुपपन्न शाखान्तरभेद व्यपदेश । वा २।४।२।१८ पृ ६३९ ● शाखान्त राणि काठक कालापक पैप्पलादक तैत्तिरीयक ताण्डक इत्येवमादीनि । भा २।४।२।८, मैत्रायणीयकम् । २।४।२।२० ● शाखान्तराणा पुरुषान्तर प्रति प्रति पादनेन अथवत्त्वम् । वा २।२।३।१ पृ ४७५ ● शाखान्तरेऽपि हि एक शास्त्र इच्छन्ति मीमा सका । ऋजु पृ २७१

■ शाखान्तराधिकरणम् । शाखाभेदेऽपि न कर्मभेद ॥

नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमा प्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्म भेद स्यात् । २।४।२।८ ॥

भाष्यम्— इह शाखान्तराणि उदाहरण काठक कालापक पैप्पलादक इत्येवमादीनि । तत्र संदेह किमेकस्या शाखाया यत् कर्म अग्निहोत्रादि श्रूयते, तत् शाखान्तरे पुन श्रूयमाण भिद्येत उताभिन्न न भिद्यत ? भिद्यतेति पश्याम । कुत ? नामभेदात् । एक काठक नाम अन्यत् कालापक नाम । एव नाम भेदाद्भेद । ननु ग्रन्थनामैतत् , सत्यम् । कर्मणामपीति ब्रूम । कर्मभिरप्येवमादीना सामानाधिकरण्यमेकविभ क्तित्व चेति । रूपभेदाच्च । एकस्या शाखायामग्नी षोमीयमेकादशकपालमामनन्ति, एकस्या द्वादशकपालम् । एव भिन्नरूप कथमिव न कर्मान्तर भविष्यति । धर्म विशेषाच्च । कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ

भोजनमाचरन्ति, अपरे शाखिनो नाऽऽचरन्ति । तथा, अग्निमधीयानाः केचिदुपाव्यायम्योदकुम्भानाहरन्ति अपरे न । अश्वमेधमधीयानाः केचिदश्वस्य घासमाहरन्ति, अपरे न । परेऽन्यं धर्ममाचरन्ति । अश्वघासादेरेकेषामुपकारं आकाङ्क्षति अश्वमेधादि, एकेषां न आकाङ्क्षति । स एवैकः कथं नाऽऽकाङ्क्षेत, कथं चाऽन्यदाकाङ्क्षितुमर्हति । अतो गम्यते अन्यदिति । पुनरुक्तिप्रसङ्गाच्च । यदि सर्वशाखाप्रत्ययं एकं कर्म, एकस्यां शाखायां विहितस्य कर्मणः शाखान्तरे वचनं पुनरुक्तमनर्थकं स्यात् । न तु भेदपक्षे एष दोषोऽस्ति । तस्मादपि कर्मभेदः । निन्दावचनाच्च । 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्, दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्' इति केचिच्छाखिनोऽनुदितहोमं निन्दन्ति । अपरे पुनरुदितहोमं निन्दन्ति । यथा अतिथये प्रद्रुताय शून्यायावसथायाहार्यमाहरेयुस्तादृक् तद् यदुदिते जुह्वति' इति सर्वशाखाप्रत्यये विरुद्धम्, न तु कर्मभेदे । तस्मादपि भेद इति । असमाप्तेश्च । न शक्नुयुः सत्त्वपि सर्वशाखाप्रत्ययमुपसंहर्तुम् । तत्रानारम्भोऽर्थो विधीयते इति प्रतिज्ञातं भवेत् । शक्यं तु कर्मभेदे । अतः कर्मभेद इति । समाप्तिवचनाच्च । असमाप्तेऽपि समाप्तिवचनं भवति । केचिदाहुः, अत्र अस्माकमग्निः परिसमाप्यते इति । अपरे अन्यत्र परिसमाप्तिं व्यपदिशन्ति । तदेककर्मत्वे नोपपद्यते । न हि तदेव तत्र परिसमाप्येत, अन्यत्र न । भेदे तु युक्तम् । तस्माद्भेदः इति । प्रायश्चित्तविधानाच्च । केचिदनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, केचिदुदितहोमव्यतिक्रमे, व्यृद्धे च प्रायश्चित्तम् । न च कर्मैकत्वे उभयथा व्यृद्धिः संभवति । कर्मभेदे तु यदनुदिते होमधर्मं, तदुदिते व्यृद्धमितरदप्यनुदिते । तस्मादपि भेदः । अन्यार्थदर्शनाच्च । इह श्रूयते— 'यदि पुरा दिदीक्षाणाः स्युर्यदि वैषां गृहपतिर्गृहपतेर्वाऽनुजाविर इति, त एतमेव बृहत्सामानं क्रतुमुपेयुरुपेत द्योषां रथंतरम् । अथ यत्रादिदीक्षाणाः' इति ऽदृष्टतामनिष्ट्वा च द्वादशाहे दर्शनमुपपद्यते यदि कर्मभेदः । एककर्मत्वे नावकल्पते । कथम् ? ताण्ड्यके श्रूयते 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव तज्जायेत प्र वा मीयते' इति । तत् सर्वत्र स्यात् । तत्रादिदीक्षाणां द्वादशाहे दर्शनं नोपपद्यते । तस्मादपि कर्मभेदः । अथापरं लिङ्गदर्शनम् । 'यत्पक्षसमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्कनीयसीं प्रजां कनीयसः पशून् कनीयोऽस्यान्नं पापीयान् स्यात् । अथ यदि वेदिसमितां मिनोति' इति पक्षसमाने प्रतिषिद्धे वेदिसमानस्य दर्शनं भवति । तत् कर्मभेदे उपपद्यते । पाक्षिकस्य वेदिसमानस्य दर्शनमेककर्मत्वे नोपपद्यते । कथम् ? एके हि समामनन्ति 'रथाक्षमात्राणि यूपान्तरालानि भवन्ति' इति । तत्सर्वत्र स्यात् । तत्र न नौ पक्षसमानो नो वेदिसमानः स्यात् । वेदिसमानदर्शनं नोपपद्यते । तस्मादपि कर्मभेदः । अपरं च लिङ्गदर्शनम् । केषांचिज्ज्योतिष्टोमे श्रूयते 'द्वे संस्तुतानां विराजमतिरिच्येते' इति । परेषां तिस्रः संस्तुतानां विराजमतिरिच्यन्ते इति । एककर्मत्वे विरोधः । नानाकर्मत्वे कस्मिंश्चिज्ज्योतिष्टोमे द्वे, कस्मिंश्चित्तिस्रः । तस्मात् कर्मभेद इति । अपि च सारस्वते श्रूयते 'ये पुरोडाशिनस्त उपवसन्ति । ये सांनाय्यिनस्ते वत्सान् वारयन्ति' । सांनाय्यिन इह प्रथमपक्षः । पुरोडाशिनो विपरीताः । उभयेषां सारस्वते दर्शनमवकल्पते कर्मभेदे । एककर्मत्वे सर्वेषां ज्योतिष्टोमपूर्वत्वं स्यात् । तत्र दर्शनं नोपपद्यते । अपि च श्रूयते 'उपहव्योऽनिरुक्तोऽग्निष्टोमो यज्ञः, रथंतरसामाऽश्वः श्यावो दक्षिणा । परेषां श्रूयते । उपहव्योऽनिरुक्त उक्थ्यो यज्ञो बृहत्सामाऽश्वः श्वेतो रुक्मललाटो दक्षिणा' इति । कर्मैकत्वे रथंतरवचनं बृहद्वचनं चानर्थकम् । शाखाद्वयप्रत्ययत्वात् । बृहत्सामा रथंतरसामा वा स्यात् । स चाय प्रकृतितः एवंलक्षणकः प्राप्तः । नानाकर्मत्वे तु अन्यो बृहत्सामाऽन्यो रथंतरसामेति युक्तं भवति । तस्माच्छाखान्तरे कर्मभेदो भवितुमर्हति ।

वा— उक्तभेदकारणषट्कव्यतिरिक्तकारणनिराकरणार्थमिदमारभ्यते । तत्र कानिचित्केनचित्प्रकारान्तरेणाऽऽशङ्क्य प्रतिषिध्यन्ते । यत्तु प्रत्युदाहरणं प्रविविक्षन्तो

योजयिष्यामः । कथं पुनरत्र वेदान्तराणि नोदाह्रियन्ते ? केचिदाहुः । शाखान्तरशब्देन तान्यप्युदाहृतानीति । न त्वेतद्युक्तम् । कुतः ? ' शाखान्तरे यथा कर्म कृत्स्नरूपं प्रतीयते । किंचिद्गुणसमाम्नानान्नैवं वेदान्तरेषु तत् ॥ ' यत्र हि कर्म निराकाङ्क्षमाम्नायते तत्र तद्भेदप्रतिपत्तिक्षमं भवति । यथा सर्वास्वध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि समस्तद्रव्यदेवतादियुक्तत्वादन्योन्यनिरपेक्षाणि विधीयन्ते इति भेदाशङ्कां सहन्ते न त्वेवं वेदान्तरेऽपि । तत्र हि द्रव्यदेवतारहितं कर्ममात्रं प्रस्तुत्य स्तोत्रशस्त्रयाज्यानुवाक्यादिमात्रं विधीयते । न च तावताऽस्य नैराकाङ्क्ष्यं भवति । दृष्टार्थानामेव द्रव्यदेवतातत्संस्काराणामभावात् । यत्तु तत्र द्रव्यदेवतायुक्तमाम्नायते तस्याऽऽध्वर्यवे गुणमात्रविधानात् साकाङ्क्षत्वम् । तथा च वक्ष्यति ' भूयस्त्वेनोभयश्रुति ' ( अ. ३ पा. ३ अ. ३ सू. १० ) इति । तस्मात् शाखान्तराण्येवोदाहरणम् । तत्र च नामभेदस्तावत्कारणं दृश्यते । तद्यथा— काठकेऽग्निहोत्रे तैत्तिरीयेऽग्निहोत्रे इह पठ्यते इत्यादि । तथा रूपभेदे एकादशकपालत्वादि । वैश्वानरद्वादशकपालत्वादिवदामिक्षावाजिनवच्च न द्वादशैकादशत्वयोरितरेतरसंक्रान्तिरुपपद्यते इति गुण एव भेत्ता । कारीर्यश्वमेधेष्वपि भूमिभोजनोदकुम्भाश्वघासा गुणा एव सन्त इतिकर्तव्यतास्थानीयत्वेन बाह्यतरत्वात् पूर्वस्मात् भेदेनोपात्ताः । ' परेऽन्यं धर्ममाचरन्ति ' इति विरोधिगुणान्तरप्रदर्शनार्थम् । ' अश्वघासादेः ' इति पञ्चम्यन्तं मध्ये पठितमुभाभ्यां सह संबध्यते । पूर्वेण तावदश्वघासादेरन्यमुत्तरेणाप्यश्वघासादेर्निष्पन्नमुपकारमाकाङ्क्षन्नश्वमेधादिरिति । पुनरुक्तत्वेन पुनः श्रुतिर्भेदिकोक्ता । निन्दाया अपि उदितानुदितकालसंयोगभेदात् गुण एव भेदकः । उदितहोमवादिनो ह्यनुदितहोमं निन्दन्ति अनृतवादित्वेन । ' सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ' इति ह्यनुदिते सूर्येऽभिधीयमानमनृतं जायते । तस्मादुदितहोमः कर्तव्यः इति । इतरे पुनराहुः, यः पूज्यं पूज्याय प्रथममेव गृहीत्वोत्तिष्ठते स साधुः । यस्त्वतिक्रान्तं व्याहृत्य पूजयति नासौ सम्यक्पूजकः । तस्मात् अनुदितहोम एव कर्तव्य इति । तथैकत्वे विप्रतिषिद्धधर्मसमवायप्रसङ्गः । नानात्वे तु न कश्चिद्विरोधः । अशक्तिद्वारेणापि गुण एवोपन्यस्तः शाखान्तरीयाणां गुणानामेककर्मण्युपसंहाराशक्तेरपूर्वसंयोगः । समाप्तिभेदोऽपि गुण एव । निन्दया गतार्थोऽपि सन् प्रायश्चित्तभेदः पुनरुपन्यस्यते । कदाचिदत्र वैकल्पिकत्वपरिहारं ब्रूयात्तत्त्वमभ्युपेत्योच्यते । वैकल्पिकेषु ह्युभयथाऽप्यवैगुण्यं भवति । अत्र च प्रायश्चित्तविधानादुभयत्रापि वैगुण्यं दृश्यते । न च तत्कर्मैकत्वे घटते । तस्मादपि भेदः । परिहारसूत्रशेषेण पञ्चान्यार्थदर्शनान्युच्यन्ते । यदि पुरा दीक्षितास्ततो बृहत्सामानमतिरात्रमुपेयुः । पूर्वदीक्षाया रथन्तरस्य प्रयुक्तत्वात् । अथ न दीक्षितास्ततो रथन्तरसामानमेवोपेयुरिति । द्वादशाहेऽनिष्टप्रथमयज्ञस्य कर्मभेदे भवति । ताण्डकवचनेन ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति एतच्छाखागतस्यानियमात् । एकत्वे तु सर्वशाखास्थज्योतिष्टोमप्राथम्यनियमाददीक्षितानां दर्शनं न स्यात् । तथा यूपैकादशिन्यां पक्षद्वये विद्यमानयोरर्थप्राप्तयोरेकं निन्दित्वेतरपरिग्रहो वचनान्तरप्राप्त्यसत्त्वं द्योतयति । वचनान्तरे हि किमेकस्य निन्दया, किं वेतरस्य स्फुटविधाने सति स्तुत्या । तस्मान्नूनं शाखान्तरीयो रथाक्षमात्रान्तरालविधिरेषां नास्ति । ततश्च कर्मभेद इति । द्वे स्तोत्रीये विराजं दशकमतिरिच्येते इति तिस्रोऽतिरिच्यन्ते इति च ज्योतिष्टोमातिरात्रैकत्वे सति उपपन्नम् । भेदे तु यथाविधि भवतीत्यविरोधः । पुरोडाशिमानाद्यपि दर्शनं दीक्षितादीक्षितसंदर्शनेनैव गतं परिहारप्रकारान्तरत्वादुदाहृतम् । किञ्च ' पृष्ठद्वयविकल्पः स्याच्छाखान्तरविधानतः । स च प्रकृतितः प्राप्तः कर्मैकत्वे वृथा भवेत् ॥ ' उपहव्यभेदे तु नियमार्थाया पुनःश्रुतावर्थवत्ता । तस्मादपि कर्मभेदः ।

एकं वा संयोगरूपचोदनाख्याविशेषात् ।९॥

भाष्यम्— न चैतदस्ति, यदुक्तम् ' शाखान्तरेषु कर्मभेदः ' इति । सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं चैकं कर्म । अर्थसंयोगस्याविशेषात् । तदेव प्रयोजनमुद्दिश्य तदेव विधीयमानं प्रत्यभिजानीमः । रूपमप्यस्य तदेव द्रव्यदेवतम् । पुरुषप्रयत्नश्च तादृश एव चोद्यते । नाम-

धेयं चाविशिष्टम् । तेन तदेव कर्म सर्वशाखास्विति प्रत्ययः ।

वा— ‘ सर्वत्र प्रत्यभिज्ञानात्संज्ञारूपगुणादिभिः । एककर्मत्वविज्ञानं न शाखान्यपगच्छति ॥ ’ ।

सर्वशाखाप्रत्ययमिति— एकस्यामपि शाखायां ब्राह्मणानेकत्वेऽपि तदेकं कर्मेत्यभिप्रायः । तद्यथा उद्गातृणां पञ्चविंशषड्विंशब्राह्मणयोर्ज्योतिष्टोमद्वादशाहौ । संयोग इति— प्राधान्यात् फलसंयोगग्रहणम् । रूपमिति— प्रत्यक्षतेऽर्थदेवतम् । चोदनेति— सर्वशाखार्थभावनाविषयो विधिः । ज्योतिष्टोमादि नामधेयं च सर्वशाखास्वविशिष्टं दृश्यते । तस्मादियतः प्रत्यभिज्ञानकारणकलापादभेदसिद्धिः । न चान्यः कश्चिद्भेदहेतुरस्ति । प्रकरणान्तरवच्छाखान्तरेषु परस्पराननुविधानमिति चेन्न । तेनैवेतराग्रहणात् । येन हि प्रदेशान्तरे किंचित्कर्म गृहीतं भवति स एव तत्सद्दशमन्यत्रोपलभमानः शक्नोति ततोऽन्यदेवेदमित्यध्यवसातुम् । एकशाखाविषये च सर्वं शाखाध्ययनादेव भवति । शाखान्तरे पुनरन्यशाखागतज्योतिष्टोमाद्यनवबोधात्पूर्वं गृह्यमाणेषु न भेदबुद्धिर्जायते । यस्तर्हि द्वे शाखे पठति तस्य प्रकरणान्तरन्यायेन भवितव्यमेकशाखागतेषु च ब्राह्मणान्तरेषु । नैष दोषः । शाखान्तराध्ययनं तावदेकस्य पुंसो नैवेष्यते । किं कारणम् ? ‘ स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते । एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति ॥ ’ यथैव व्याकृतिः प्रतिव्यक्ति समवैति तथैव स्वाध्यायशब्दमेकैकस्यां शाखायाम् । अतश्च ‘ स्वाध्यायोऽध्येतव्यः ’ इति कर्मावबोधनप्रयुक्त्यानर्थक्यभावात् द्विवक्षिते ग्रहणैका शाखा अध्येतव्या । नन्वेवं वेदान्तरस्याध्ययनं न प्राप्नोति । न । वचनान्तरेण प्रतिप्रसवात् ‘ अनया त्रय्या विद्यया ’ इति । तथा ‘ वेदानधीत्य वेदौ वा ’ इति स्मरणम् । साकाङ्क्षत्वाच्च वेदान्तराणामनुल्यकार्यत्वात् अनित्यः समुच्चयोऽवगम्यते । शाखान्तरेषु तु अन्योन्यनिरपेक्षत्वज्ज्योतिष्टोमादिरूपप्रतीतेस्तुल्यार्थत्वान्नित्यो विकल्पः । अनाकाङ्क्षत्वादेव चैकशाखागतब्राह्मणान्तरस्थानुपसंहारणम् । नन्वेककर्मत्वाद्विकल्पो विकल्पाच्चैककर्मत्वमितीतरेतराश्रयत्वं भवेत् । न । प्रत्यभिज्ञानमात्रेणैकत्वे निश्चिते संख्यानुरोधेन विकल्पसिद्धेः । अतश्च यो नामाविशेषाविस्तरादेकवेदगतानि शाखान्तराण्यपि अधीते स समुद्रः सन् व्रीहियवैरपि विधिवैर्यजेत । तस्मादेकं कर्मेति ।

न नाम्ना स्यादचोदनाऽभिधानत्वात् ॥ १० ॥

भाष्यम्— यदुक्तं नामभेद इति । परिहृतं तद् ग्रन्थनामत इति । अथ यदुक्तं कर्मणोऽपि नामसामानाधिकरण्यदर्शनादिति । नैष दोषः । ग्रन्थसंयोगात् कर्म काठकादि, न कर्मसंयोगात् ग्रन्थः काठकः । कथं गम्यते ? यत्कर्म काठकादिभिरुक्तं न काठकादिशब्देन उच्यते । भिन्नोऽपि यद्ग्रन्थसंयोगात्काठकं कालापकं कर्मोच्यते । एकत्वेऽपि काठकग्रन्थसंयोगात् काठकं कालापकग्रन्थसंयोगात्तु कालापकं भविष्यति ।

वा— यद्यपि तावत्काठकादिकं नामधेयं स्यात्तथा प्युत्पत्तिसंयोगमात्रत्वाद्वैव भिन्द्यात् । इदं तु नैव कर्मनामधेयम् । ‘ अन्याय्यो ह्यनेकार्थत्वम् ’ इत्यनेन न्यायेन ग्रन्थनामत्वे सति कर्मणि लक्षणयैव प्रयोगोपपत्तेः । कथं पुनरवगम्यते ग्रन्थनामैतत्कर्मण्युपचर्यते न पुनर्विपर्यय इति । तदुच्यते ‘ शाखया ह्येकया योगाद्बहुकर्मावबोधनम् । युज्यते कर्मनानात्वान्नैकशाखोपलक्षणम् ॥ ’ काठकादिशब्दो हि परस्परासंबद्धेषु बहुषु कर्मसु प्रयुज्यते । स यदि कर्मनाम स्यात्कर्मान्तरे न प्रयुज्येत । न हि तत्र रूढ्या उपपद्यते । संबन्धाभावात् । भवाभिधानं तु कथंचिद्दूरुपपादम् । तस्माच्छाखैव कर्माणि लक्ष्यन्ते न कर्मभिः शाखाः । तस्य शाखा नाम शाखा एव भिद्यतां न कर्माणि । संबन्धाभावात् । तस्माच्चाग्निहोत्रादीनि सर्वविधमेदादन्यथाऽन्यथा च व्यपदिश्यन्ते ।

सर्वेषां चैककर्म्यं स्यात् ॥ ११ ॥

भाष्यम्— यदि शब्दभेदाद्भेदो भवेत् , शब्दैक्यात्तर्हि कर्मैक्यं भवेत् । तत्र काठकशब्दाभिधानादेकत्वं भवेत् । अग्निहोत्रस्य दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च तच्छब्दत्वात् । न चैतदेवम् । तस्मादप्यभेदः ।

वा— प्रायेण हेतुविपर्यये कार्यविपर्ययो दृश्यते इति काठकादिशब्दैक्यादेकशाखाधीताग्निहोत्रादेरेकत्वप्रसङ्गः । शब्दव्यभिचारित्वादिव अर्थापत्तिसमा नाम

अनुपपन्न । किंच- 'सप्तदशाध्यायगता भुक्त्वा स्वा समाख्यानिबन्धिनीम् । शाखां शाखान्तरं युक्तं नाध्येतुं सदृशो श्रमे ॥' तस्मात्परकीयशाखाध्ययने अभ्यस्यैव पुरुषाणां श्रम इति यथावस्थितशाखाध्ययनमेव । न च वेद पुनरुक्तादिदोषोद्धारपर्यनुयोगमर्हन्ति ।

वाक्यासमवायात् । १७ ॥

वा— अथान्तरं भाष्यकारस्य सूत्रं प्राप्तम् 'वाक्यासमवायात्' इति । तदेव व्याख्येयम् । नैकस्मिन् पुरुषे शाखान्तरवाक्यं समवैति ।

अर्थासंनिधेश्च । १८ ॥

भाष्यम्— अर्थासंनिधेश्च शाखाशब्द उपपन्नो भवति । शाखा इव हीमाः शाखाः । तद्यथा वृक्षस्य शाखाः, एवमिहापि वृक्षस्थानीयस्य वेदस्य शाखाः । किं शाखासारूप्यम् ? यथा नानास्थानम् । न चैकस्या वृक्षस्य पुष्पं फलं संनिहितम् । एवमिहापि, नैकस्या वृक्षस्य गुणकाण्डं संनिहितमित्यर्थासंनिधेः शाखाशब्दोपपत्तिः । तस्मादप्येकं कर्मेति ।

वा— 'एकस्य वेदवृक्षस्य निश्चितकर्मफलाश्रयात् । एव शाखाः प्रतिष्ठ्यन्ति बहुशाखैकवृक्षवत् ॥' यदि प्रतिशाखं कर्मभेदः स्यात्तत एकमूलाभावाद्भिन्न एकाऽऽरम्भ भिन्नमानत्वात् समस्तकर्माभ्यपुष्पफलान्तरत्वात् वृक्षान्तरवद्वेदान्तराण्येवोच्येरन् । न शाखाख्यानि । एककर्ममूलनिविष्टत्वे घटमाने सर्वानिरते च तासां क्वचित्किंचिन्निरधिकमित्यालोच्य सारूप्यादुपपन्नशाखान्तरभेदव्यपदेश । अथवा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्तता भवति यत्र पूर्वापरोऽर्थस्तस्यैव पुंस संनिहितो भवति । न त्विह शाखान्तरगतस्य संनिधानमित्यपुनरुक्तता ।

न चैकं प्रति शिष्यते । १९ ॥

भाष्यम्— न च यस्ताऽऽकेऽग्निहोत्रं वाजसनेयिभिरेव पुरुषं प्रति विधीयते । तैत्तिरीयस्यापि तदुद्दिश्यैव । पुरुषविशेषवचनाभावात् । यथा अग्निहोत्रस्य निर्दिष्टं विधीयते, मध्यंदिनस्य तदग्निहोत्रस्य । यथा काठकस्याग्निहोत्रस्य तथा तैत्तिरीयकस्येति । विशेष

वचनाभावात् । तस्मात्सर्वशाखाभिरेकं समानं कर्मोच्यते इति ।

वा— अभ्युपेत्यवादोऽयम् । यद्यपि कर्मभेदे ये तानध्यायप्रयुक्ता दोषास्तेऽग्निहोत्रादिनामोद्देशेन विधीयमानाः सर्वार्थत्वेन ज्ञायन्ते इत्यनन्यत्वोपपादात्स्या इति नैव शाखामात्रपरितोषव्यवस्था लभ्यते । न च सूत्रकाराणामपि कश्चित् स्वशाखोपसंहारमात्रेणावस्थितो येन प्रतिशाखं कर्मव्यवस्था समर्थेत । प्रधानान्यपि प्राधान्येन यजमाननियमं प्रति, अप्रमत्तन्वीभिः समाख्याभिरर्थिमात्रमुद्दिश्य विधीयमानानि सर्वशाखागतान्येकैकपुरुषमुपतिष्ठन्ते । तत्रैकत्वान्नाश्रमुच्चयं येन केनचित्साध्यमाने फलेऽन्येषां वैयर्थ्यप्रसङ्गः । अथ तेषां विकल्पेनार्थवत्त्वम्, तद्वत् शाखान्तराणामेव व्यवस्थितमनिष्पद्यमानानामनन्तरकुल्तर परिकल्पितमित्यपुनरुक्तता ।

समाप्तिवच्च संप्रेक्षा । २० ॥

भाष्यम्— अत अस्माकमपि परिसमाप्यते इत्युपक्षितारो भवन्ति । अध्यारोहेषु मैत्रायणीयानामपि परिसमाप्यते, अस्माकं तेषु न परिसमाप्यते इति । यत्र यदेव मैत्रायणीयानामग्निस्तेषाम्, कथं ते ब्रूयुरस्माकं न परिसमाप्यते इति । एवमनुपपन्नम्, तेषामपि हि ते सन्ति ।

वा— असमाप्तिवदिति वा छेदः । कर्मभेदपक्षे हि हि यावदेव यथा समाम्नातं तावदेव तेषां समाप्यते इति न ब्रूयुरस्माकं न समाप्यते इति । अध्यारोहो नाम अध्यारोहणमन्त्रा । तत्तु मैत्रायणीयानां समाप्यते न अस्माकमित्यभिधानादध्येतॄणामपि कर्मैकत्वं प्रसिद्धमित्यवसीयते ।

एकत्वेऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि । २१ ॥

भाष्यम्— न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते । किं तर्हि ? निन्दितादितरत्प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते, किं त्वितरस्य विधिः । तत्र एकस्मिन् अग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते । अतो न कश्चिद्विरोधः ।





येन च उत्पादितं तद्गतो गुणः उत्पत्तिशिष्ट इति, इतरस्तत्र निवेशमलभमानो वाजिनवत् कर्मान्तरं कल्पयति ? इति प्राप्ते, ब्रूमः । 'विधेः कर्मार्थतामात्रं पुनःश्रुत्यादिभिर्भवेत् । तावन्मात्रमिहापि स्यान्न तु भेदः प्रसिध्यति ॥' पुनःश्रुत्या हि कर्म विधेयमित्येतावत् सिध्यति, विधिवशात्तु भेदो विहितस्य विधानायोगात्, एकमप्यनियाकपि विधिरिहासम्भवात् कर्मविधानम्, विधानाच्च भेदः तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिध्येत् न त्वत्र विधिवशाद्भेदसिद्धिः, विहितस्यापि पुरुषान्तरं प्रति विधिसम्भवात् । यथा खलु एकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेव अपरस्यापि विधत्ते न कर्मान्तरं एव अन्यापि अध्येतृभेदात् तान् प्रति सर्वाण्येव वाक्यानि एकमेव कर्म विदधति न कर्मान्तरम् । एवमेकादशद्वादशकपालयोरुभयोरुत्पत्तिशिष्टत्वात्र बलाबलम्, तस्मादभेदः ।

सोम-- अधीयते इति अध्यायः, स्वश्चासौ अध्यायश्च स्वाध्यायः । स्वत्वं च पितृपितामहादिपरम्परागतत्वम् । ततश्च 'स्वाध्यायोऽध्येतव्यः' इति स्वीयशाखाध्ययनमात्रमेव विधीयते स्वाध्यायस्य अध्ययनसंस्कार्यस्यापि अर्थज्ञानं प्रति उपादेयत्वेन तत्र स्वत्वस्य एकत्वस्य च विवक्षितत्वादेव चैकैकस्य पुरुषस्य एकशाखाध्यायित्वात् तत्तच्छाखागतविधीनां तत्तदध्यायिपुरुषान् प्रति अज्ञातज्ञापकत्वेन अर्थवत्वात् एकस्यैव पुनःश्रुतिः अविरोधात् अनर्थकं हि स्यादिति शाखाप्रयुक्त्या न भेद इत्यर्थः । न चैव वेदान्तराध्ययनमपि न स्यादिति वाच्यम् । 'वेदानधीत्य' इत्यादिशास्त्रेण वेदेषु समुच्चयावगमात् ।

वि-- 'शाखाभेदात्कर्मभेदो न वा कर्माऽत्र भिद्यते । इष्ट फलरूपनामादि नहु भेदस्य कारणम् ॥ मन्त्रपाठादिना कर्मे युज्यन्ते भेदहेतवः । रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥'

भाट्ट-- अग्निहोत्रादौ सत्स्वपि भेदकप्रमाणेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्वनाकस्य कर्मोत्पत्तिवाक्यस्थानेकत्वपक्षोत्पत्तरलोभात् कर्मान्तरत्वसिद्धिः । प्रकृते तु तत्प्रमाणैरन्यविषयत्वात्वानेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येकस्यैव कर्मणः सर्वत्रोत्पत्तिसम्भवात् न कर्मभेदः । न हि सर्वशाखाः सर्वपुरुषैरध्येयाः, स्वाध्यायविधौ 'अध्वर्युं वृणीते' इतिवत् स्वीयत्वैकत्वयोर्विवक्षितत्वेन अनेकशाखाध्ययनानुपपत्तेः । न चैवं वेदान्तरस्वशाखाध्ययनस्याप्रस्वापत्तिः । 'वेदानधीत्य' इत्यादिवचनान्तरानुरोधेन वेदत्रयगतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः । अत एव वेदभेदे पुरुषाभेदादेकमेवोत्पत्तिपरत्वं गुणार्थं श्रवणमित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्यपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अत एकस्मिन् कर्मणि विरुद्धानां नानाशाखागताङ्गानां विकल्पः । स च न तत्तत्पुरुषभेदेन व्यवस्थितः । तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धकत्वर्थत्वावगतेः । अविरुद्धाङ्गेषु तु समुच्चयः । शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम् । यत्तु 'बह्वल्पं वा स्वगृह्योक्तम्' इत्यादिवचनं तत् सर्वाङ्गोपसंहारासंभवे अनुकल्पविधानार्थमिति कौस्तुभे द्रष्टव्यम् ।

तदेव शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः निरूपितः कर्मणां भेदः । अतः परं तेषां विनियोगो निरूपयिष्यते ।

मण्डन-- 'मुनिरपि बहुशाखं कर्म चैकं जगाद ।'

शंकर-- 'शाखाभेदे न कर्मभित् ।'

* शाखान्तराधिकरणे ( २।४।२।८–११ ) तत्तच्छाखाध्यायिनं प्रति स्वस्वशाखाध्ययनप्राथम्येन अज्ञातज्ञापकत्वं समर्थितम् । रसायनम् पृ. ३७. * शाखान्तराधिकरणे स्वशाखाविहिताङ्गमात्रोपसंहारः पूर्वपक्षप्रयोजनम्, सर्वशाखाविहिताङ्गोपसंहारश्च सिद्धान्तप्रयोजनम् । सु. पृ ९९२, * 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्' इत्यनुदितहोमनिन्दार्थेन भासमानमपि तस्मात् 'उदिते होतव्य' इति विध्येकवाक्यत्वात् स्तुतिरेव इति शाखान्तराधिकरणे भाष्यकारो वक्ष्यति । पृ. ३८. * यथैव वैदिकत्वाविशेषेऽपि सौम्यसूक्तभीताङ्गमात्रेण प्रयोगविधिपरिसमाप्त्यनाश्वासनम्, तत्पूर्वस्य अविज्ञातस्यापरिमाणत्वेन श्रौताङ्गमात्रेण नैराकाङ्क्ष्यायोगात् । किन्तु स्मार्त्यादि-

दुर्बलप्रमाणक – अनारभ्याधीतशाखान्तरविहितयाजमान-मन्त्रापकर्षोत्तर प्रयोगविधिसमवायीकारेणैव तत् इति शाखान्तराधिकरणे वक्ष्यते । कौ १।२।३।७ ● शाखान्तरीययो उदितानुदितहोमयो ऐन्द्राग्न्यादशकपाल द्वादशकपालयो समविकल्प सर्वान् प्रति इति शाखान्तराधिकरणे वार्तिकम्, न स्वमतं किंतु परमतम् । वाल पृ ९१. ● स्वशाखायामपि सामान्यवचनस्य यत्र नानार्थक्य तत्र विशेषोपसंहाराभ्युपगमात् न दोष । प्रकृते च सामान्यवचनस्य शाखान्तरीयत्वात् नानर्थक्यम् । अन्यथा नानाशाखागताग्निहोत्रादिविधिवाक्येषु का गति । यथा चैतत्तथा शाखान्तराधिकरणे ‘ अद्विर्वचन वा॰ ’ इत्यादिपञ्चसूत्री व्याख्यानावसरे भाष्यवार्तिकयो प्रपञ्चित स्पष्टीकृत्य वक्ष्यामि । कु ३।१।१५।२७.

● शाखान्तराधिकरणनिष्कर्षनिरूपणम् ।

शाखान्तराधिकरणवार्तिके उदितानुदितहोमयो. तथा ऐन्द्राग्नैकादशकपाल–द्वादशकपालयो शाखान्तरीययो समविकल्प सर्वान् प्रति इत्युक्तम् ( २।४।२ ) । तत्स्वमत न स्वमतम्, श्रुतिलिङ्गाधिकरणे अनेकविध बाधनिरूपणे स्वयमेव वार्तिककृता परशाखाविहित स्वशाखाविहितेन बाध्यते इत्युक्तम् । युक्त चैतत् । स्वशाखाविहितज्ञानस्य स्वाध्यायाध्ययनजनितस्य धर्माङ्गत्वात् तत्संभवे इतरस्यानाक्षेपात् । स्वशाखाविहित विरुद्धैकदेशानुष्ठानेनापि च साद्गुण्यसंभवात् । स्वशाखाऽविहितविरुद्धैकदेशस्य ज्ञान शाखान्तराध्ययनजनितमपि धर्मेण साद्गुण्याय आक्षिप्यते एव । एतन्न्यायमूलकमेवेद भविष्यत्पुराणवचन ‘यत्नाम्नात स्वशाखाया पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिक यथा ॥ ’ इति । वाल पृ ९१

● शाखान्तराधिकरणन्यायेन गृह्यगतपार्वण स्थालीपाकानामभेदेऽपि पूर्वपक्षे तदङ्गपु विधिपाठव्यवस्थया व्यवस्थितमन्त्रकल्पनस्य पुरुषार्थेष्विव अवर्जनीयत्वात् न्यायसुधोक्तमयुक्तम । कौ १।२।७।१५. ● ( ‘ अग्निर्मूर्धा दिवः ककुत् ’ ‘ अग्नि मुग्धे मेधपतिभ्या मेधवत्य ’ इत्यत्र ) न तावदत्र शाखाभेदेन मन्त्रभेद एकदेशैकरूप्येऽपि शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञानेन तदेकत्वावगते । भाट्ट. ९।३।१२.

● शाखान्तराधिकरणसमाप्तौ ‘ अपि वा क्रम संयोगात् विधिपृथक्त्वमेकस्या व्यवतिष्ठेत ’ ( २।४।२।२२ ) इति सूत्रेण क्रमकालपरिमाणविरोधात् शाखान्तरीयपदार्थानुपसंहारमाशङ्क्य ‘ विरोधेनार्थसंयोगादेकधर्म्ये तत्संयोगाद् विधीना सर्वप्रत्यय ’ ( ‘विरोधिनात्वसंयोगादेककर्म्ये तत्संयोगात् विधीनां सर्वकर्मप्रत्ययः स्यात्’ इति भा–पाठ ) इति सूत्रेण पदार्थाना क्रमादिबाधकत्व वक्ष्यते । सु पृ. १७८.

● शाखान्तराधिकरणसिद्धसर्वाङ्गोपसंहारानुकल्प विधि ‘ बहल्प वा स्वगृह्योक्त यस्य यावत् प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्व कृतो भवेत् ॥’ इति । अत्र गृह्यसूत्रस्य स्वशब्देन विशेषणात् पारम्पर्यागत–एकगृह्यसूत्राध्ययन–नियमप्रतीते. । कौ. १।३।६।१२.

● शाखान्तराध्ययन तावदेकस्य पुंसो नैवेष्यते । किं कारणम् ? ‘ स्वाध्यायग्रहणे नैका शाखा हि परिगृह्यते ’ यथैव आकृति प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्व एकैकस्या शाखायाम् । अतश्च ‘ स्वाध्यायोऽध्येतव्य ’ इति धर्मावबोधन प्रति उपादीयमानत्वात् विवक्षितैकत्वेनैका शाखाऽध्येतव्या । ननु एव वेदान्तरस्यापि अध्ययन न प्रसज्यते । न । वचनान्तरेण प्रतिप्रसवात् । ‘ अनया मय्या विशया ’ इति । तथा ‘ वेदानधीत्य वेदौ वा ’ इति मानवम् । साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारित समुच्चय अवगम्यते । साकाङ्क्षत्वादेव च एकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम् । वा २।८।२।१ । न हि कश्चित् द्वे शाखे अधीते । ‘ संप्रदायागता मुक्त्वा स्वा समाख्यानिबन्धिनीम् । शाखा शाखान्तर युक्त नाध्येतु सदृशे श्रमे ॥ ’ इति यथावस्थितशाखाध्ययनमेव । २।४।२।१६ । ( अत्र सूत्र ) ‘ वाक्यासमवायात् ’ । नैकस्मिन् पुरुषे शाखान्तरवाक्य समवैति । २।४।२।१७.

● शाखान्तरोच्छेद । ‘ न च शाखान्तरोच्छेद कदाचिदपि विद्यते । प्रागुक्ताद् वेदनित्यत्वात् न चैषा दृष्टमूलता ॥ ’ वा. १।३।२।८ पृ १९५.

● 'कस्मादारनुवादत्नमापन्न परिशेषव । न च शाखान्तरन्याय( २।४।२ )स्तुल्याध्येतृकत्वाच्चात् ॥' वा १।३।६।१३ पृ २४१ ● शाखान्तरन्यायेन ( २।४।२।८–३३ ) एक एव विश्वजित् वाक्यद्वयेन विधीयते इति न आपूरणविश्वजित अस्य ( साम्पुत्थानविश्वजित ) भेद । भाट्ट ६।७।७ ● शाखान्तरन्यायेन पार्वणश्राद्धीपाकादीनां अभेदा वगमात् सर्वविषयत्वमनीति । कौ १।३।७।१५, ● अध्ययनस्य उपनयनादीनां च शाखान्तरन्यायेनैव अभेदावगमात् तदङ्गानामपि सर्वपुरुषसाधारण्योपपत्ति । १।३।७।१५, ● उपनयनादीनां तदङ्गानां च शाखास्वरूपे आनर्थक्येन अध्ययने एव अविघ्न निर्वर्त्यत्वेन उपयोगस्य द्वादशे वक्ष्यमाणत्वात् तस्य (अध्ययनविधेः) शाखान्तरन्यायेन एकत्वावगमेन भेदेनाऽप्रतिहतायोग । १।३।७।१५

● वाक्यभेदे— नामादीनामुपस्थापकानां अभावेन शाखान्तरन्यायाभावश्च मैत्रायणीयशाखायाम् । भाट्ट २।४।१५.

● 'बहुरूप वा स्वधन्नोज' इत्यस्य शाखान्तरन्यायसिद्धसर्वशाखोपसंहारप्रवृत्तौ अनुकल्पत्वेन स्वधन्नोजमात्रानुष्ठानबोधकत्वम् । कौ. १।३।७।१९

● शाखान्तरीयस्यापि उपसंहारेण एकाकाङ्क्षोपपत्तौ वाक्यभेदविरन्ययोरन्यायत्वम् । सङ्कर्ष. २।४।२९.

● शाखार्थमेव छेदन वाक्यात्, न उपवेषार्थम् । वा ४।२।३।८.

● शाखाहरण गवां प्रस्थापन गवां प्रस्तावन इत्येव मादय सान्नाय्यधर्माः । भा ३।११।४।७, ● शाखाहरण दोहधर्म । ३।६।८।२८. ● शाखाहरणं नास्ति सान्नाय्यरहितस्य । वि. ६।४।१४.

● शाखाहरणादय दध्नो धर्माः पूर्व पठिताः, पश्चादाग्नेयस्य निर्वापादय, याज्यानुवाक्ययोस्तु विपरीत पाठ । तत्र मुख्यक्रमेण ग्रहस्य प्रथममभिघारण पश्चा द्दन । भाट्ट. ५।१।७. ● शाखाऽऽहरणादयो धर्मा दोहद्वयार्था एव, न केवल सायंदोहार्था । ३।६।८। २८–२९. मीको. पृ. २०२३ 'दर्शे शाखाऽऽहरणादयो धर्मा.॰' इत्यत्र अधिकरण द्रष्टव्यम् । ● शाखाहरणादे उभयदोहसंयुक्तस्य वचनात् पूर्वेद्यु करण न दध्यर्थत्वात् । वा ३।६।८।२९.

शाखाचन्द्रन्यायः । यथा शुक्लद्वितीयाचन्द्र दिदर्शयिषुरास आदौ दिगन्तर्गतनक्षत्रादिभ्यो दृष्टि वारयितु 'शाखाया चन्द्र' इत्यधिकरणत्वेन सन्धिविशेषेणादौ शाखायामुपलक्षणमुपादत्ते, ततश्च दिगन्तरव्यावृत्तचक्षुषश्चन्द्रसमीपवर्तितारकादिषु चन्द्रभ्रमो मा भूदिति तत्स्वरूप प्रकृष्टप्रकाशात्मक बोधयतीत्येव हि साऽपधी सुखेन चन्द्र पश्यतीति । तथा 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिषु ब्रह्मशब्दस्यानेकत्र दर्शनात् मुमुक्षुभिर्ज्ञेय ब्रह्म, तच्च किमिति जिज्ञासाया जगत्कारणत्वोपन्यासेन येषु जीवादिषु जगत्कारणत्व न सम्भवति, तेषा व्युदासाभावात्, तेभ्यो व्यावृत्तबुद्धेः प्रधानादिषु ब्रह्मत्व भ्रममपनेतु स्वरूपलक्षणमुपन्यस्यते इति । साहस्री. ४९

● शाखाच्छेदे करणमन्त्र 'इषे त्वा' इति । वि १२।३।१०.

● शाखाच्छेदनस्य उपवेषो न प्रयोजक शाखा मनुनिष्पादी हि स । दर्शपूर्णमासयो । ८।२।३।८–९ ● शाखाच्छेदनस्य वत्सापाकरणमेव प्रयोजक न तु प्रस्तरेण सह प्रहरण प्रयोजकम् । वि ७।१।१ (प्रस्तावे)

● शाखाच्छेदनाहरणपरिवासनानि अग्रार्थ न तु मूलार्थं दर्शपूर्णमासयो । ४।२।३।८–९. ● शाखाच्छेदन–आहरण–परिवासनादीनां अग्र मूल चेत्युभय प्रयोजकम् । शाखाशब्द अग्रमूलोभयवाची । परिवासनस्यैव वा अग्र मूलमित्युभय तत्रत्य प्रयोजक इति पूर्वपक्ष । शाखाशब्द अग्रमात्रवाची । परिवासन शाखामस्कार । न तु अग्रमूलोभयसंस्कार । उपवेष परिवासनानुनिष्पन्न । मूल छेदनादीनां न प्रयोजक इति सिद्धान्त दर्शपूर्णमासयो । भाट्ट ४।२।३

● शाखाप्रहरण दर्शे प्रस्तरप्रहरणकाले । ६।४। १४।४४–४८ मीको पृ २०२८ 'दर्शे शाखाप्रहरण प्रस्तरप्रहरणकाले' इत्यत्र अधिकरण द्रष्टव्यम् । ● शाखा

● शुचिदेवताके हविषि आग्नेयपुरोडाशधर्माणा-मतिदेशः । वि. ८।३।१.

● शुचिदेवत्ये आग्नेयस्य विध्यन्तः हविर्गणे । ८।३।१।१-२.

❖ शुद्धोदलवणन्यायः । उक्तं च महोपनिषदि-'यथा पक्षी च सूत्रं च नानावृक्षरसा यथा । यथा नद्यः समुद्राश्च शुद्धोदलवणे यथा ॥ चोरापहार्यौ च यथा यथा पुंविषयावपि । तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥' साहस्री. ८१९.

● शुद्धक्रतुधर्मत्वं नाम प्रतिपदस्य, क्रतुगत-वैगुण्यापादकक्रियाविषयत्वम् । भाट्ट. ३।४।८.

● शुद्धत्वम् । 'पापक्षयो हि शुद्धत्वं धर्मयोग्यत्वमेव वा ।' वा. १।३।२।८ पृ. १८९.

● शुनःकर्णो नाम अग्निष्टोमः । सर्वस्वारे द्रष्टव्यम् । तत्र यजमानमरणेऽपि कर्म समापयितव्यम् । भा. १०।२।२३।५७.

● शुनकानां नाराशंसो द्वितीयः प्रयाजः । भा. ६।६।१।१.

● शुनकगोत्रीयाणां नाराशंसो द्वितीयः प्रयाजः । नि. ६।६।१, वा. १।३।७।१७.

● शुनकभृगुवसिष्ठानां सत्राधिकारो नास्ति, विश्वामित्रसमानकल्पत्वाभावात् । वि. ६।६।४.

● शुनासीरीयं नाम चातुर्मास्येषु चतुर्थं पर्व । वि. ७।१।३ । तत्र 'एतद्ब्राह्मणान्येव पञ्च हवींषि' (तैब्रा. १।७।१) वैश्वदेवपर्वणि यानि आदितः पञ्च हवींषि तान्येव शुनासीरीयेऽपि आदितः पञ्च हवींषि- १ 'आग्नेयमष्टाकपालं निर्वपति, २ सौम्यं चरुम्, ३ सावित्रं द्वादशकपालम्, ४ सारस्वतं चरुम्, ५ पौष्णं चरुम्' (तैसं. १।८।२) इति । तदुत्तरं विशेषः - 'ऐन्द्राग्नं द्वादशकपालम्, वैश्वदेवं चरुम्, इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम्, वायव्यं पयः, सौर्यमेककपालम्, द्वादशगवं सीरं दक्षिणा' (तैसं. १।८।७) इत्येकः कल्पः । कल्पान्तरं तु वैश्वदेवपर्वगतानि तान्येव पञ्च । तदुत्तरं च त्रीण्येव हवींषि न पूर्वकल्पवत् पञ्च । तानि च त्रीणि 'अथे-न्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति ।... वायव्यं पयो भवति ।... सौर्य एककपालो भवति' इति (तैब्रा. १।७।१) इति सायणभाष्य (तैसं. १।८।७) । ● शुनासीरीये पर्वणि नोत्तरवेदिमुप-वपन्ति । भा. ७।३।८।२०.

● 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः साना-य्यपात्रशोधने विनियुज्यते, सन्निधिपाठात् । वि. ३।३।५.

● शुष्केष्टिः । साङ्गप्रधानप्रयोगप्रक्रमे वैकल्पिका-ङ्गानवधारणात् कस्यचित् प्रयोगस्य निरूपितैकरूपस्य उपक्रमपूर्वसमाप्त्यसिद्धेः 'इदं कुर्यामिदं वा' इति च प्रयोगमध्ये दोलायमानमतेः कालविक्षेपात् प्रयोग-नैपुण्यासिद्धेः प्रयोगपाटवभावार्थं शुष्केष्टिः क्रियते । कु. पृ. ८९६.

● शुष्केष्टिन्यायः । उपाध्यायाः दर्शेष्ट्यादि शिक्षयन्तः प्रत्यक्षाग्निहविरादिवर्जं इष्टिप्रयोगं छात्रान् शिक्षयन्ति सा पद्धतिः । हविरग्न्यादिरहितं शुष्कत्वम् । वि. १।२।२.

● शुष्केष्टिवत् । तद्यथा, छात्र शुष्केष्टीः प्रयुङ्क्ते, प्रयोगे प्राप्तकर्मा भविताऽस्मीति । भा.९।२।१।१३.

❖ शूकरवाटिकान्याय । यथा शूकरः पुष्पिता पुष्पवाटिका प्रविश्य तत्रत्यविविधानि सुरभीणि तत्रत्य पुष्पाणि परित्यज्य विष्ठामेव चिनुते, तथैव खलः सता गुणसमुदायमुपेक्ष्य केवलच्छिद्रमन्वेषयतीति संक्षेपः । साहस्री. ५१८.

● शूद्रः । असौ तस्मै नैवाग्निकायोपनतः 'इम शुश्रूषमाणो धर्मेण संवत्स्ये' इति । सोऽन्यस्मै दीयमानो नेच्छेदपि । न चानिच्छतस्तस्य स प्रभवति । न च स्यात् स्वीकर्तव्य । यस्तु न्यायेन स्वीकुर्यात् स दद्यादपि । धर्मोपनतमात्रेण तु न शक्यो दातुम् । भा.६।७।५।६.

❖ शूद्रश्च धर्मशास्त्रत्वात् । ६।७।५।६॥

विश्वजिति सर्वस्वं यथा अविद्यमानं न देयं तथा धर्मार्थमुपनतः शूद्रोऽपि न देयः इति चशब्दार्थः । 'इम द्विज शुश्रूषमाणो धर्मेण संवत्स्ये' इति हेतुना उपनतः शूद्रः विश्वजिति न देयः । धर्मशास्त्रत्वात्

धर्मशासनेन निमित्तेन उपनतत्वात् । गर्भदासस्तु देयः । के.

० शूद्रः चतुर्थवर्णः । सु पृ १७२ ० शूद्रः धर्मार्थसेवकः सन् विश्वजिति न देयः । ६।७।५।६ मीको पृ ३६८८ ' विश्वजिति धर्मार्थसेवकः शूद्रो न देयः ' इत्यत्र अधिकरणं द्रष्टव्यम् । ० शूद्रो हि असमर्थत्वात् प्रतिषिद्धः आधाने । भा ६।१।१२।४५. ० यः शूद्रः विहितं स्वधर्ममवगत्य सेवते तस्मिन् विप्रादेः स्वत्वं नास्ति, इति सर्वस्वदाने तादृशः शूद्रो दातुं न शक्यते । नि ६।७।५. ० वेदाभावादसमर्थः शूद्रो यष्टुम् । भा ६।१।७।३३. ० शूद्रा द्विविधाः गर्भदासास्तद्भिन्नाश्चेति । तत्र गर्भदासा ब्राह्मणादीनां स्वम्, तेषां दानादि कर्तुं शक्यते । नि ६।७।५ ० ' शूद्रेणाधिगतात् ( वेदात् ) वाऽपि धर्मज्ञानं न सम्मतम् । तथाऽनिन्द्रातवेदोक्तमर्यादाव्यवहारिणाम् । संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥ ' वा १।३।३।७ पृ २०३ ० ' शूद्रेण नाध्येतव्यम् ' इति प्रतिषिद्धमस्याध्ययनम् । भा ६।१।७।३७, ० शूद्रात् असत्प्रसादात् पापकर्मणः कृतः प्रतिग्रहः दोषाय ( भवति ) । ३।४।१०।२८ ० शूद्रस्य अध्ययनं नास्ति किंतु त्रैवर्णिकानामेव । वि ६।१।७ ० शूद्रस्य अध्ययनविधिसिद्धज्ञानाभावात् आधानसिद्धाग्न्यभावाच्च न यागादौ अधिकारः । मीन्या ० शूद्रस्यापि विद्याधिकाररहितेषु सर्वेषु वैदिककर्मसु अधिकारः इति बादरिमतम् ( परंतु नासौ सिद्धान्तः )। भा ६।१।७।२७, ० शूद्रस्य आधाने श्रुतिर्नास्ति इति अनग्निः शूद्रः असमर्थः अग्निहोत्रादि निर्वर्तयितुम् । ६।१।७।२६ ० शूद्रस्य द्रव्यार्जने सेवादिकमेव उपायः । उपायान्तरात् प्रत्यवायः । वि ४।१।२ वर्णक ४ ० शूद्रस्य न अत्र वेदाध्ययनमतः अवेदत्वात् असमर्थः शूद्रः ( वैदिककर्मणि ) । भा ६।१।७।३५ ० शूद्रस्य वैदिककर्मणि नाधिकारः । ६।१।७।२५–३८. मीको पृ ५०८ ' अपशूद्राधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । ० मन्त्रः शूद्रस्य ( सन्तम् )। भा ६।१।७।३१

० शूद्रादिः कथंचित् अनिच्छन् कार्यते ( शमिता इति शेषः ) । वा ३।७।१३।२९, ० शूद्रादिभ्यः लौकिकेऽपि उपादाने, दुष्यत्यपि प्रतिग्रहीतरि, दातृतद्द्वारेण अदुष्टत्वम् । ३।४।१०।२८ पृ ९९९ ० शूद्रादेः उपनीतकर्तृकाध्ययनजन्यार्थज्ञानरूपाङ्गसंपादनासमर्थस्य क्रतुषु नाधिकारः । मणि पृ ४. ० शूद्रादीनां उपनयनाभावात् विवाहावधि अभ्युत्थानादीनामाचाराणां अधिकारः, तस्य तत्स्थानत्वेन विधानात् । भाट्ट ६।२।६ ॥ शूद्रादीनां ' श्रावयेत् चतुरो वर्णान् ' इति पुराणश्रवणविधिना तज्जन्यार्थज्ञानसत्त्वात् मुक्तिसिद्धेः । मणि पृ ५८

० ' शूद्रानीते क्रयनीते धर्मं कुर्वन् पतत्यधः ' ( दर्भे ) । अयं प्रकृतौ विकृतौ उभयविधे च कर्मणि समानविधानः निषेधः । बाल पृ ३५

० यत्तु धर्मशास्त्रातिक्रमेण क्रियते न तस्य निमित्तत्वम् । यथा शूद्रकृतस्य आधानस्य न आहवनीयादिप्रयोगनिमित्तत्वम् । वा २।१।२।१ पृ ४८२

० शूद्रसमीपे नाध्येतव्यम् । ' पद्यु वा एतत् श्मशानं यच्छूद्रः । तस्माच्छूद्रसमीपे नाध्येयम् ' इति । भा ६।१।७।२८.

० शून्यवादः । अर्थज्ञानयोः आकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नः अर्थः रूप नाम न किंचिदस्ति इति पश्यामः इति । क्षणिका च बुद्धिः उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति चार्थान्तरं प्रदीपवत् इति । तत्र । भा ( वृत्तिग्रन्थः ) १।१।५।५ पृ ३१ ० शून्यवादः । एवं परोक्तानुमाने प्रत्यक्षविरोधेन निराकृते अधुना प्रत्यक्षस्य बहिः प्रवृत्तौ सामर्थ्यमेव नास्ति इत्येवं पूर्वोक्ताक्षेपेण स एव शून्यवादी पुनः प्रत्यवतिष्ठते । तन्निरासार्थं उत्तरो ग्रन्थः । वैद्यनाथ पृ ३०–३१

' एवमुक्तेऽनुमानस्य शास्त्राभिन्नस्य दूषणे । ज्ञानमर्त्यदृष्ट्या तु परः प्रत्यवतिष्ठते ॥ ' श्लोवा १ । प्रत्यक्षादिप्रमाणविरोधेन हि प्राक् अनुमानं निरस्तम् । तस्य च यदि प्रत्यक्षानुमानं न तद्विरोधोऽनुमानस्य

संभवति इति पूर्वोक्तविरोधपरिहारेण प्रत्यवस्थानं इति । ( शून्यवादे ) रत्नाकरः ।

भाष्यम्— शून्यस्तु कथम् । ( इदं नीलं इत्यादिरूपेण बहिरवभासमानस्य कथं ज्ञानाकारत्वं इति शून्यवादिनं पृच्छति ) । अर्थज्ञानयोः आकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतः तद्भिन्नं अर्थरूपं नाम न किञ्चिदस्ति इति पश्यामः ।

स्यादेतदेवं यदि अर्थाकारा बुद्धिः स्यात् । निराकारा तु नो बुद्धिः, आकारवान् बाह्योऽर्थः । स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया हि प्रत्यक्षबुद्धिः, न बुद्ध्यन्तरविषया । क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यत इति । ( शून्यवादी आह– ) उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति च अर्थान्तरं प्रदीपवदिति यद्युच्यते, ( सिद्धान्ती आह– ) तन्न । न हि अज्ञातेऽर्थे कश्चित् बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति ( ज्ञाततालिङ्गकानुमानात् ) । तत्र यौगपद्यम् अनुपपन्नम् ( अर्थ-ज्ञानयोः ग्रहणयौगपद्यम् ) । ( शून्यवादी आह– ) ननु उत्पद्यमानायामेव बुद्धौ ज्ञातोऽर्थः इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते, पश्चात् ज्ञातोऽर्थः । ( सिद्धान्ती स्वाशयमाह– ) सत्यम्, पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतत् यत् ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते । न च अर्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्न व्यपदेश्या बुद्धिः, अव्यपदेश्यं च न प्रत्यक्षम् । तस्मादप्रत्यक्षा बुद्धिः ।

अपि च साम्ये एकरूपत्वे बुद्धेरेवाभावः, नार्थस्य प्रत्यक्षस्य सतः । न च ऐकरूप्यम्, अनाकारामेव हि बुद्धिमनुमिमीमहे, साकारं चार्थं प्रत्यक्षमेवावगच्छामः । तस्मात् अर्थालम्बनः प्रत्ययः ।

अपि च नियतनिमित्तः वस्तुष्वेव उपादीयमानेषु घटप्रत्ययः । इतरथा वस्त्रादानेऽपि कदाचित् घटबुद्धिः अविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् । पृ. ३१-३५.

एवं प्रत्यक्षपरीक्षणे क्रियमाणे तस्य बहिःप्रवृत्तौ सामर्थ्यस्य सत्त्वात् तादृशबहिर्विषयविषयकप्रत्यक्षविरुद्धस्य बौद्धाभिमतस्य निरालम्बनत्वानुमानस्यैव अनुपपत्तेः यत्र प्रत्यये दुष्टं कारणम्, उत्तरकाले बाधकप्रत्ययो वा, तादृशप्रत्ययस्य असमीचीनत्वेऽपि यत्र तदुभयं नास्ति तादृशः समीचीनः प्रत्यक्षात्मकः प्रत्ययो न व्यभिचरत्येव इति न परीक्षितव्यमेव प्रत्यक्षम् । वैद्यनाथः पृ. ३८.

बृहती— ननु च 'शून्यस्तु' इति तेन निरालम्बनता उपन्यस्ता प्रत्ययस्य अर्थशून्यता वदता । निरस्ता च सा शुक्तिकारजतज्ञानतुल्यताभिधानेन । ( उत्तरम्– ) स एवाय निरासः पुनराक्षिप्यते । कथा शुष्कया । संवेद्यनिषेधात् संविदः । सा च आत्मनो वा ( धर्मः ), बुद्धेर्वा ( मनसः ), ज्ञाने एव वा ( अवस्थितो धर्मः ) । स एवास्या विषयो युक्तः । तस्मात् सा संवित् । एवं च स एव संवेद्यः इति प्राप्नोति । तस्मात् न विषयान्तरं संवेदयितुं क्षमः ( आश्रयात् ) । शब्दस्पर्शरूपरसगन्धात्मकता निरात्मस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या । किं 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति ज्ञानशब्दः प्रदर्शनार्थं एवाभिप्रेतः ? न । संविदाधारे हि सर्वत्र ज्ञानमेवाक्षिप्यते, बुद्ध्यात्मनोः शब्दादितुल्यत्वात् । ज्ञानाभिन्ना च संवित् । सुषुप्त्यवस्थायां संविदः आत्मनि बुद्धौ चादर्शनात् । ज्ञानोपग्रहणतिर्हि स्यात् । तदिदमालोच्योक्तम् 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति ।

क पुनरिदं दृष्टं विषय एव संविदा संविद्यते इति । संवेद्यतयैव हि संवेद्यम् अवगच्छामः, न विषयतया । ( उत्तरम्– ) केन चोक्तं न संवेद्यतया संवेद्यता अवगम्यते इति । किन्तु संविदः प्रत्यक्षत्वात् तस्याश्च ज्ञानात्मकत्वात् शब्दादिरूपता तस्यैवेति मन्यामहे । को हि नाम द्वयोः प्रत्यक्षतामवकल्पयति संविदः शब्दादेश्च । तस्मात् संविद्रूपमेव इदं शब्दादिज्ञानं इति स्थितिः । न चात्र किञ्चन अस्तीति ।

ननु च अप्रत्यक्षा संवित् प्राप्नोति । शब्दाद्याकारत्वे

प्रमाणफलयोरस्वप्रतन्त्रात् । तदिदमाह– ' क्षणिका हि सा, न बुद्ध्यन्तरकालं अवस्थास्यते ' इति ।

अथायमभिप्रायः, स्वयं प्रमाणरूपत्वात् न प्रमाणान्तरमपेक्षते ज्ञानं इति । तदुक्तम् ' उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येत ' इति । सत्यम्, प्रमाणं प्रमाणान्तरं नापेक्षते प्रमितौ ( अर्थपरिच्छेदे । किंतु स्वरूपपरिच्छेदे प्रमाणमपि प्रमाणान्तरमपेक्षत एव ) । न च वयं प्रमाणतयैव विज्ञानीमः, तद्धेतुत्वात् विज्ञानस्य ( प्रतिपत्तिहेतुत्वात् ) । न च तदवस्थं ज्ञानं ज्ञेयतया ज्ञानान्तरस्यापि यद्गामः । किंतु तदवस्था तावदस्ति इति अनुमानस्य विषयः । नहि अवस्थाभावस्थाया अवस्थान्तरतोऽस्तित्वं शक्यते ज्ञातुम् । तदिदमुक्तम् ' नहि अज्ञातेऽर्थे कश्चित् बुद्धिमुपलभते, ज्ञाते त्वनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् ' इति । ननु च ज्ञातमिति प्रमेयमनुस्मरन्ति प्रमाणविदः । सत्यम्, ज्ञातं स्मरन्ति, न तु ज्ञातमिति (ज्ञानं प्रमेयं स्वरूपेण स्मरन्ति, न पुनर्ज्ञानविशिष्टम् ) । तदुक्तम् ' अर्थं पूर्वं बुद्धिरुपपद्यते, न तु पूर्वं ज्ञायते ' इति । ननु चेदं लोकविरुद्धम्, ज्ञातो घर्थ इति ( स्मरणं ) व्यपदिशन्ति, न घटोऽयमिति । स्यात् विरुद्धं यदि सर्वदैव व्यपदेशः स्यात् । ' भवति हि कदाचित् एतत्, यत् ज्ञातोऽर्थः सन् अज्ञात इत्युच्यते ( यदि प्रत्यक्षं ज्ञानं स्यात् तदा सर्वदैव ज्ञातत्वात् ज्ञानस्य ज्ञात इत्येव व्यपदेशः स्यात् । आनुमानिकत्वे तु ज्ञानस्य कदाचित् लिङ्गाननुसंधानात् तदज्ञात्वा भवेत् अव्यपदेशः । कदाचित् लिङ्गानुसंधानात् ज्ञान ज्ञात्वा भवेत् व्यपदेशः इत्युपपन्नम् ) । यत्र हि ज्ञात इति स्मृतिः सा प्रमाणद्वयव्यापारजा । तस्मात् विवेकशून्यमिदं वचः ' स्मृतेरुत्तरकालं च ' इति ( दिङ्नागस्य वचः ' स्मृतेरुत्तरकालं च न ह्यसावविभाविनः ' इति ) ।

किंच उभयोः ( अर्थज्ञानयोः ) प्रत्यक्षत्वे अर्थेन ज्ञानस्य व्यपदेशो नोपपद्यते रूपस्पर्शयोरिव । न च अर्थव्यपदेशमन्तरेण बुद्धेः स्वोपलम्भनम् । तस्मात् बुद्धिविषयं प्रत्यक्षम् । अर्थविषयं हि तत् । अतः सिद्धं आनुमानिकत्वं बुद्धेः फलतः । यत्रासौ अविवेकः फलप्रमेययोः प्रमाणान्तराभावात् अतद्विषयो युक्तः । अतः प्रमाणापलाप एव न्याय्यो न प्रमेयापलापः । ' अतः कामम् एकरूपत्वे बुद्धेरेवाभावो न तु अर्थस्य प्रत्यक्षस्य सतः । न चैकरूप्यम् । निराकारामेव हि बुद्धिमनुमिमीमहे, साकारं च अर्थं प्रत्यक्षमवगच्छामः । तस्मात् अर्थालम्बनः प्रत्ययः ' ।

किं पुनः कारणम्, तुल्ये फलापलापे प्रमाणस्यैवापलापः, न तु अर्थस्य प्रमेयस्य, उभयोः फलायत्तत्वात् । मैवम् । उत्पत्तौ हि उभयोः फलायत्तता, न पुनः प्रमितौ । (प्रमाणप्रमेययोः करणकर्मकारकयोः फलोत्पत्तिनिबन्धना कारकतोत्पत्तिः । प्रमितिस्तु प्रमेयस्य प्रत्यक्षतः फलनिरपेक्षा । प्रमाणस्य च आनुमानिकत्वात् फलायत्तैवेति ) । कस्योत्पत्तौ ? ज्ञापके हि फले, प्रमेयमेव ज्ञेयं नोत्पाद्यम् । प्रमाणायत्ता च प्रमितिः इति उत्पत्तौ इत्यसंबद्धम् । ( उच्यते– ) प्रमितौ हि क्रियाकारकत्वमङ्गीकृत्य उत्पत्तिरुक्ता, नावगम्यमानताम् । ज्ञाने तु अवगम्यमानताऽपि फलायत्तैवेति युक्तम् ।

किंच ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावः, न ज्ञानस्य ज्ञानान्तरेण । अतः तन्तूपादानेऽपि पटज्ञानोत्पादो नोपपद्यते । ' दृष्टश्च नियतनिमित्तः तन्तुष्वेव उपादीयमानेषु पटप्रत्ययः । इतरथा हि तन्तूपादानेऽपि कदाचित् घटबुद्धिः अविकलेन्द्रियस्य स्यात् ' । तस्मात् वासनानिबन्धनमेवेदं ज्ञानजालम् । किं तर्हि ? अर्थनिबन्धनं इति स्थितम् । अत उपपन्नं प्रमाणलक्षणाभिधानम् ( बहिरर्थस्य सद्भावात् इन्द्रियार्थसंनिकर्षस्य संभवात् प्रत्यक्षस्य प्रमाणस्य लक्षणमिति ) । बृहती. पृ. ५७–६१.

* शून्यवादे संविद्रताः नीलाद्याकाराः सन्ति । वाल. पृ. ६.

* शून्यवाददूषणमपि औत्पत्तिकसूत्रे एव भाष्ये उक्तम् । वाल. पृ. ६.

* शून्यवादी नामरूपप्रपञ्चस्य असद्भावे प्रतिजानीते । तस्य प्रत्यक्षविरोधः । रत्नाकरः श्लोवा. ५९ अनुमानपरिच्छेदे पृ. ३६५. * शून्यवादी ( विज्ञान-

मात्रवादी योगाचार )। शून्यवादी तु न ज्ञानातिरिक्तो बाह्यो विषयोऽस्ति । ज्ञानस्यैवाकारो विषयो ज्ञानस्वरूपात्मक एव, स्वप्नज्ञानवत् । तेन सविकल्पक न प्रमा । तथाहि, नीलादे किं ज्ञानविषयत्वम् ? न तावत् पदार्थान्तरत्वम् सत्तासंबन्ध वा, नीलज्ञाने पीतादेरपि विषयत्वप्रसङ्गात् । न वा ज्ञानहेतुत्वम्, इन्द्रियादेरपि तत्वप्रसङ्गात् । नापि ज्ञानजनकत्वे सति निरूपकत्वम्, रूपज्ञाने स्पर्शस्य विषयत्वापत्ते । नापि सादृश्यविशिष्ट हेतुत्वम्, विशेषणज्ञानस्य ज्ञानान्तरेण सादृश्यात् हेतुत्वाच्च विशिष्टज्ञाने विषयत्वप्रसङ्गात् ।

न च अत्र तत्सादृश्य विवक्षितम्, तच्च न ज्ञानत्वेन, तस्य साधारणत्वात् । किंतु एकज्ञानविषयत्वेन । तच्च त्रिपुटीप्रत्यक्षाङ्गीकारेण ज्ञाननीलयो एकज्ञान विषयत्वात् हेतुत्वाच्च उपपन्नं विषयत्वं इति वाच्यम् । धारावाहिकज्ञानेषु पूर्वज्ञानस्य सादृश्येन उत्तरज्ञाने विषयत्वापत्ते । ज्ञानस्य स्वस्मिन् स्वस्य हेतुत्वासंभवेन विषयत्वानुपपत्तेश्च ।

न च ज्ञान नीलाद्याकारताप्रयोजकत्वे सति हेतुत्वम्, तच्च जपाकुसुमस्येव सन्निधिना इति वाच्यम् । विषयस्य नीलाद्याकारताप्रयोजकत्वे मानाभावात् ।

ज्ञानैकविषय मानं इति चेत्, न, अर्थं विनाऽपि स्वप्नज्ञानेऽपि तद्दर्शनात् ।

नापि ज्ञानजन्यघटाद्याहानादि व्यवहारविषयत्वम् (ज्ञानविषयत्वं), घटज्ञाने घटस्थगुणानां विषयत्वापत्ते, सुखादीनां स्वज्ञानाविषयत्वापत्तेश्च । न च सुखादिषु 'सुखी' इत्यादिशब्दप्रयोगो व्यवहार इति वाच्यम् । शब्दप्रयोगस्य ज्ञानविषयनिरूपकत्वाभावात् । ज्ञानविषयनिरूपकत्वे शब्दप्रयोगस्य, तत्र विषयनिरूपणे इतरेतराश्रयापत्ति ।

नापि ज्ञानजन्यज्ञातताश्रयत्वं तत्, अनुमानविषयो तदसंभवात्, तत्र मानाभावाच्च ।

अतो ज्ञानाकारत्वमेव तत् (विषयत्वम्) ।

किंच विषयो ज्ञानात्मक, ज्ञानेन सह उपलभ्यमानत्वात्, ज्ञानवत् । सहोपलभ्यमानयोर्घटपटयो भेददर्शनं भ्रान्तम् ।

न च 'घटोऽयम्' इति ज्ञानस्य ज्ञानाविषयत्वेन असिद्ध सहोपलम्भ इति वाच्यम् । उत्तरकाले 'ज्ञातो घट' इति ज्ञानघटयो स्मरणदर्शनेन पूर्वानुभवस्य आवश्यकतया 'घटोऽयम्' इति ज्ञानस्य ज्ञानविषयत्वकल्पनात् ।

स्वप्नादिज्ञानानां साकारत्वमिव सर्वेषां साकारत्वेन ज्ञानातिरिक्तविषयाभाव इति स्वमत परिष्करोति । (वस्तुतो नेदं मतं शून्यवादिन । किंतु विज्ञानमात्रवादिन योगाचार ) ।

तच्चिन्त्यम् । नीलादेर्ज्ञानात्मकत्वे ज्ञानस्य स्वविषयाकारत्वे मानाभावात् । उक्तानुमानस्य अप्रयोजकत्वात् । समूहालम्बने सहोपलभ्यमानयोर्घटपटयो अभेदाभावेन व्यभिचाराच्च ।

किंच न ज्ञानात्मको विषय । ज्ञानाभावविषयके ज्ञाने ज्ञानाभावस्य ज्ञानात्मकत्वासंभवात्, 'तदेवेदं' इति स्थायित्वविषयके ज्ञाने स्थायित्वस्य क्षणिकज्ञानात्मकत्वासंभवात्, 'इदं नानाकारं' इति विषयबुद्धौ अनेकाकारस्य एकस्मिन् असंभवाच्च ।

किंच विषयस्य ज्ञानात्मकत्वे ज्ञानात्मकत्वज्ञानस्य अपरोक्षत्वनियमेन अनुमितिविषयवह्न्यादे परोक्षतानुपपत्ति ।

किंच अतीतकालसंबन्धानुमानविषयस्य अतीतकालसंबन्धस्य वर्तमानज्ञानात्मकत्वानुपपत्ति ।

न च तत्रातीत ज्ञानमेव विषय इति वाच्यम् । अतीतत्वस्य ज्ञानाकारत्वासंभवात् ।

अत अवश्य ज्ञानभिन्नो विषयो वाच्य । तस्मिंश्च विषयत्व ज्ञानाश्रयस्वभावविशेष निरूपकतिरिक्त वा इत्युक्त प्राक् ।

न च स्वप्नदृष्टान्तो युज्यते, तस्यापि पदार्थविषयत्वात् ।

तेन अनुभूयमानानां पदार्थानां असत्त्वासंभवात् तद्विषयकज्ञानं न मिथ्याज्ञानम् । किंतु शून्यवादिमतं बाधितम् । मणि पृ २८–२९

卐 शूरा हि प्रणतिप्रिया इति न्याय । स्प० । साहस्री ९८२

■ शूर्पं क्वचित् होमसाधन (यथा विवाहे लाजहोमे) 'शूर्पेण विविनक्ति' इति च । चि १।२।३, ● शूर्पं यज्ञायुधम् । 'यज्ञायुधानि संभरति' 'शूर्पेण विविनक्ति' इति । ३।१।१ ● शूर्पं चमसूखे नानाबीजेष्टौ तन्त्रेणैकम् । टुप् ५।२।७।१३. ● 'शूर्पेण जुहोति' अत्र न शूर्पंसयुक्तो होम किंतु पूर्वप्रयुक्त चातुर्मास्य-वरुणप्रघासेषु । भा ९।१।५।११-१९, ● 'शूर्पेण जुहोति, तेन हि अन्न क्रियते' इत्यादे हेतुवन्निगदाना किं स्तुति कार्ये उत हेतु इति संदेहे स्तुतिरेव कार्ये इति सिद्धान्त । हेतुवन्निगदाधिकरणम् । १।२।३। २६-३० ● 'शूर्पेण जुहोति तेन ह्यन्न क्रियते' एतादृशा अर्थवादा अपि साधका एवेति मते प्रमाणम् । नि १।२।३.

● शूर्पाधिकरणम् । १।२।३।२६-३०. 'हेतुवन्निगदाधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् ।

卐 शूर्पन्याय । यथा शूर्पो हि तुषादि त्यक्त्वा शुद्धमन्नमवशेषयति, तथा शिष्यो हि गुरुणा गुणानेव गृह्णाति, न तु दोषान् । साहस्री ३२१ ● शूर्पन्याय । य सदा गुणानेव गृह्णाति स एव शिष्यत्वेन स्वीकार्य । शूर्पं हि तुषादि त्यक्त्वा शुद्धमेव धान्यमवशेषयति । समह

● शूलस्त्र अग्नीषोमीयादिपशुन्याय । सकर्प. २।२।१ मीको पृ १११ 'अग्नीषोमीयादिपशुनथार्थं शूलस्तम्' इत्यत्र अधिकरण द्रष्टव्यम् । ● शूलस्य तन्त्र ऐकादशिनेषु पशुषु सजातीयेषु । ११।४।१। ३४-३९ मीको पृ १३०६ 'ऐकादशिनेषु पशुषु०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● शूल-कुम्भी-वपाश्रपणीना तन्त्र न नाना जातीयेषु पशुषु पाकभेदस्यात् । ११।४।१०।४०-४१ मीको पृ १९३९ 'तन्त्र न कुम्भीशूलवपाश्रपणीना०' इत्यत्र अधिकरण द्रष्टव्यम् । ■ शूल-कुम्भी-वपाश्रपणीना तन्त्र वाजपेयगतप्राजापत्यपदपशुषुदिकरणार्थम् । ११।४।८।३३. मीको. पृ १९३५ 'तन्त्र कुम्भीशूलवपाश्रपणीना०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● शृङ्गग्राहिका । इत्यपदस्य दध्यादिवल्लोकप्रसिद्ध-समासस्य उत्पत्तिविध्यनपेक्षतया मानविनियोगपरत्व स्यैव युक्तत्वात् । अस्तु वा उत्पत्त्यपेक्षा तथापि शृङ्ग-ग्राहिकया विनियोगबलादेव उत्पत्तरपि सिद्धे । सोम ९।१।१६

卐 शृङ्गग्राहिकान्याय । शृङ्गस्य ग्रहण यस्या क्रियाया सा शृङ्गग्राहिका । यत्रैकाङ्गलग्नेनैवाङ्गी लभ्यते, तत्राय प्रवर्तते । यथा– गोसघे का मदीया गौरिति गोप पृष्ट , शृङ्ग गृहीत्वा [illegible] प्रदर्शयति, इय वै गौरिति । यथा च महाभारते (उद्योगपर्व ४५ अ० ९ श्लो० टी० ) दमविरोधिन एव प्रातिकूल्यादयो मददोप-त्वेन सूचिता अपि शृङ्गग्राहिकया प्रथपण विधिमुखेन न ओक्ता इत्यर्थ इत्युक्तम् । साहस्री ७४८

● शृतम् । धर्माधिक[illegible] शृतमित्युच्यते । श्रपणेन च सहचरिता धर्मा यस्मिन् परवापाकरणादय विद्यन्ते तदिद शृतसहचरितधर्मक पय । टुप् ३।५।१।१ ● 'शृते चरु' इति चत्राभ्युदितेष्टौ । तत्र शृते पयसि इत्यार्था पयोधर्मा कर्तव्या । भा ९।४।१०। ४१-४२, ● 'शृते चरु' इति पशुसमेष्टौ । तत्र पयसि प्रदेयधर्मा न भवेयु । ९।४।११।४३-४४, ● शृते चरु दध्यन्त इति प्रदानार्थे दधिशृते प्रणीतासार्थे कुर्वति इति धर्मयुज्येते । १०।१।९।२०, ● शृते दधनि च प्रदानधर्मानुष्ठान पशुकामेष्टौ । ९।४।११।४३-४४, ● शृते दधनि च प्रदानधर्मा-नुष्ठानमभ्युदितेष्टौ । ९।४।१०।४१-४२, ● शृते प्रणीताधर्मा कर्तव्या अभ्युदयेष्टौ ९।२।१४।४४-४५.

卐 शेषोऽप्रकरणेऽविशेषात् सर्वकर्मणाम् । ३।४।९।२५॥

'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्, राष्ट्रभृतो जुहोति, अभ्यातानान् जुहोति' इति कामसयुक्ता होमा श्रुता । ते किं सवकर्मणा कृष्यादीनामपि शेषभूता उत वैदिकाना अग्निहोत्रादीना इति विचारे पूर्वपक्ष

■ शेषः परार्थत्वात् । ३।१।२।२ ॥

अत्र सूत्रे शेषलक्षण अर्थात् श्रुत्या च शेषपदवाच्यतावच्छेदकमुच्यते । परार्थत्वात् शेषः । परार्थत्वं शेषपदवाच्यतावच्छेदकम् । तदेव च शेषलक्षणम् । परः अन्यः अर्थः प्रयोजनमुद्देश्यः यस्य इति बहुव्रीहिः । के.

● 'शेषः परार्थत्वात्' । ( ३।१।२।२ ) इत्यत्र प्रमाणं विना पारार्थ्यस्य वक्तुमशक्यत्वात् मुख्यादिकमपि प्रमाणमुपक्षिप्तम् । तत्र च श्रुतिवाक्ययोः लिङ्गस्य च तद्भूताधिकरणे ( १-१-७ ) सामर्थ्याधिकरणे च ( १-४-१५ ) स्वरूपेण विनियोजकत्वस्य उक्तत्वात् अङ्गाङ्गितयोः अवच्छेदकमात्रं निरूपितम् । कौ. ३।१। ४।११ पृ. ३१९. ● शेषः फलं पुरुषस्य । भाट्ट. ३।१।१२. ● शेषः वैदिककर्मणामनारभ्यश्रुता जयादिहोमा राष्ट्रभृद्धोमाश्च । वि. ३।४।१३. ● कदाचमात्रिनेन तावत् यो येन विना न भवति स तस्य शेषः । तद्यथा— अङ्कुरः तोयादिभिर्विना न भवति, घटश्च मृत्पिण्डदण्डचक्रादिभिः इति तयोस्तानि शेषत्वेन ज्ञायन्ते इति केचित् । तन्न, व्यभिचारात् । 'स्वामिना च विना दासा न भवन्ति कदाचन । तथा गृहाद्यन्तेवा, शेषः स्वामी च नेष्यते ॥' वा. ३।१।२।२ पृ. ६५४. ● न च य उपकरोति स शेषः । यस्तु यदर्थः श्रूयते स शेषः इत्युक्तं 'शेषः परार्थत्वात्' इति ( ३।१।२।२ ) । भा. ४।१।१।१ वर्णक २. ● नहि शेषमाश्रितः शेषः । किं तर्हि ? उपकारिणमाश्रितः उपकरोति, इति सर्वत्र स्थापयिष्यामः । शेषत्व तु श्रुत्यादिप्रमाणकमेव भविष्यति । वा. ३।१।७।१४ पृ. ७१६, ● 'यदीयो यस्य यस्याम शेष इति निश्चयः' । इति केचित्, तदपि न, 'लक्ष्यलक्षणयोर्दृष्टो व्यभिचारो द्वयोरपि ॥' ३।१।२।२ पृ ६५६. ● यः परस्योपकारे वर्तते स शेष इत्युच्यते । तद्यथा — ये परार्थास्ते वचारो भवन्ति शेषभूता यथेमिह इति । ननु योऽपि प्रधानभूतः सोऽपि कदाचित् परार्थे वर्तते, यथा उपाध्याय प्रधानभूतः शिष्याणां विद्यानिनयाधाने वर्तते । सत्यं वर्तते । यस्तु अत्यन्त परार्थः, तं वयं शेष इति ब्रूमः । यथा, गर्भदासः कर्मार्थ एव स्वामिनोऽनड्वाश्च क्रीयते वक्ष्यतीत्येव । ननु गर्भदासस्यापि स्वामी सविद्यानो गुणभावमयात् । नेति ब्रूमः । आत्मन एवासौ संविद्धानो गुणभाव गच्छति । नान्तरीयकत्वात् गर्भदासस्योपकरोति अनड्वहो वा । यस्तु अत्यन्त परार्थः तं शेष इति ब्रूमः । भा. ३।१।२।२ पृ. ६५८-६५९. ● यो यस्योपकरोति स तस्य शेषः । उपकारलक्षणं हि शेषत्वं इति अपरे । तदपि न घटते 'एवं सति प्रधानानामङ्गानां च परस्परम् । अङ्गाङ्गानां च सर्वेषां सर्वार्थेनैव शेषता ॥' वा. ३।१।२।२ पृ. ६५६. ● 'शेषं स्विष्टकृते समवद्यति' इत्यनेन दर्शपूर्णमासयोः संस्कारसम्बन्धो विधीयते न कर्मान्तरम् । वि. २।३।१३. ● 'शेषाद्व( द्रव्य )दाननाशे स्यात् तदर्थत्वात्' ( ६।४।१।१ ) इतिपूर्वपक्षसूत्रे अवदानावशिष्टात् द्रव्यदानान्तरावदान वक्ष्यते । सु. पृ. १५११.

■ शेषाद् अवदाननाशे स्यात् तदर्थत्वात् । ६।४।१।१॥

दर्शपूर्णमासादौ होमार्थं गृहीतस्य अवदानस्य नाशे सति शेषात् पुरोडाशात् पुनरवदेयं स्यात् । तदर्थत्वात् पुरोडाशस्य सर्वस्य अग्न्यादिदेवतार्थत्वात् । तस्मात् शेषादवदातव्य इति पूर्वः पक्षः ।

निर्देशाद्वाऽन्यदागमयेत् । २ ॥

दर्शपूर्णमासादौ गृहीतस्य अवदानस्य नाशे पुनः शेषादवदेय इति पूर्वपक्ष सूत्रेण प्राप्त वाशब्देन व्यावर्तयन् सिद्धान्तमाह । शेषान्नावदेयम् । किंतु गृहीतस्य द्रव्यवदानस्य नाशे अन्यत् हविः आगमयेत् निर्वापमारभ्य हविः पुनः कर्तव्यम् । निर्देशात् 'मध्यात् पूर्वार्धाच्चावदेय' इति कृत्स्नस्य मध्यस्य पूर्वार्धं च तच्चोदितम् । अवशिष्टस्य तु तन्नोपपद्यते । तस्मात् हविः पुनः कर्तव्यम् । अथवा 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वा अपहरेयुर्वा, आज्येन ता देवताः परिसङ्ख्याय यजेत्' इति निर्देशात् हविषो नाशे आज्यं प्राप्तम् । तत् अन्यत् आज्य आगमयेत् गृह्णीयात् । इति द्रव्यवदाननाशे आज्येन होमः । अयं पक्षः भाष्ये उक्तः । के.

लक्षितम् ॥' तद्भावभावित्वेन शक्यो येन विना न भवति स तस्य शेषः । तद्यथा, अङ्कुरस्तोयादिभिर्विना न भवति । घटश्च मृत्पिण्डदण्डचक्रादिभिरिति तयोस्तानि शेषत्वेन ज्ञायन्ते । तत्रोच्यते । 'अयुक्तमेवं शेषत्वमविनाभावलक्षणम् । व्यभिचारात्तथाहीदमशेषेष्वपि दृश्यते ॥ सर्वदा ह्यविनाभूता रूपस्पर्शादयः क्षितौ । न चैषां तुल्यकल्पत्वाद्भवत्यन्योन्यशेषता ॥ स्वामिना च विना दासा न भवन्ति कदाचन । तथा गृहादयस्तेषां शेषः स्वामी च नेष्यते ॥ प्रधानानां प्रधानैश्च विनाभावो न दृश्यते । तत्र स्याच्छेषशेषित्वं तेषामपि परस्परम् ॥ एवमङ्गप्रधानानामङ्गानां च परस्परम् । प्रसज्येतैव शेषत्वमविनाभावलक्षणम् ॥ एतेनाध्ययनाधानहविर्द्रव्यार्जनादिषु । वाच्यं प्रसक्तिशेषित्वं तैर्विना क्रत्वसंभवात् ॥ तस्मात्सत्यविनाभावे विनाभावेऽपि वा क्वचित् । प्रयोज्यो यस्य यस्तस्य स शेष इति निश्चयः ॥' न च स्वामी दासेन रूपस्पर्शादिभिर्वा यथोदाहृतैरन्योन्यं प्रयुज्यते । येनातिप्रसङ्गः स्यात् । न त्वेतदपि शेषत्वलक्षणं घटते । कुतः ? 'लक्ष्यलक्षणयोर्दृष्टो व्यभिचारो द्वयोरपि । पुरोडाशकपालं हि न च तत्प्रयुज्यते ॥ सिद्धेस्तुषोपवापेन शेषत्वं तस्य चेष्यते । तथा होमाः प्रयुज्यन्ते भेदनस्कन्दनादिभिः ॥ निमित्तैर्न च नेष्वेषां होमानां शेषता मता । तस्माद्यो विहिते यस्मिन्नधिकोऽन्यो विधीयते ॥ तस्य तं प्रति शेषत्वमतिरेकेण लक्ष्यते ॥' सर्वत्रैव फलवत्प्रधानविधेरङ्गविधयोऽङ्गानि प्रधानेभ्योऽतिरिच्यन्ते इत्येतदेवातिरेकलक्षणं शेषत्वमुक्तमित्युक्तेऽभिधीयते । 'व्यभिचार्यतिरेकोऽपि प्रधानेष्वपि दर्शनात् । तान्यपि ह्यतिरिच्यन्ते शेषेभ्योऽधिकदेशवत् ॥ अन्ये विध्यादिनिर्दिष्टप्रधानेभ्यः परान् विधीन् । दृष्ट्वाऽङ्गान्यध्यवस्यन्ति विध्यन्तत्वपरिग्रहात् ॥ विध्यन्तो वा प्रकर्तेन निवृत्तौ प्रकृताविव । विध्यन्तविहितांस्तत्र शेषान्वदति जैमिनिः ॥' तस्माद्विध्यादिविहितप्रधानकथंभावाकाङ्क्षापूरणसमर्थं विध्यन्तविहितं लक्षणमेव शेषत्वं सूत्रकाराभिप्रेतमित्युक्तेऽभिधीयते । 'उपक्रमोपसंहारमध्याम्नातेषु शेषताम् । विचित्रामुपलभ्यैतन्नेष्यते शेषलक्षणम् ॥'

यदि हि नियोगतो वाक्यप्रकरणान्ते एव व्यवस्थिताः शेषविधयः समाम्नायेरंस्तत एतदव्यभिचाराल्लक्षणमाश्रीयेत । न त्वेवमाम्नायन्ते । क्वचिदादिमध्यावसानेषु समाम्नानात् । 'प्रधानादौ विधीयन्ते ये शाखाच्छेदनादयः । विध्यादिविहितत्वात्ते नाऽऽप्नुयुर्दर्शशेषताम् ॥ कर्मणा सह चोद्यन्ते ये हविर्देवतादयः । शेषास्तेऽपि न युज्येरंस्तदन्ताम्नानवर्जनात् ॥'

अथ विध्युपक्रमेषु तावद्वाक्यप्रकरणेषु तदङ्गकथंभावाकाङ्क्षिणः प्रयोजनकथनावेलायां कथंभावाकाङ्क्षायुक्तप्रधानविधिदर्शनात्तदपेक्षितोपकारसिद्ध्यर्थत्वेन तेषामवधार्यमाणत्वात् विध्यादिगतानामपि शेषत्वमस्तीति न विध्यन्तविधानमेवैकं शेषलक्षणत्वेनाश्रीयते । 'शेषं तस्यैव तं विद्यादुपकारेण लक्षितम् । भवत्येवं च होमादेर्भिन्नादिप्रत्यशेषता ॥ न हि भिन्नोपकारार्थः स तद्धेयोपकारकम् । वेदे च नान्यदङ्गत्वकारणं दृश्यते क्वचित् ॥' ॥ अनुपकुर्वत्किंचिदङ्गं कस्यचिद्भवेत् । तस्मादुपपन्नमिदं लक्षणमिति । तथा चोपरिष्टादपि तत्र तत्र प्रदेशे भाष्यकारो वक्ष्यति— 'यो यस्योपकरोति स तस्य शेषः । उपकारलक्षणं हि शेषत्वम्' इत्येवमादि । 'तादर्थ्यमपि नैवान्यदुपकारात्प्रतीयते । तेनोपकार एवैको विज्ञेयं शेषलक्षणम् ॥' न त्वेतदपि घटते । कुतः ? 'एवं सति प्रधानानामङ्गानां च परस्परम् । अङ्गाङ्गानां च सर्वेषां संकीर्येतैव शेषता ॥'

यथैव ह्यङ्गानि प्रधानानामुपकुर्वन्ति तथैवानुष्ठापनेनोपकारप्रतिग्रहणेन च प्रधानान्यपि अङ्गानामुपकुर्वन्त्येव । कुतः ? 'प्रधानैरप्रयुक्तानि कुर्यान्नाङ्गानि कश्चन । उपकार्यैर्विना तानि नोपकर्तुं च शक्नुयुः ॥ प्रधानान्यप्यतोऽङ्गानामङ्गानि स्युरनुग्रहात् । स्यादन्योन्योपकाराच्च तेषामन्योन्यशेषता ॥ नैकेनापि

प्रमाणानुमाने व्याप्रियते । नोपकारादेव शेषत्वं तादर्थ्ये येत्यनवद्यम् । एवं च सति श्रुत्यादीन्येव तादर्थ्यप्रतिपादनरूपेण शेषस्य विनियोजकानीति तद्विवेकार्थं लक्षणमारब्धव्यम् । सत्यपि साङ्गप्रधानादीनामुपकारसंकरेऽतादर्थ्यादसंकरस्थितिसिद्धिः । तस्मात् परार्थत्वलक्षणमेव शेषत्वे निर्दोषम् । 'यः परस्योपकारे वर्तते' इति — पारार्थ्यमेवोपकारेण फलेनाभिधीयते इत्यवगन्तव्यम्, न त्वनेन लक्षणोक्तिभ्रान्तिः कर्तव्या । तथा च स्फुटी करोति 'ये परार्थास्ते वक्तारो भवन्ति' इति । परः पुनरुपकारलक्षणभ्रान्त्या वदति— 'यथोपाध्यायः शिष्याणाम्' इति । 'तस्य वर्तते' इति— तादर्थ्योपकारव्यतिकरदर्शनादिहाललक्षितं शेषत्वमित्युपेक्ष्यैतदुदाहरणं ऐकान्तिकपारार्थ्ययुक्तमुदाहरति— 'तद्यथा गर्भदासः' इति । स हि मूल्येन स्वाम्यर्थेन प्रसिद्धः । अनडुहाश्च वहनार्थत्वात् । न तु स्वामी तादर्थ्येनावगम्यते इति विवेकः । परस्तु तत्राप्युपकारकत्वादस्त्येव कश्चित्तादर्थ्यलेश इति प्रत्यवतिष्ठते— 'ननु गर्भदासस्यापि' इति । सिद्धान्तवादी त्वाह— 'आत्मन एवासौ सन्निदधानः' इति । उद्देशेन (इदमत्राऽऽकूतम् । निरूपकतासंबन्धेन यन्निष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वम्, तत्त्वं तदङ्गत्वमिति । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन दर्शपूर्णमासयोः स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वात्तदङ्गत्वसङ्गतिः । अत्र च लक्षणे कृतिकारकत्वं कृत्यन्वितकर्तृवाच्ययत्नाभिप्रायम् । विहितत्वं च स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकधर्मवत्त्वेन विधिविशिष्टत्वम् । अत्र करणादीनामेव कृत्यन्वितत्वात् भावनायाश्च विधिविषयत्वाज्जाताध्याहृताद्यङ्गताऽनाशङ्केति दिक् ।) हि तादर्थ्यं विविच्यते । न च स्वामिनो गर्भदासाद्युद्देशेन तदुपकाराय प्रवृत्तिः । किं तर्हि, स्वार्थसिद्धिप्रयुक्ता, नान्तरीयकतत्संनिधानादशेषत्वम् । 'येस्तु द्रव्यं चिकीर्ष्यते' इति—पुनरुक्तशङ्कयोपन्यासः । ननु च तदव्यवहितोक्तेनैव लक्षणेन गतार्थत्वादिदं व्यर्थमत आह— 'तत्रापूर्वार्थता व्यावर्तिता' इति । तत्र केचिदेवं व्याचक्षते । तत्र दृष्टार्थानामवहन्त्यादीनां शेषत्वमुक्तम् । इह तु सर्वेषामेव दृष्टार्थानामदृष्टार्थानां च द्रव्यविषयाणां कर्मविषयाणां च शेषाणां लक्षणमुच्यत इति । एवं तु सति एतस्यापुनरुक्तता स्यात् । तत्पुनरेतेन गतार्थमित्यपह्नुतमेव । तस्मादेव वर्णयितव्यम्— 'अथ तत्र किं युक्तं येस्तु द्रव्यं चिकीर्ष्यते' इति । तदभिधीयते । 'हन्त्यादावपि शेषत्वमेतस्मादेव लक्षणात् । दृष्टार्थत्वादपूर्वं तु ततो नेति पुरोदितम् ॥'

सर्वविषयव्यापि शेषत्वमिह लक्ष्यमेव तत्र नीतमपूर्वभेदनिराकरणार्थम् । अथवा पूर्वोक्तं गुणप्रधानभावलक्षणमनपेक्ष्यापूर्वं न संप्रति कारणान्तरनिरासेन परार्थत्वलक्षणे शेषत्वेऽभिहिते 'येस्तु द्रव्यं चिकीर्ष्यते' इत्यनेनोपकारलक्षणाभ्युपगमाद्विरोधमाशङ्क्य परिहरति । तत्रापूर्वभेदकल्पनानिवृत्त्यर्थमुपकारदर्शनमुक्तं न शेषलक्षणत्वेन । अत्र पुनः सर्वशेषाणां पारमार्थिकं लक्षणमेवोच्यत इति भिन्नविषयत्वादविरोध इति ।

शा— 'तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षणम् । परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते ॥' कथं तर्हि श्रुत्यादिलक्षणं शेषत्वम्? नहि 'सोमेन यजेत' इति तृतीयया परोद्देशप्रवृत्तत्वं सोमस्य उच्यते, करणमात्राभिधानात् । उच्यते । न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः । किं तर्हि, विधिसहिताः पारार्थ्यं बोधयन्तीति । विधिरपि न अभिधानेन पारार्थ्यं गमयति किन्तु अर्थापत्त्या । स हि चेतनप्रवर्तनात्मा । न चानुद्दिष्टफले व्यापारे चेतनं प्रवर्तयितुं शक्यते इति अर्थात् विधिविषयस्य व्यापारस्य फलोद्देशप्रवृत्तता गम्यते । फलार्थश्च व्यापारः फलमेव पुरुषस्य अभिलषितं इति तत्साधनत्वेन श्रुत्यादिभिरवगतानां तत्साधनत्वेन च विधीयमानानां सोमादीनामपि तदुद्देशप्रवृत्तिः सिद्धा भवति । तस्मात् युक्तं श्रुत्यादिगम्यं पारार्थ्यलक्षणं शेषत्वमिति ।

वि— 'स्वरूपहेतू न सोऽत्र स्तो वा नैवानिरूपणात् । पारार्थ्यं शेषताहेतुः रूपं तेनोपलक्षितम् ॥'

भाट्ट— इह आद्यं प्रकारद्वयं निरूप्यते । यदेव हि अङ्गत्वलक्षणं तदेव शेषत्वलक्षणतावच्छेदकं नान्यत् ।

स्वामिनि च यजमाने शेषभक्षाणां दर्शनात् तत्सामान्यात् स्वामिसमानत्वात् भक्षविषये इतरेषां यजमानादन्येषां ऋत्विजां तथात्वं परिक्रयाभावः । यजमानस्य तावत् शेषभक्षेण निःसंशयं परिक्रयो नास्ति । ऋत्विजामपि तद्वत् नास्ति शेषभक्षेण परिक्रयः । तस्मात् शेषभक्षाः प्रतिपत्तिसंस्कारार्थाः न परिक्रयार्थाः इति सिद्धान्तः ।

तथा चान्यार्थदर्शनम् । ३४ ॥

कुण्डपायिनामयने मासं सत्रे 'मासं ... श्रमसे सोमान् भक्षयन्ति' इति श्रुतम् । स्वक सुष्टि । स्वक रहितेऽश्रमसे ऋत्विजि भक्षे प्राप्ते विशेष उक्तः । एवं सत्रे भक्षणं दृश्यते, सत्रे च परिक्रयो नास्ति । अनेन अन्यार्थदर्शनेन मन्ये तावत् शेषभक्षाः न परिक्रयार्थाः इति निश्चितम् । तत्सामान्यात् दर्शपूर्णमासादावपि शेषभक्षा न परिक्रयार्थाः किंतु प्रतिपत्तिसंस्कारार्थाः इति सिद्धान्तः । थे

* शेषभक्षाः ज्योतिष्टोमे एष्टिकेषु कर्मसु न परिक्रयार्थाः । संस्कारार्थं ते कर्तव्याः । भा १२।१।१७।३३-३४, * शेषभक्षाः ज्योतिष्टोमे वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च । ते न परिक्रयार्थाः किन्तु संस्कारार्थाः । १०।२।९।२९-३३

⁂ शेषभक्षास्तथेति चेत् । १२।१।१५।३१ ॥

सोमे एष्टिकेषु ऐडादयः शेषभक्षाः चोदकप्राप्ता अपि सौमिकेन व्रतेन निवर्त्यरन् तथा आरण्याशनवत् (१२।१।१४।३०) इति चेत् पूर्वपक्षी ब्रूयात् ।

नान्यार्थत्वात् । ३२ ॥

सोमे एष्टिकेषु एडादयः शेषभक्षाः सौमिकेन व्रतेन निवर्त्यन्ते इति चेत्, न । अन्यार्थत्वात् इडादि शेषभक्षो न तृप्त्यर्थः किंतु अन्यार्थः संस्कारार्थः उपयुक्तसंस्कारार्थत्वात् द्वितीयानिर्देशाच्च । तस्मात् एडादयः शेषभक्षाः कर्तव्याः इति सिद्धान्तः । के

* शेषभक्षास्तथेति चेत् । १२।१।१५।३१ ॥ नान्यार्थत्वात् । ३२ ॥ सायमारण्याशनवत् इडादिशेषोऽपि ज्योतिष्टोमाङ्गभूतेषु दर्शपूर्णमासविकारेषु अतिदेशप्राप्तः 'पयो व्रतं ब्राह्मणस्य' इति प्रत्यक्षविहितेन व्रतेन निवर्त्यते इति पूर्वपक्षयित्वा शेषभक्षस्य द्रव्यप्रतिपत्त्यर्थत्वेन उपयुक्तपुरुषसंस्कारार्थात् व्रतात् अन्यार्थत्वात् न शेषभक्षो व्रतेन निवर्त्यते इति सिद्धान्तितम् । सु पृ १५४८

⁂ शेषभक्षास्तथेति चेत् । १२।१।१७।३४ ॥

सोमे ऐष्टिकेषु ऐडादयः शेषभक्षाः सौमिकदक्षिणया निवर्त्येरन्, तथा अन्वाहार्यवत् इति चेत् पूर्वपक्षी ब्रूयात् । परिक्रयार्थाशङ्कया इदमुक्तम् ।

न कर्मसंयोगात् । ३५ ॥

सोमे ऐष्टिकेषु ऐडादयः शेषभक्षाः सौमिकया दक्षिणया निवर्त्येरन् इति चेत्, न । नैते परिक्रयार्थाः । नाल्पमेते आनमनाय । अन्वाहार्येण कर्मार्थमानतानां निर्वृत्त भूयिष्ठे कर्मणि एते विधीयन्ते, कर्मसंयोगात् संस्कारकर्मसंयोगार्थास्तु एते । अतः संस्कारार्थं भक्षाः कर्तव्याः एवेति सिद्धान्तः । के

* शेषभक्षा दर्शपूर्णमासयोः न परिक्रयार्थाः किंतु संस्कारार्थाः । भा १०।२।९।२९-३३ * शेषभक्षाः सर्वे कृष्णलचरौ पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः । १०।२।५।१९-२० मीको पृ १४८२ 'कृष्णलचरौ सर्वे शेषभक्षाः ०' इत्यत्र अधिकरणं द्रष्टव्यम् ।* शेषभक्षाणां सोमाङ्गेष्टिषु सौमिकदक्षिणया प्रसङ्गसिद्धिर्नास्ति । १२।१।१७।३४-३५

* शेषभक्षणे ऋत्विङ्नियमः । ६।४।३।४-९

* शेषभक्षणार्थं चतुर्धाकरणम् । भा १२।४।१५।४६

* शेषलक्षणम् । 'शेषः परार्थत्वात्' (३।१।२।२)। ननु परोद्देशप्रवृत्तिश्चेत् पारार्थ्यं तर्हि नाशौ कर्तृ यतिरिक्तेषु शेषेष्वस्ति । अथ परोद्देश्यकप्रवृत्तिविषयत्वं तत् तर्हि द्रव्यादौ यागादौ फले च क्रमेण यागफलपुरुषोद्देश्यकप्रवृत्तिविषयत्वसत्त्वेऽपि न पुरुषं यागोद्देश्यकप्रवृत्तिविषयत्वमस्ति, किंतु तादृशप्रवृत्त्यधिकरणतैव । उभयमपि चाऽर्थभावनारूपप्रवृत्तौ नास्ति । यत्तु न्यायरत्नमालायामुक्तम् 'कर्तुं समीहितं येन सिध्यत्यङ्ग तदुच्यते । इत्यनेन वैधेष्टसाधनत्वमेव शेषलक्षणमुक्तम्, तदपि फले अन्याप्तम् । नहि तस्येष्टसाधनता विधिना

चोद्यते इति । उच्यते । प्रवृत्तिः प्रवर्तना, परं चेष्टम् । तदुद्देशेनैव वैधी या प्रवर्तना, लौकिक्याः इष्टोद्देश्यकत्वनियमाभावात्, सा प्रयोजिका सती पारार्थ्यम् । प्रयोजकत्वं च कारणतत्कारणाद्यनुगतम् । वैधप्रवर्तनैव च साक्षात् प्रवृत्तेः कारणम्, तद्द्वारा फलस्य । पुरुषस्यापि कर्तृत्वं प्रवृत्तिद्वारा प्रवर्तनयैव जन्यते, एवं करणत्वेन व्रीह्यादि कारकान्तरं चेति । यद्वा परोद्देश्यकप्रवृत्तिमत्त्वेन अत्र विवक्षिता । तद्वत्तानियामकश्च संबन्धः पुरुषे अधिकारिताख्यः, द्रव्ययागफलेषु तु विषयताख्यः, साध्य, द्वयोरेव लोके तद्वत्तानियामकत्वात् । न चैवं फलोद्देश्यकयागविषयकृत्यधिकरणत्वात् पुरुषस्य फलं प्रति अङ्गत्वापत्तिः, इष्टापत्तेः । फलसाधनत्वापत्तयोर्हि सर्वस्य अपूर्वैदमर्थ्यं न भागस्वरूपमात्रे अङ्गत्वं इत्युक्तम् । तेन यथा अवघातप्रोक्षणादेः व्रीहिलक्षिते अपूर्वसाधनरूपे विशिष्टे विनियोगात् विशेषणे अपूर्वेऽपि अङ्गत्वम्, एवमिहापीति । एतत्सर्वमभिप्रेत्य 'परोद्देश्यप्रवृत्तिः' इत्येवोक्तम्, न तद्विषयता तदधिकरणता चेति । तदिदमपि प्रवृत्त्यैव अभ्यासं इत्युपेक्ष्यम् । तस्मात् आद्येन विवक्षा युक्तेति । यदि तु न्यायरत्नमालागतमेव लक्षणं समर्थनीयम्, तदा एवं वाच्यम् । यदुक्तं वैधेष्टसाधनत्वं फले अव्याप्तम्, नहि तस्येष्टसाधनता विधिना बोध्यते इति, तन्न, तस्यापि कर्तृगतभोगरूपेष्टसाधनत्वस्य वैधत्वात् । स्वर्गादिभोगोऽपि हि पुंसा स्वर्गादिवदिष्ट एव ।

ननु एवमपि पुत्रेष्ट्यादिफले पुत्रादौ अव्याप्तिरेव, न हि तस्य इष्टसाधनत्वं वैधमिति चेन्न, इष्टसाधनत्वसामान्यस्य अवैधत्वेऽपि पुत्रेष्टेः कश्चिदिष्टसाधनता विधिगम्या इति स्वर्गकामाधिकरणे उक्तम् (६।१।१) । एवं च सति पुत्रेष्टेः कश्चिदिष्टसाधनता बोधयता विधिना तस्याः पुत्ररूपफलस्य कर्तृत्वं विना अनुपपत्तेः पुत्रस्यापीष्टस्य कश्चिदिष्टभोगसाधनत्वरूपा कर्तृता बोध्यते इति पुत्ररूपस्य फलस्य विशेषतः इष्टसाधनता विधिगम्यैव इति नाव्याप्तिरिति । इति शेषलक्षणम् । बाल. पृ. ९१–९२.

* शेषलक्षणेन कान्यस्य साधनानि कानि साधनाभासानि किंरूपोऽपि व्याख्यातम् । भा. ३।१।१।१ पृ. ९.

## ☞ शेषलक्षणप्रतिज्ञा ॥

अथातः शेषलक्षणम् । ३।१।१।१॥*

भाष्यम्— नानाकर्मलक्षणं वृत्तम् । अनन्तरं शेषलक्षणं वर्तयिष्यामः । कः शेषः, केन हेतुना शेषः, कथं च विनियुज्यते इति । श्रुत्यादीनि च विनियोगे कारणानीति मन्यते । तेषां च बलवदबलवत्ता । एतत्तात्पर्येणान्यदप्युपोद्घातादिना ।

वा— 'द्विलक्षण्याः परं शिष्टं पारार्थ्यकथनलक्षणम् । तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम् ॥' तथा च प्रथमसूत्रोपात्तप्रतिज्ञाविषयकख्यातप्रदेशप्रदर्शने धर्मप्रमाणस्वरूपविषयलक्षणद्वयार्थं चोदनालक्षणसूत्रेणैवैनेन सूचितं वर्णयित्वा कानि अस्य साधनानि —अङ्गानि कानि च साधनाभासानि— अनङ्गानीति कस्यार्थस्तादर्थ्यसाम्या क पुरुषः प्रधानं धर्मस्य क वा पुरुषो गुणभूत इत्यादि यावत्किञ्चन मीमांसितव्यं तत्सर्वं शेषलक्षणेनैव व्याख्यातम् । शेषैः समस्तैरेव लक्षणैरित्यर्थः । इह लक्षणानां बहुत्वेऽपि यदेकवचनं कृतं तल्लक्षणत्वसामान्यसंख्यामात्रविवक्षया । 'यत्तु शेषः परार्थत्वादित्यनन्तरलक्षणम् । तदङ्गत्वस्य वाच्यत्वाद्वाक्ये तन्मात्रगोचरम् ॥' यद्यपि हि लक्षणार्थेषु विवक्षितेषु क्रमप्रसादेकहावद्रूतरूपः शेष एतल्लक्षणगोचरः परार्थत्वहेतुकः प्रतिपाद्यते । समासश्च द्वेधा विगृह्य द्वयोर्नियार्थयोः प्रदर्शनीयः । शेष च तल्लक्षणं च, शेषस्य वाऽर्थस्य लक्षणमिति । षष्ठीसमासमात्राभणनेन वा यथान्यायमानार्थम् । 'अङ्गलक्षणमेवेदमिहोक्तं शेषलक्षणम् । तद्विशेषप्रपञ्चस्यास्त्वन्यान्यत्रिविस्थितेः ॥' यथैव हि लक्षणान्तरार्थानां प्रयोज्यप्रयोजकप्रयोजकप्रयोज्यकप्रसङ्गविषयमनियमफलसमर्थविषयकर्मविधिकारूपाणां तदादङ्गत्वम् शेषविशेषमात्रत्वात् लक्षणान्तरगोचराणामपि शेषलक्षणान्तर्गततावधारणस्थितिः । तथाहि— 'प्रयोजकाः प्रयोज्याश्च शेषाणामेव शेषिणः । क्रमोऽपि शेष एवैकप्रयोगवचनाश्रयः ॥' एकफलसाधनानामर्थानां लोकपक्षवदुपकारोपनिबद्धानां वेदप्रयोगवचनचोदितानां यौगपद्यानुष्ठानाशक्तेः सामर्थ्य-

मन्यते। शक्यं हि उपायान्तरेण पूर्वपरिमाणमतिक्रमितु-मित्यर्थः। न तु एतत् युक्तम्, सत्राहीनेष्वसम्भवात्। अत. 'अवशिष्टानंशूनभ्यूहेत्' इत्यभ्यूहो य. अनियत-परिमाण., तदभिप्रायम् 'स्यादनित्यत्वात्' इत्येतत् व्याख्येयम्। संस्थाधिकरणन्यायेनैव वा प्रकरणविरोध मुवाणस्य नित्येन अग्रहणादिति अनित्यत्वमुत्तरमभि-धीयते। 'तृतीयसवने अंशुरेक.' गृह्यते इत्यत्र विन-दन्ते। तस्यापि तत एव सोमादुपादानात् अतोऽपि विप्रकृष्टपर्वत्वमात्रमेव कारण वक्तव्यम्। तस्मादपि संस्थासु निवेश इति।

न स्वत्र संस्थास्वेव इत्यवधारयितव्यम्। कुत.? 'अग्निष्टोमान्यमात्रे हि दीर्घशब्दोऽवकल्पते। अथान्येनेतिवत् तस्मात् संस्थाकल्पन्तरग्रहः॥' यथैव 'य एतेनानिष्ट्वाऽन्येन यजेत' इत्येतच्च संस्थास्वेव स्थास्यति (५।३।१३।२७)। किं तर्हि अग्निष्टोमव्यतिरेकमात्रे, तथा दीर्घत्वमपि अग्निष्टोमाति रिक्तमात्रावलम्बनमशक्य प्रकरणेन संस्थास्वेव स्थापयि-तुम्। प्रकृतिवच्छन्दपूर्णत्वाच्च न तासां प्रकरणमस्ति। न ह्येतत् गृहीतं प्राकृत किंचिदत्र पुनरुच्चार्य विधीयते, प्रथमोपदिश्यमानज्योतिष्टोमधर्ममध्यपातित्वात्। इतश्च न संस्थानां प्रकरणमस्ति। कथम्? 'असंबद्धव्यवाये हि सति तद् विनिवर्तते। तेनासां ज्योतिषेर्धर्मै-र्विच्छिन्ने नानुषङ्गधीः॥' यदि हि संतर्दन उक्थ्या-दीन् विधाय अनान्तरप्रकरणे श्रूयेत, तत स्यादपि प्रक-रणग्रहणम्। इदं तु संस्थाधिकरणन्यायेन (३।६।१२) तदग्राह्यैर्ज्योतिष्टोमधर्मैः अन्तरितत्वात्, न संस्थास्वथ भावानुषङ्गेण संस्पृश्यते। तस्मान्न प्रकरण संस्थानं वा संस्थासु विनियोजकम्। किं तर्हि? वाक्यमेव। तच्च दीर्घ-सोमत्वाविशेषात् सत्राहीनेष्वपि तुल्यमिति सर्वधर्मता। (दीर्घसोमशब्दस्य कर्मधारयेण यागवाचित्वसंभवे दीर्घ सोम. अस्मिन् अस्ति इति बहुव्रीह्याश्रयणायोगात् दीर्घकालसोमयागमात्रवाची अय शब्द. इत्याशयः। सूत्राणि तु [इत्येव व्याख्येयानि इति उपरिष्टादन्वय.।] पदोत्तरसूत्रेण संस्थास्वेव इत्यवधारणा निरस्य, 'उक्थ्या-दिषु वा' इति सूत्रेण अपिशब्दार्थे वाशब्दमङ्गीकृत्य 'उक्थ्यादिषु चार्थस्य' इति चकारयुक्तमेव वा पाठ कृत्वा, उक्थ्यशब्देन वा संस्थास्तिस्रोऽपि [उक्थ्य-षोडशी-अतिरात्रान्], आदिशब्देन च सत्राणि अहीनाश्च उक्त्वा संस्थासु सत्राहीनेषु च दीर्घसोम-शब्दार्थस्य दीर्घकालसोमयागत्वस्य विद्यमानत्वात् संतर्दन स्यात् इति द्वितीयपूर्वपक्षोक्तेः, सत्राहीनमात्रविषयतया उत्कर्षनिरासेन अग्निष्टोमान्यमात्रविषयतया उत्कर्षे सिद्धा-न्तिते, संस्थासु प्रदेयस्य सोमस्य दशमुष्टिनिर्वापेन नियमेन वृद्ध्याख्यविशेषाभावात् निरालम्बनस्तुत्यापत्तेः अग्निष्टोमान्यमात्रविषयसिद्धान्तायोगं 'अविशेषात्' इति सूत्रेण आशङ्क्य अवशिष्टाशभ्यूहपरिमाणस्य [क्रीतात् सोमात् दशमुष्टिषु पृथक् कृतासु अवशिष्टा· ये अंशवः, तेषां अभ्यूहस्य समाहारस्य यत् मुष्टिदशकात् अधिक परिमाणम्, तस्य] अनियतत्वात् संस्थास्वपि प्रदेयस्य वृद्ध्याख्यो विशेष· स्यात् इति अन्त्यसूत्रेण परिह्रियते इत्येव व्याख्येयानि। सिद्धान्तसूत्रस्थ अनुत्कर्षभाष्य प्रकरणानुग्रहभाष्य चोपेक्षणीयम्। सुधा. पृ १२१०)।

शा— अवशिष्टानामंशूना उपसमूहनवचन श्रूयते 'यदा एतावानेव सोम. स्यात् यावन्त मिमीते, यज-मानस्यैव स्यात् नापि सदस्यानां प्रजाभ्यस्त्वा इत्यव-शिष्टान् अंशूनुपसमूहति, सदस्यानेवान्वाभजति' इति।

सोम— पूर्ववत् इहापि अनुत्कर्ष इति प्रथम स्थानात् सगतिः।

वि— 'संतृन्द्यात् दीर्घसोमे तत् प्रकृतौ विकृता-सुत ?, दीर्घस्य सोम इत्युक्ते प्रस्तावस्तु तर्दनम्॥, सामानाधिकरण्यस्य प्रतीतौ बलवत्तरः। दैर्घ्ययुक्तो-क्थ्यसंस्थादावुत्कर्षोऽन्यत्र बाधनात्॥' १६.

भाट्ट— ज्योतिष्टोमे अधिषवणफलके प्रकृत्य 'न संतृणत्ति' इत्यनेन असंतर्दन विधाय 'अथो खलु दीर्घसोमे संतृन्द्यात् धृत्यै' इत्यनेन संतर्दन विहितम्। संतर्दन नाम द्वयोः फलकयो. संश्लेषप्रदेशात् तत्करणेन एकोपर्यपरस्य संश्लेष.। तदेव संतर्दन किं प्रकरणे एव निविशते, उत अग्निष्टोमादन्यत्र उत्कृष्यते इति चिन्ता-याम्, प्रकरणानुग्रहादनुत्कर्ष·। न च वाक्यविरोध, ज्योतिष्टोमस्यापि इष्ट्याद्यपेक्षया दीर्घत्वात् सोमद्रव्य

कत्वाच्च दीर्घसोमत्वोपपत्तेः । अतश्च व्रीहियवादिवत् संतर्दनासंतर्दनयोः विकल्पः । यस्त्वत्र सूत्रे क्रयणवदिति क्रयदृष्टान्तो विकल्पे दत्तः, स द्वादशे 'दशभिः क्रीणाति' इति वचनेन समुच्चयस्य वक्ष्यमाणत्वात् वचनाभावं कृत्वा बोध्यः । अस्तु वा इत्यादेः इहानुपादानात्, तदपेक्षया दीर्घत्वस्य च नित्यत्वेन दीर्घसोमपदवैयर्थ्यापत्तेः अष्टदोषदुष्टविकल्पस्य च अन्याय्यत्वात्, दीर्घस्य यजमानस्य सोमो दीर्घसोमः इत्येवं षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते संतर्दनविधानम् । यदि तु निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्यैव न्याय्यत्वात्, यजमानदैर्घ्येण च फलकविदारणाप्रसक्तेः तद्द्वारा( ? द्वा, द्वा )रकत्वेन संतर्दनस्तुतेरसंभवेन 'धृत्यै' इत्यर्थवादानुपपत्तेः, दीर्घश्चासौ सोमश्च इति कर्मधारय एवाङ्गीक्रियते । तदाऽपि ज्योतिष्टोमे एव उक्थ्यादिसंस्थान्तरयुक्तं प्रदानविवृद्धया प्रदेयसोमविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेः वाक्यप्रकरणयोरविरोधान्निवेशः । न च प्रदानविवृद्धेः लेपादिना संपादनम्, सोमद्रव्यकस्य यागस्य विना वचनं द्रव्यान्तरसंसृष्टेन सोमेन करणायोगात् । न च निर्वापमुष्टिरूपसोमपरिमाणबाधः, स्थूलदीर्घसर्वसोमग्रहणेन तद्बाधाभावात् । अत एव सोमशब्देन यागाश्रयाया प्रमाणाभावात् सोमदीर्घत्वमेव संतर्दने निमित्तमित्यपि शक्यं वक्तुम् ।

वस्तुतस्तु— निर्वापमुष्टिपरिमितसोमग्रहणोत्तर 'अवशिष्टानंशूनुपसमूहति' इत्युपसमूहनविधानात्, तत्र चार्थवादे 'यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानुपसमूहति' इति पूर्वोक्तमाननिन्दया उपसमूहनवत् यावदपेक्षितग्रहणप्रतीतेः, [illegible]ाधिकरणन्यायस्य अत्र अप्रवृत्त्या परिमाणाभावात् प्रदेयविवृद्धिः सुलभैव । न च एवमपि अग्निष्टोमसंस्थाया अङ्गत्वात् अन्यासां काम्यानां नित्यानां च विकृतित्वेन सर्वत्र प्रकरणाभावात् ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोध इति वाच्यम् । काम्यसंस्थासु प्रदानविवृद्ध्या आश्रयभूतज्योतिष्टोमस्यापि विवृद्धेरावश्यकत्वात्, संस्थानां च नित्यानामपि सत्त्वात् प्रकरणाभावे च ज्योतिष्टोमस्य सर्वत्रानुस्यूतत्वात्, काम्यसंस्थाकज्योतिष्टोमप्रयोगे संतर्दनविधानेन प्रकरणानुग्रहोपपत्तेः । अत एव अग्निष्टोमसंस्थाकज्योतिष्टोमप्रयोगे असंतर्दनम्, प्रदानविवृद्ध्यभावात् न विकल्पोऽपि । अत एव च दीर्घत्वस्यानुयोगिनः काम्यसंस्थाकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंस्थाकज्योतिष्टोमस्य प्रकरणादेव लाभादिति लाघवम् । न च एवमितरसंस्थाकज्योतिष्टोमस्यापि प्रकरणे अङ्गीक्रियमाणे 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तद्भवति' इत्यत्रापि एतच्छब्देन इतरसंस्थाकज्योतिष्टोमस्य ग्रहणापत्तेः अग्निष्टोमसंस्थाकस्यैव प्रकरणात् ग्रहणं वक्ष्यमाणं विरुध्येतेति वाच्यम् । ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात्, अग्निष्टोमसंस्थाया अङ्गत्वेन इतराङ्गवत् प्रकरणविच्छेदकत्वानुपपत्तेश्च । एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्य तत्रापि अन्यशब्देन तद्विकृतिमात्रवाचकेन संस्थानामपि उक्तत्वात् तासामपि ज्योतिष्टोमोत्तरकालविधिप्रतीतेः अर्थात् अग्निष्टोमसंस्थाकस्यैव प्रथमकरणोपपत्तेः । अतो वाक्यप्रकरणयोरविरोधात् प्रकरणे एव संतर्दनस्य निवेशः । इति प्राप्ते,

भाष्यकारेण तावद्विशयपरतैव सिद्धान्तितम् । पूर्वपक्षश्च प्रकारद्वयेनैव कृतः । वार्तिककारेण तु विकृतिमात्रे अग्निष्टोमातिरिक्तविवृद्धसोमके निवेश इत्युक्तम् । तस्यायमाशयः । दीर्घत्वं तावत् ग्रहणविवृद्धिप्रयुक्तसोमविवृद्धिकृतमिति भवतोऽप्यविवादम् । विवृद्धग्रहणानि च संस्थाङ्गानि वचनात् न तु ज्योतिष्टोमाङ्गानि । अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसंबन्धाभावात् विकृतिमात्रपरत्वमिति । न चोक्तग्रहाणां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्संबन्धसत्त्वात् तस्य दीर्घसोमत्वोपपत्तिः, सर्वतोमुखादौ पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाके दिगन्तरे दीर्घसोमत्वस्य सत्त्वात् अग्निष्टोमपक्षेऽपि संतर्दनापत्तेः । यदङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यत्प्रयुक्तविवृद्धप्रदेयकत्वमेव वा यत्र, तत्र तदपूर्वसाधनीभूतफलकसंस्कारद्वारा संतर्दनविधानकल्पनात् उक्तविवृद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात् तदङ्गत्वेन

संतर्दनविध्यनुपपत्ते, वाक्येन प्रकरणं बाधित्वा उक्त-विपर्यविनिवृत्ताचेत निवेशः, न तु उस्यास्तेन, तास्य विकृतित्वेन प्रकरणाभावादिति । अत एव संनृत्यादिति पातो. शकर्मेवरात् अनुपक्तद्वितीयान्तपदेन फलक-स्यैव संस्कार्यत्वगमात् दीर्घसोमत्वस्य उद्देश्यत्वाद्वि-शेषणत्वयोरभावेन निमित्तत्वमेव । अत एव नाय बहु-व्रीहिः, न वा सोमपदेन यागलक्षणया स्वप्रकान्तोऽपि तत्पुरुषः । अपि तु तेन स्वामेवोक्त्या तत्पुरुष । समासत्वाच्च न निमित्तेऽपि विशिष्टोद्देशे वाक्यभेद. ।

मण्डन— ' दीर्घसत्रयासु तर्दनम् । ' १६.

शंकर— ' अस्यै संतर्दने मत । ' १६.

• संतर्दनादि— ( संतर्दन–प्रकर्ष )न्यायेनैव वाक्यप्रकरणविरोधे सति ( वाक्यात् ) विकृत्यर्थत्वं भवति । पा. ३।३।१३।२४, कु. ३।३।१८।२९.

• संतानं नाम उत्पातोत्पादकक्रमेण अवस्थिता पुरुषा एव । सु पृ १०. • संतानः संततत्वम् । पूर्वोत्तरोच्चारणयो मध्ये मौनद्वारकाल्पव्यवधानाभाव. । संकर्ष. ४।१।१.

☞ संतापनमधःश्रपणात् । १०।१।१५।५६ ॥

संतापनं कपालानां पुरोडाशश्रपणार्थं क्रियते अधः-श्रपणात् अधस्तात् पाकार्थम् । सौर्ये चरौ तु अधः-श्रपणाभावात् संतापनं न कर्तव्यम् । इति सिद्धान्त. । के.

• संतापनं कपालानामङ्गारै. प्रतापनम् । इद चरौ न कर्तव्यम्, पुरोडाशे तु कर्तव्यम् । भा. १०।१।१५। ५३, • संतापनं कपालानां दर्शपूर्णमासयो क्रियते । १०।१।१५।५१. • संतापनस्य सौर्ये चरौ बाध । १०।१।१५।५६. ' सौर्ये चरौ संतापनस्य बाध ' इत्यत्र अधिकरण द्रष्टव्यम् ।

• संदंश' अवान्तरप्रकरणाभिव्यञ्जक । सु. पृ ८११. • संदंशः एकविषयकवाक्यद्वयमध्ये स्थितत्वम् । संदंशेन चावान्तरप्रकरणं सिध्यति । वि ३।१। १० वार्तिकमतम्. • संदंश. नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम् । यथा अभि-क्रमणस्य प्रयाजेषु । मीन्या. • संदंश । प्राकृतैरङ्गैर्य-दपूर्वं समभिव्याहियते, तदपूर्वमपि तदपूर्वस्य एव आकाङ्क्षाया अन्वावृत्ताया अर्थसिद्धे. पदैर्व्यवहितमपि । टुप्. ४।४।४।७, • संदंश. । प्राकृताङ्गसंबन्धेन श्रूय-माणा. कथंभावाकाङ्क्षाया अन्वावृत्ताया ये पदार्था उपनिपतन्ति ते संनिधिबलेन ( अवान्तरप्रकरणेन ) गृह्यन्ते । ४।४।२।३. ■ संदंशः विनियोजकावान्तर-प्रकरणोत्थापक । मीन्या. • संदंश. ससंनिध. 'श्रुत्यादि-प्रमाणषट्क०' इतिचिन्हे बाल प्रघट्टके द्रष्टव्य । बाल. पृ. ९–१२. • संदंशं विना अवान्तरकथंभावाऽ-निष्पत्ति. । सु. पृ १०६९. • 'संदंशेन अभिचरन् यजेत' इति संदंशशब्दः कर्मनामधेय न गुणविधि । भा. १।४।४।५, • 'संदंशेन अभिचरन् यजेत ' इति संदंशशब्द., संदंशेन यथा दुरादानमादत्ते इति सादृश्येन यागे, तस्मात् कर्मनामधेयम् । १।४।४।०. • 'पर-प्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभि- । ज्ञाते, पुनश्च तैरेव संदंशेन तदिष्यते ॥ ' ( दर्शपूर्णमासादिप्रक रणस्थाना प्रयाजादीना श्रुत्यादिभिस्त्रिभि कस्मिंश्चिदङ्गे ज्ञाते, पुनश्च तैरेव प्रमाणैस्तस्मिन्नङ्गे ज्ञाते, संदंशेन संदंशसंभवेन तदिष्यते अवान्तरप्रकरणमिष्यते । न सर्वत्र, इति कारिकार्थ. ) । सर्वेषा हि प्रयाजादीना अङ्ग किंचिदुक्त्वा पुन. परामर्शोऽस्ति इति तत्पर्यन्ता-वान्तरप्रकरणकल्पना गतवि । वा. ३।१।१४।१४ । कस्मात् प्रमाणेन प्रधानकथंभाव बाधित्वा अङ्गगुणत्वा-पत्तये संदंशोऽस्ति. । सर्वेषा च अवान्तरप्रकरणित्वेन अभिमताना श्रुत्यादिभि. प्राक् तदङ्गमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावात् न क्वचित् संदंशाभाव. शङ्क-नीयः । सु पृ. १०७०.

• संदंशन्यायः । न च आत्मशब्दस्य ( 'आत्मे-वास्य ज्योतिः' इत्यत्र ) परमात्मपरत्वम्, पूर्ववाक्ये आत्मनि नाडीसंबन्धप्रतिपादनात् उत्तरवाक्ये च 'कतम आत्मेति योऽयं विज्ञानमय प्राणेषु हृदि अन्तर्ज्योतिः' इति पर्यालोचनया संदंशन्यायेन जीवपरत्वम् । अद्वैत. ३।१२ ( १३ ) । २०–२१.

꙰ सदंशपतितन्याय । सदंश 'सनासी' इति यस्य प्रसिद्धिः । तदवयवयो मध्यपातिन पदार्थस्य यथा ग्रहणमेव पूर्वोत्तरयोर्ग्रहणेन त मध्यस्थपदार्थस्य ग्रहण यत्र विवक्ष्यते, तत्रास्य प्रवृत्तिरिति । साहस्री ५०३

* सदंशरूपत्व अवान्तरप्रकरणस्य । भाट्ट ३।१।१०

* सदष्टन्याय मीको पृ ३६७८ 'विशिष्टविधि संदष्टन्याय' इत्यत्र द्रष्टव्य ।

* सदिग्ध असदिग्धेन निर्णीयते । बा ३।४।१३।१०, * सदिग्ध असदिग्धेन बाध्यते, अप्राप्तबाध । ३।३।७।१४ पृ ८६० * सदिग्ध असदिग्धेन बाध्यते । यथा शर्कराञ्जन घृतस्तुत्या । बाल पृ १४०

꙰ सदिग्ध सप्रयोजन च विचारमर्हतीति न्याय । यथा– विचारविषयत्व हि नाज्ञातस्य नापि निश्चितस्य, किन्तु सदिग्धस्येति भाव । साहस्री १८७

* सदिग्धस्य उपक्रमस्य वाक्यशेषात् निर्णय । १।४।१३।२४ मीको पृ ७ 'अक्ताधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । * सदिग्धाना अर्थाना वाक्यशेषात् अथाध्वाध्यवसायमुक्तम् । भा २।१।१।१ पृ ३७०,

꙰ सदिग्धे तु व्यवायाद् वाक्यभेद स्यात् । ३।१।११।२१ ॥

तैत्तिरीयक दर्शपूर्णमासयो सप्तमाष्टमयोर्व्याख्यानानुवाक्यो सामिधेन्य उक्ता, नवमे निविद, दशमे काम्या सामिधेनीकल्पा, एकादशे च यज्ञोपवीत माम्नातम् 'उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति, तत पुनरपि सामिधेनीगुणा । तत्र किं उपवीतस्य अत्रा न्तरप्रकरणात् सामिधेन्यङ्गत्व उत महाप्रकरणात् दर्शपूर्णमासाङ्गत्व इति विचार उपवीत सामिधेन्यङ्ग इति पूर्वपक्ष सिद्धान्तमाह । उपवीतवाक्य सामिधेनीवाक्येन एकवाक्य न भवति सदिग्धे वाक्यभेद इति निर्णय स्यात् । उभयत्र पूर्वपक्षाद्वाहुल्यर्थ । न तस्य तेन एकवाक्यत्व व्यवायात् निविद्भि निपायन्ना वाक्येन सामिधेनीभिरसंबद्धा व्यवधानात् । तथा च न सामिधेनीभि एकवाक्यता उपवीतस्य । तस्मात् कृत्स्ने दर्शपूर्णमासप्रकरणे यदनुष्ठेय तत् यज्ञोपवीतिना इति सिद्धान्त । के

* 'सदिग्धे तु व्यवायाद् वाक्यभेद स्यात् ।' ३।१।११।२१ ॥ निविदधिकरणमिदम् । * 'सदिग्धे वाक्यशेषाभ्यो निर्णय प्राक् समर्थित' (१।४।१३।२४ इत्यत्र) । बा. २।२।७।२१ पृ. ५२५

* सदिग्धेषु उपक्रमेषु वाक्यशेषात् निर्णयो भवति । 'अक्ता शर्करा उपदधाति' अनोपक्रमे अञ्जनद्रव्यस्य सदेह । 'तेजो वै घृतम्' इति वाक्यशेषे घृतस्य स्तुतत्वात् घृतेनाञ्जन इति निर्णय । वि १।४।१९ 'सदिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ।' (वक्ष्यति) । बा १।३।४।९ पृ २१८,

꙰ सदिग्धेषु वाक्यशेषात् । १।४।१३।२४॥

'अक्ता शर्करा उपदधाति, तेजो घृतम्' इति 'शासया दीक्षयति सौम्य वै क्षौम देवतया' इति 'ओषधीर्वपति, सप्त ग्राम्या ओषधय सप्ताऽऽरण्या' इति च श्रूयते । चातुर्होत्रचयनेषु क्षुद्रपाषाणा शर्करा उपधेया भवति । ताश्च शर्करा अक्ता इत्युक्त विधिवाक्ये अञ्जनद्रव्य तु नोक्त इति उपक्रम संदिग्ध । एव किं तत् वास , काश्च ता ओषधयो वप्तव्या इति उत्तरमपि वाक्यद्वय सदिग्धम् , एतादृशेषु सदिग्धेषु उपक्रमेषु खलु वाक्यशेषात् निर्णयो भवति । 'तेजो घृतम्' इत्यनेन घृतस्य स्तुतत्वात् घृतेन अक्ता इति निर्णय । एव क्षौमस्य अतसीतन्तुजन्यस्य (अतसी– आळशी–जवस) स्तुतत्वात् , ग्राम्यारण्याना च धान्याना वाक्यशेषे स्तुतत्वात् तत् वास क्षौम स्यात्, ओषधयश्च ग्राम्या आरण्याश्च स्यु इति निर्णय । एव संदिग्धोपक्रमस्थले असंदिग्धवाक्यशेषेण निर्णय कर्तव्य इति सिद्धान्त । के

꙰ सदिग्धेषु वाक्यशेषात् । १।४।१३।२४ ॥

'अक्ता शर्करा उपदधाति, तेजो वै घृतम्' इति श्रूयते । तत्र सदेह किं घृततैलवसानामन्यतमेन द्रवेण अभ्यक्तीया शर्करा उत घृतेनैवेति । अत्र प्रभाकरेण संगति लोभात् इदमधिकरणमुपवर्णितम्–'अक्ता' इत्युपक्रमे

उपसंहारस्थस्य विधेः उपक्रमानुसारित्वस्य न्याय्यत्वात् विष्ण्वादियुक्ता एव विषयः । सु. पृ ७४६. * न चात्र 'संदिग्धेषु वाक्यशेषात्' (१।४।१३।२४) इत्येतेन तुल्यार्थत्वम्, (लौकिक-वैदिक-)प्रतिपत्तिद्वयस्यापि असंदिग्धत्वात् । वा. १।३।४।९ पृ. २२३, * यदि तर्हि वाक्यशेषात् दातुः प्रतीयते (वाक्यश्रुत्यपालः) 'संदिग्धेषु वाक्यशेषात्' इत्यनेनैव गतार्थत्वात् अधिकरणं (३।४।११) नारब्धव्यम् । उच्यते । ३।४।११।३० पृ. ९६३. * 'सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यात्' सायंप्रात शब्दौ अन्तराशब्दार्थनिरूपकौ 'संदिग्धेषु वाक्यशेषात्' इति न्यायात् । आचारमयूखः पृ. ८१ (घारपुरेसंपादितः).

* संदिग्धार्थोपादाननिर्णायकः अर्थवादः यथा– 'एतद्वै दैव्यं मिथुनं यत् सरस्वती च सरस्वांश्च' इति शास्त्रदीपिकायाम् (५।१।७) । बाल पृ. ५७.

* संदिग्धार्थनिर्णायकत्वं यथा वाक्यशेषस्य (१।४।१८।२४) तथा सामर्थ्यस्यापि (१।४।१९।२५) । सु. पृ. ५२९.

* संदिग्धार्थशक्तिग्राहकार्थवादो यथा– 'यवमयीभिरद्भिरौदुम्बरी प्रोक्षति' इति विधेर्वाक्यशेषः 'यदा वा अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति तदुक्तम् 'शास्त्रस्था वा तन्निमित्तत्वात्' इत्यधिकरणे (१।३।५) । बाल. पृ ५७–५८.

* संदिग्धपक्षेतरत्वं नोपाधि. । समुदायात् इति केचित् । मणि. पृ. ३५.

* संदिग्धश्रुतेः असंदिग्धश्रुतिर्भेदीयसी । वा. ३।३।७।१४ पृ. ८४०.

* 'संदेहः क्रियते सर्वैः साधारणपदे स्थितः ।' (नासौ पूर्वपक्षगतः नापि उत्तरपक्षगत.) । वा. ३।१।६।१२ पृ. ६९५.

* संधिश्चेन् संगवादूर्ध्वं प्राक् पर्यावर्तनाद्रवेः । सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥' कात्तीये । संकर्ष. ३।१।५.

* संधिदिने एव सोमे सुत्या । संकर्ष. ३।१।६. 'सोमे सुत्या संधिदिने एव' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* संध्योपासना नित्यत्वेन आदिष्टा । वा. ४।१।३।२.

* संनयदसंनयदुभयस्यैनाभ्युदये प्रायश्चित्तम् । वि. ६।५।६.

* संनयदसंनयदुभयसाधारणता बर्हिरित्याद्युक्तकालस्य वत्सापाकरणस्य । भा. ६।४।१३।४१–४२.

सू संनहनं च वृत्तत्वात् । १२।१।१३।२९॥

'योक्त्रेण पत्नीं संनह्यति' इति दर्शपूर्णमासयोः पत्न्याः संनहनमुक्तम् । तत् सोमाङ्गेषु दैक्षिकेषु धर्मेषु चोदकेन प्राप्तमपि न कर्तव्यम् । वृत्तत्वात् दीक्षाकाले पत्न्याः संनहनं वृत्तम् । तत् वाससो धारणार्थं प्रसङ्गेन सिध्यति । इति सिद्धान्तः । के.

* संनहनं सर्वासां यजमानपत्नीनां दर्शादौ । संकर्ष. १।२।१ वर्णक २. मीको. पृ. ३१८३ 'यजमानपत्नीनां सर्वासां॰' इत्यत्र अधिकरणं द्रष्टव्यम् ।

सू संनहनादौ यजमानस्यैव पत्नी, नाध्वर्योः ॥

'पत्नीं संनह्याज्येनोदेहि' इत्यध्वर्युकर्तृकमन्त्रे पत्नीशब्दस्य प्रतिसंबन्धिबोधं अपेक्ष्य स्वार्थोपस्थापकत्वेन 'अर्धो वा एष आत्मनो यत् पत्नी' इत्याम्नानात् दम्पत्योरेककारकत्वेन च गृहकर्मसु पत्न्येव निपुणा मदपेक्षयेति लौकिकवाक्य इव वक्तुर्भार्याया एव बोधादध्वर्युभार्याया एव संनहनम् । ऋत्विक्संस्कारवत् तन्तूपकारकत्वसंभवात् । इति प्राप्ते, 'संपत्नी पत्या सुकृतेन गच्छताम्' इति मन्त्रवर्णाद्यजमानपत्न्या एव फलभोक्तृत्वादध्वर्युवक्तृकेऽपि तस्मिन् पत्नीपदेन यजमानाया एव बोधदर्शनात्तस्या एव संस्कारः । 'यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेत' इति लिङ्गाच्च । अध्वर्युभार्याबोधस्य स्वभावसिद्धत्वेन पुनर्विधानायोगात् । संकर्ष. १।२।१ वर्णकं १.

* संनहनमन्त्रस्य (बर्हिषः) आतिथ्याबर्हिषि अग्नीषोमीयदेशे स्तरणार्थं संनद्ध आह्रियमाणे आवृत्तिर्न कार्या ज्योतिष्टोमे । भा. १२।१।२१।४५–४६.

पु संनहनहरणे तथेति चेत्। १२।१।२१।४६॥
आतिथ्यायामुपयुक्तस्य बर्हिषः अग्नीषोमीयार्थं उत्तरवेदिसमीपे नयने 'पूषा ते ग्रन्थिं ग्रथ्नातु' इति संनहनमन्त्रः 'बृहस्पतेर्मूर्ध्ना हरामि' इति हरणमन्त्रश्च आतिथ्यायाः सकाशात् भेदेन प्रयोक्तव्यौ। संनहनहरणे संनहनहरणमन्त्रौ तथा स्तरणमन्त्रवत् आवर्तनीयौ इति पूर्वः पक्षः।

नान्यार्थत्वात्। ४७॥
आतिथ्याबर्हिषः आतिथ्यादेशात् अग्नीषोमीयार्थं उत्तरवेदिसमीपे नयने 'पूषा ते०' इति 'बृहस्पतेर्मूर्ध्ना०' इति च संनहनहरणमन्त्रौ भेदेन न प्रयोक्तव्यौ। अन्यार्थत्वात् दर्भच्छेदनदेशात् यागदेशे संनाहहरणार्थौ तौ मन्त्रौ। मन्त्रयोः अयमर्थः। अत्र तु न सोऽर्थः। तस्मात् संनहनहरणमन्त्रौ न आवर्तनीयौ इति सिद्धान्तः। के.

● संनहनहरणे लूनस्य बर्हिष उपादानार्थे। तत्र मन्त्रौ स्त्रीक्रियमाणस्यैव उपवर्णनात्मकौ। मा. १२।१।२१।४६.

पु संनहनहरणमन्त्राधिकरणम्। आतिथ्याबर्हिषि अग्नीषोमीयवेदौ स्तरणार्थं संनह्याऽऽह्रियमाणे संनहनाहरणमन्त्रयोर्नावृत्तिः॥

संनहनहरणे तथेति चेत्। १२।१।२१।४६॥
भाष्यम्— अग्नीषोमीये एव देशान्तरं नीयमानस्य बर्हिषः संनहनहरणमन्त्रौ प्रयोक्तव्यौ नेति चिन्त्यते। तत्राऽऽह। संनहनहरणमन्त्रौ तथा, यथा स्तरणमन्त्रः। भेदेन प्रयोक्तव्यावित्यर्थः। कुतः? उक्तो न्यायः। संनहनहरणमन्त्रौ कर्माङ्गे। ते च कर्मणी आवर्तेते। अतो मन्त्रयोरावृत्तिर्न्याय्या। तस्माद्भेदः।

नान्यार्थत्वात्। ४७॥
भाष्यम्— नैवमुक्तम्। कुतः? अन्यार्थत्वात्। लूनस्य बर्हिषो ये संनहनहरणे ते उपादानार्थे। तत्र हि मन्त्रौ स्त्रीक्रियमाणस्यैवोपवर्णनात्मकौ, 'पूषा ते ग्रन्थिं ग्रथ्नातु' 'बृहस्पतेर्मूर्ध्ना हरामि' इति। इमे पुनः स्त्रीकृतस्य देशान्तरप्रापणार्थे, अन्यार्थत्वादप्राकृतार्थे न मन्त्रं गृहीतः। यथा तथैवाऽऽतिथ्यायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्षणाय बर्हिर्नीयते, न तदा आहरणमन्त्रः प्रयुज्यते। एवमिहापि।

शा— यदेव बर्हिः प्राग्वंशे स्तीर्णं पुनः संनह्य उत्तरवेदिसमीपे स्तीर्यते। प्रकृतौ संनहनमन्त्रः 'पूषा ते ग्रन्थिं ग्रथ्नातु' इति। तथा हरणमन्त्रः 'बृहस्पतेर्मूर्ध्ना हरामि' इति। तौ किमस्मिन् संनहने हरणे च प्रयोक्तव्यौ नेति संदेहे संनहनहरणयोरावृत्तेः मन्त्रयोरपि पूर्ववदावृत्तिः स्यात्। नैवम्। प्रकृतौ हि लूनस्य बर्हिषो बर्हिर्हारदेशप्रापणार्थं संनहनं हरणं च तदर्थिनौ मन्त्रौ, विहारदेशं प्रापितस्य बर्हिषो वेदिदेशप्रापणार्थमेतत्। अतः अन्यार्थत्वात् कार्यप्रयुक्तत्वाच्च मन्त्रयोः, न प्रसङ्गः। यथा च प्रकृतावेव गार्हपत्यादाहवनीये नीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तथेहापि।

सोम— मन्त्रावापचिन्ताऽपि इयं पूर्वाधिकरणोक्तमन्त्रावृत्तिप्रसङ्गात् अत्र कृतेति ध्येयम्। सूत्रे स्तरणतोक्तं यथान्यथार्थः।

वि— 'संनाहे हरणे मन्त्रावावर्त्यौ किं न वा, ऽग्रिमः। पूर्ववत्, नेदृशं कार्यं प्रकृतौ तदभावतः॥' प्रकृतौ लवनदेशादानयने कार्ये तौ मन्त्रौ दृष्टौ, न तु गार्हपत्यादाहवनीयं प्रति आनयने। अतोऽत्रापि प्राग्वंशादुत्तरवेदिं प्रति आनयने तौ मन्त्रौ न चोदकात् प्राप्नुतः।

भाट्ट— तस्यैव बर्हिषः प्राग्वंशे स्तीर्णस्य उत्तरवेदिसमीपे स्तरणार्थं पुनः संनहनमाहरणं च क्रियते। तत्र प्राकृतौ मन्त्रौ 'पूषा ते ग्रन्थिं ग्रथ्नातु' 'बृहस्पतेर्मूर्ध्ना हरामि' इत्येतौ किं पुनः प्रयोक्तव्यौ न वेति चिन्तायाम्, पूर्ववत् क्रियावृत्तौ आवृत्तिः। इति प्राप्ते, नेदं प्राकृतं संनहनं लवनोत्तरकालविहितसंनहनस्यैव तत्त्वात्, किंतु आर्थिकम्। अतश्च नैषप्राकृतसंनहनाङ्गभूतौ मन्त्रौ नात्रैव प्राप्तुमर्हतः। यास्त्विदानीं तत्र मन्त्रं पठन्ति, तेषामयमाशयः, यद्यपि आर्थिकमिदं संनहनं तथापि तस्य प्राकृतार्थत्वमेव। प्राकृतस्य संनहनस्य वेदिस्तरणार्थहरणसिद्धिरेव। प्रत्यक्षं न स्यात्। अतश्च उपयोक्तव्या अपूर्वप्रयुक्तसंनहनाङ्गं मन्त्रः तत्र किं. आर्थिकेऽपि संनहने स्यादेव। नहि मन्त्र प्रति

तस्य वैधत्वादिना स्तरणोत्तरकालीनत्वादिना वा उद्देश्यता, प्रमाणाभावात् ।

वस्तुतस्तु 'बर्हिः सन्नह्यति' इति वचनेन उक्तप्रयोजनार्थं विहितस्य सन्नहनस्य अत्र प्रयोजनानुरोधेन आवृत्तिरेव स्यात्, इति मन्त्रावृत्तौ न किंचित् बाधकमस्ति । आहरणे तु प्रकृतौ विहारदेशप्रापणानुकूल एव मन्त्रो विहितः, न तु गार्हपत्यात् वेदिदेशप्रापणानुकूलः । इह च वेदिदेशप्रापणानुकूलस्यैव आवृत्तिः इति क्व मन्त्रावृत्तिशङ्का । अत एव वस्तुतः उभयस्यापि अत्र प्रसङ्गाभावेऽपि आवृत्तिमात्रमात्रेण प्रासङ्गिकी अध्यायसङ्गतिः ।

मण्डन— 'तेषां पशौ सन्नहनं न मन्त्रवत् ।' तेषां बर्हिषाम् ।

शङ्कर— 'नाहृत्येति मन्त्रं नेतरम् ।' नाहृत्य सन्नहनम् हृतिः हरणम्, तयोः मन्त्रौ मन्त्रौ, एव मिश्रौ न, नावर्तनीयौ इत्यर्थः ।

• सन्निकर्षः । न हि अत्यन्तसन्निकर्ष एव एकसंबन्धकारणम् । यथा यथा हि सन्निकर्षो न लभ्यते तथा तथा विप्रकर्षे वेदशक्तिः सचरति । शा १।३।४।११. • सन्निकर्षः (प्रत्यक्षज्ञानहेतुः) संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायश्चेति (त्रिविधः) । द्रव्यं संयोगेन, तद्गतगुणकर्मजातयो द्वितीयेन, गुणकर्मगतजातयः तृतीयेन ।

केचित्तु, समवायरूपप्रत्यासत्त्या द्रव्यगुणकर्मसामान्यगता सत्ता गृह्यते । सत्ता च नैत्कालसंबन्ध इति तस्य जातिगतत्वं नानुपपन्नमित्याहुः । तेषां मतं नादरणीयम् ।

शब्दस्य च द्रव्यत्वात् तत्रापि संयोग एव संबन्धः । न च शब्दश्रोत्रयोः संयोगासंभवः, तस्य सर्वगतत्वेन विभुतया दिगात्मकश्रोत्रस्यापि विभुतया संयोगासमवायिकारणकर्माभावात् इति वाच्यम् । न तावत् संयोगस्य नित्यत्वं प्रति कर्मणो जनकता, संयोगजसंयोगव्यभिचारात् । किन्तु विजातीयसंयोगं, तत्र चैतादृशकार्याभावात् जन्यसंयोगे कर्मत्वेन कारणता युक्ता । संयोगजसंयोगनिष्ठवैजात्याच्च न व्यभिचारः ।

विभुनी मिथः संयुक्ते, निरन्तरद्रव्यत्वात्, घटाकाशवत्, इत्यनुमानेन विभुसंयोगसिद्धेश्च । मणि पृ २० • सन्निकर्षस्य सन्निधित्वेन स्थानत्वात् तस्य च प्रकरणात् दौर्बल्यम् । सु पृ २२८६

• सन्निकर्षविप्रकर्षौ तत्रापेक्ष्येते यत्र विरोधः कश्चित् । वा ३।०।१०।२१

• सन्निकृष्टानुवादासंभवे विप्रकृष्टानुवादोऽपि आश्रीयते । यथाप्राप्त्यपेक्षो हि स भवति । वा ३।४।१।०-२

• सन्निधानम् । असत्या हि आकाङ्क्षायां सन्निधानमकारणं भवति । यथा 'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति । एकस्मिन्नपि वाक्ये तदवयवभूतस्यानपेक्षितस्य नैव भवति संबन्धः । यथा अश्वेन व्रजति, श्वेतेन पटेनावृत इति । नानपेक्षितस्याश्वस्य श्वैत्यं विशेषणं भवति । भा ६।४।८।२३ • आकाङ्क्षा-योग्यता सन्निधानानि हि अन्विताभिधाने प्रयोजकानि न तु शब्दोपात्तत्वमपि । सोम ५।१।१ वर्णक ३ • सर्वेशावयविनि विध्यन्तरे सन्निधानस्य अति आकाङ्क्षत्वात् विशेषक(र)त्वम् । के (संकप)

ड्ड सन्निधानविशेषादसंभवे तदङ्गानाम् । ३।८।२०।३७ ॥

श्येन 'हविनवनीतमाज्यं भवति' इति श्रूयते । हविः चमसाज्यम् । तस्मिन् चिरकालं संगृहीतं यत् नवनीतं तत् आज्यस्थाने भवेत् इति वाक्यार्थः । तदिदं नवनीतं प्रधानस्य स्यात्, इति उक्ते पूर्वपक्षे सिद्धान्तयति । ज्योतिष्टोमविकारे श्येने संनिधानविशेषात् चोदकेन प्राकृतस्य सोमस्य सन्निधानं भवति, तादृशात् सोमस्य चोदकप्राप्तसंनिधानविशेषात् श्येनप्रधाने नवनीतस्य असंभवे सति आनर्थक्यतदङ्गन्यायेन तदङ्गानां श्येनाङ्गानां दीक्षणीयादीनां हविर्नवनीतमाज्यं स्यात् । यत्र चोदकप्राप्तं घृतं तत्र आज्यस्थाने हविर्नवनीतं स्यात् । तथा च श्येने हविर्नवनीतं न प्रधानस्य किं तु अङ्गानां इति सिद्धान्तः ।

आधानेऽपि तथेति चेत् । ३८ ॥

श्येनयागे 'हविर्नवनीतमाज्यम्' इति श्रूयते । हविर्धर्मप्रकरणम् । तत्र प्राक् स्थापितं आज्यं आज्यार्थेषु ग्राह्यम् । तत्र शङ्का, आधानेऽपि आधानगतपवमानेष्टिष्वपि तथा श्येनाङ्गेषु इव हविर्नवनीतमेव आज्यार्थेषु स्यात् । दर्शादिवत् श्येनाङ्गत्वं सामान्यतः पवमानेष्टिष्वपि विद्यत एवेति । इति चेत् ।

नाप्रकरणत्वादङ्गस्यातन्निमित्तत्वात् । ३९ ॥

श्येनयागे 'हविर्नवनीतमाज्यं भवति' इति श्रुतम् । हवि. धर्मप्रकरणम् । तस्मिन् विहितं नवनीतं आज्यस्थाने भवति इति वाक्यार्थः । तद्यदि श्येनाङ्गेषु भवेत् तथा सति आधाने पवमानेष्टिष्वपि श्येनाङ्गत्वाविशेषात् स्यात् इति पूर्वसूत्रेण शङ्कायां उच्यते न पवमानेष्टिष्वपि हविर्नवनीतं प्राप्नोति । न हि पवमानेष्टयः श्येनाङ्गम्, अप्रकरणत्वात् । न प्रकरणं श्येनप्रकरणं यासु ताः पवमानेष्टय. अप्रकरणा. । आधानस्य पवमानेष्टीनां वा श्येनप्रकरणस्याभावात् तास्वपि हविर्नवनीतं न स्यात् । पवमानेष्टीनां यत् अङ्गत्वं तत् न तन्निमित्त श्येननिमित्तकम् । किंतु कर्मसामान्यसंबद्धाधाननिमित्तकं अग्निनिमित्तकं वा । तस्मात् पवमानेष्टिषु न हविर्नवनीतम् ।

अत्र सुधा— पवमानेष्टीनां श्येनप्रकरणानधीतत्वात् अङ्गत्वस्य उपकारनिमित्तत्वाभावात् अनङ्गत्वेन आनर्थक्यतदङ्गन्यायाविषयत्वात् न तत्र नवनीतप्राप्ति. इत्येवमर्थतया सूत्रं भाष्यात् भासते । पवमानेष्टिस्थस्य आज्यकार्यस्य असंनिहितत्वेन नवनीतविधौ अनुवादायोगात् नवनीतस्य च श्येनोपकारिकर्माङ्गतया संनिध्यनपेक्षोपकारित्वमात्रनिमित्तत्वाभावात् । पवमानेष्टीनां श्येनोपकारित्वमात्रेण तदङ्गत्वस्य आज्यकार्यस्य असंनिहितस्य अनुवादायोगात् न नवनीतेन सह अङ्गाद्यन्वयः किंतु संनिधानात् इति वार्तिकमतेन सूत्रार्थः । इति । के.

■ संनिधानविशेषात् यो गम्यते स विनिश्चितो भवति । अविशेषाश्च कारणाभावात् । भा. ११।१।१३.

● संनिधिः । अपेक्षितसंनिधिर्हि (पदार्थानां) संबन्धकारणं न संनिधिमात्रम् । शा. ३।२।८ पृ. २२०. ● संनिधि. बुद्धौ विपरिवृत्ति. । सा च आनन्तर्ये समक्षपदपाठे च भवति । समक्षपदपठितिरपि आनन्तर्यप्रकार एव । वा. २।१।१६।४८ पृ. ४५५. ● संनिधि. वाक्यस्य स्वार्थप्रतिपादने सहकारी । वि. १।१।७. ● संनिधिः शाब्दबोधहेतुः । मीको. पृ १०१९ 'आसत्तिः' इत्यत्र द्रष्टव्यम् । ● न हि अतिदेशस्य संनिधिः कारणम्, सारूप्यप्रकारत्वेन वक्ष्यमाणत्वात् (सप्तमेऽध्याये) । वा. ३।६।१६।४३ पृ १०६७ । न च सारूप्यमेवैकमतिदेशस्य कारणम् । पृ १०६८. ● संनिधिना समाख्याया बाधः । यथा श्येने सामवेदोक्ते लोहितोष्णीषप्रचरणं सर्वेषामृत्विजां न तु उद्गातॄणामेव । वि. ३।८।५. ● संनिधेः महाप्रकरणं प्रबलम्, तेन अक्षविदेवनादीनां राजसूयाङ्गत्वमेव, न तु अभिषेचनीयाङ्गत्वम् । वि. ४।४।२. ● संनिधेः सादेश्यनिमित्तस्य विनियोगहेतुत्वं अवसीयते । सु. पृ. ११९३. ● संनिधौ अनुपादेयगुणानां (देशकालनिमित्तफलसंस्काराणां) कर्मान्तराबाधकत्वम् । भाट्ट. ५।३।१३.

संनिधौ त्वविभागात् फलार्थेन पुनः श्रुतिः । २।३।१३।२६ ॥

अवेष्टिं प्रकृत्य 'एतयाऽन्नाद्यकामं याजयेत्' इति श्रूयते । राजसूयप्रकरणस्थावेष्टि. कर्मान्तरमिव अवेष्टिः विधीयते इति पूर्वपक्षं सूत्रकारो व्यावर्तयति । नैव कर्मान्तरं किंतु फलान्तरप्रतिपादनार्थं प्रकृताया एव अवेष्टेः पुनर्विधानम् । इति सिद्धान्तः । अयमर्थस्तु संनिधौ कर्मणः संनिधौ सति अविभागात् यातो. संनिहितकर्मपरामर्शकत्वस्यैव युक्ततया तद्धर्मस्य विभागाभावात् संनिहितकर्मविधया भेदाप्रत्ययात् फलार्थेन अनुपादेयगुणसंबन्धरूपप्रयोजनानुरोधेन पुनःश्रुतिः संनिहितकर्मण एव पुनःश्रवणम् । न कर्मान्तरविधानार्थम् । अत्र फलपदं अनुपादेयमात्रोपलक्षणम् । अनुपादेयानि च 'देशः कालो निमित्तं च फलं संस्कार्यमेव च । इति मीमांसकाः प्राहुरनुपादेयपञ्चकम् ॥' इति । के.

• नापि अनुपादेयगुणयोगरूपं प्रकरणान्तरं तद्भेदकम्। तस्य 'संनिधौ त्वविभागात्०' इति न्यायेन संनिधौ अप्रवृत्तेः । कौ. २।२।३।२ पृ. १६४. • 'पौर्णमास्यां यजेत' 'सायं जुहोति' 'प्रातर्जुहोति' इत्यादौ कालोद्देशेन कर्मविधानेऽपि न कर्मान्तरत्वमिति 'संनिधौ त्वविभागात्०' इत्यधिकरणेऽनुपदमेव वक्ष्याम । कु. २।३।११।२४. • प्रकरणान्तरत्वाच्च विना फलादीनां भेदकत्वमुक्तमपि न दृष्टं (भाष्यान्तरवृद्धि.) 'संनिधौ त्वविभागात्०' इत्यादौ । वा. २।३।१३।२६ पृ. ६२०, • फलसंबन्धोऽपि च 'संनिधौ त्वविभागात्०' इत्यनेन न्यायेन न कर्मान्तरबुद्धिं करोति । २।२।२।२, • सत्यपि फलं प्रति विधाने 'संनिधौ त्वविभागात्' इत्यनेनाकर्मान्तरता । २।३।४।८ पृ. ५९५, • सति हि यथाप्रकारेण उत्कर्षे पूर्वस्यैव प्रयोगस्य निवृत्ते काले प्रति उपादानप्रत्यभिज्ञानात् फलस्येव। यथोक्तं 'संनिधौ त्वविभागात्' इति । ३।६।७।२२ पृ १०४९-१०५०. • संनिधौ फलादेः कर्मभेदकत्वाभाव (देश-काल-निमित्त-फल-सहकारिणाम्) । भा. २।३।१३।२६ पृ. ६२०.

• संनिधिपाठ पाठसादेश्यमपरमस्य अपरः प्रकारः । बाल पृ १२. • संनिधिपाठात् वैकृतानां प्राकृताङ्गानुवादेन विहितानां अङ्गानां सदस्यपनीतानां निरन्वयत्वं सिध्यति । मीन्या. • संनिधिपाठात् 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः सान्नाय्यपात्रशोधने विनियुज्यते । ३।३।०।१२ मीको. पृ. १५०९ 'क्रमाधिकरणम्' द्रष्टव्यम् ।

• संनिधिप्रकरणयोः प्रकरणं बलवत् । संनिधि. अविरोधे विनियुङ्क्ते । विरोधे तु विदेवनादिवत् (राजसूये 'अक्षैर्दीव्यति, शौनःशेपमाख्यापयति') प्रकरणेन बाध्यते । वा. ३।३।११।२१ पृ. ७३६.

• संनिधिसन्नद्ध आमनहोमाः साग्रहणीयपरम् । नि. ४।४।८.

• संनिधिमात्रेण कर्मानुवादोपपत्तिः । सु पृ. ७७३.

• संनिधिलक्षणलौकिकप्रकरणस्य यौगिकश्रुतिजनितविशेषप्रत्ययेन बाध्यमानत्वम् । वा. ३।२।८।२१ पृ. ७७४.

• संनिधिविषयः विकृतिषु सर्वास्वेव । वा. ३।३।१२।२१ पृ. ७३६.

• संनिधिसत्त्वेऽपि अनुपादेयगुणयोगेऽपि न कर्मान्तरम् । भाट्ट. २।३।१३.

• संनिपत्योपकारकं अङ्गाङ्गम् । कर्माङ्गभूतद्रव्याद्युद्देशेन विधानात् । मीन्या. • संनिपत्योपकारकमपि प्रोक्षणादि अपूर्वप्रयुक्तम् । भा. ९।१।२।२।-३. • संनिपत्योपकारकं आरादुपकारकाद् बलीयः । 'स्थाण्वाहुतिं जुहोति' इति विहिता स्थाण्वाहुतिः यूपखननस्थाणुद्वारा यूपसंस्कारार्था । नासौ आरादुपकारिका । मीन्या. • संनिपत्योपकारकं उत्पत्त्यपूर्वप्रयुक्तं द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपोपयोगात् । तथापि पूर्वाङ्गानां उत्पत्त्यपूर्वोत्पत्तौ उपयोगः, उत्तराङ्गानां तु तदस्थितावुपयोगः । मीन्या. • संनिपत्योपकारकमेव आश्रयिकर्म इत्युच्यते । बाल. पृ. ८३, • संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म त्रिविधम्-दृष्टार्थं अदृष्टार्थं दृष्टादृष्टोभयार्थं चेति । पृ. ८२. • संनिपत्योपकारकं दृष्टार्थं अदृष्टार्थं दृष्टादृष्टार्थं चेति त्रिविधम् । तत्र दृष्टार्थं अवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि । मीन्या. • संनिपत्योपकारकं द्रव्यदेवतान्यतरनिष्ठोद्देश्यतानिरूपितविधेयतावत् कर्म । यथा प्रोक्षणावघातादि । यत्तु द्रव्यदेवतान्यतरसंस्कारकं कर्म इति लक्षणं तन्न । यजमाननिष्ठप्रयाजादिजन्यादृष्टव्यावृत्तदृष्टादृष्टसंस्कारमात्रवृत्तिसंस्कारत्वस्य एकस्याभावेन तद्घटितलक्षणासंभवात् । केचित्तु द्रव्यदेवतान्यतरनिष्ठापूर्वसाधनतावच्छेदकोद्देश्यतानिरूपितविधेयताशालित्वं इति लक्षणमाहुः । तच्च । यूपाद्युद्देशेन विधीयमानच्छेदनादौ अयाते । मुरारिः म-पृष्ठ ११६२. • संनिपत्योपकारकं द्विविधं उपयोक्ष्यमाणार्थं उपयुक्तार्थं चेति । तत्रोपयोक्ष्यमाणार्थं अवघातप्रोक्षणादि, उपयुक्तार्थं च प्रतिपत्तिकर्म । मीन्या. • संनिपत्योपकारकाणि

अवघातादीनि द्रव्यदेवतासंस्कारद्वारेण अपूर्वनिष्पत्तौ व्याप्रियन्ते, आरादुपकारकाणि प्रयाजादीनि तु फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते । वि. २।१।२. * संनिपत्योपकारकाण्येव 'गुणकर्माणि' 'आश्रयिकर्माणि' इति चोच्यन्ते । कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकं यथा अवघातप्रोक्षणादि । मीन्या. * संनिपत्योपकारकाणि फलनिर्वृत्त्यङ्गानि । टुप्. ९।१।१।१, * संनिपत्योपकारकः तृतीयोऽनुयाजो दर्शपूर्णमासयोः । १०।४।१९।३८, मीको. पृ. ४११ 'अनुयाजस्य तृतीयस्य०' इत्यत्र अधिकरणे द्रष्टव्यम् । * संनिपत्योपकारकाः आरादुपकारकाश्च धर्माः अपूर्वार्था इति स्थितं प्रकरणेन प्रमाणेन । टुप्. ९।१।१।१ वर्णके २, * इह च संनिपत्योपकारकाः सर्वे आम्नायमानाः नियकाङ्क्षीकरणसमर्थाः । ८।१।३।५. * संनिपत्योपकारकेण आरादुपकारकस्य बाध्यते (अयं) अप्राप्तबाधः । वा. १।३।७।१४ पृ. ८६०. * संनिपत्योपकारकाणां अङ्गानां अनेकप्रधानसाहित्यस्थले प्रधानविशेषे काण्डानुसमयः विशेषाभावे तु पदार्थानुसमयः । प्राजापत्यपशुषु उपाकरणादीनां पदार्थानुसमयः । दर्शपूर्णमासयोः पदार्थानुसमयः । वारुणचतुष्कपालस्य निर्वापादौ पदार्थानुसमयः अवदानादौ तु काण्डानुसमयः । तेषामेकत्वव्यक्ते तु अवदानादावपि पदार्थानुसमयः । सोम. ५।२।१. * संनिपत्योपकारकेषु पदार्थानुसमयः प्राजापत्यपशुषु । टुप्. ५।२।१।१–३. * संनिपत्योपकारकेषु यावद्विनियुक्तेषु प्रोक्षणादिषु अपूर्वमुत्तरम् । भा. ९।१।२।२–३.

* संनिपत्योपकारकाङ्गजन्यानि अपूर्वाणि उत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते । वि. २।१।२.

* संनिपत्योपकारकाङ्गविचारः ( अङ्गपारायणम् ) — 'व्याख्याविकल्पसंभवमङ्गान्यविकृत्य संशयं छेत्तुम् । परमं प्रभाकरगुरोर्गम्भीरं भावमभिधास्ये ॥' इह चतुर्विधमङ्गजातं जातिगुणद्रव्यभावार्थात्मकम्, तत्र भावार्थात्मकमपि द्विविधं संनिपत्योपकारकमारादुपकारकं च । तत्र संनिपत्योपकारकं चतुर्विधम्, साध्यभूतोत्पत्तिप्राप्तिविकृतिसंस्कृतिभेदात् । यथाक्रमं मथनदोहनविलापनप्रोक्षणादिरूपम् । मथनेन ग्रामभूत. पिण्डः उत्पद्यते । तदेव क्षीरं दोहनेन प्राप्यते । विलापनेन प्राची संहतावस्थामपहाय्य द्रवावस्था आज्यस्योत्पद्यते । पार्थिवं ह्याज्यं गन्धवत्त्वात् स्वभावतः संहतरूपमग्निसंयोगेन द्रवीभवति । तदाह भगवान्काश्यपः — 'सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम्' इति । तथा च शाब्दैरप्युक्तम् । अग्निसंयोगेनाज्यं द्रवीभवतीति च्विप्रत्ययप्रयोगादिति । प्रोक्षणेन तु द्रव्यस्य न प्राग्वस्थान्यत्वेन दशान्तरमाद्भावीति । श्लोकश्चात्र भवति 'पूर्वावस्थाप्रहाणेन दशान्तरपरिग्रहः । विकारस्माहुः संस्कारं केवलातिशयोदये ॥' इति । किं पुनरेषां चतुर्णामपि संनिपत्योपकारित्वे लक्षणम्, यत्कारकविशेषेऽपेक्ष्य फलं जनयति तत्संनिपत्योपकारकम् । यथा कर्तरि स्थानम्, कर्मणि अवघातादि, अधिकरणे दर्भास्तरणवेदिव्यूहनीयम् । तत्र संनिपत्योपकारकाङ्गपारायणेषु केचित् पृथग्विधीनमुपगच्छन्ति । ते हि मन्यन्ते — यत्र द्रव्यपरिग्रहो नाभ्युपगम्येत तत्र अधिकाराधिकारावरुद्धत्वेनावघातादीनां न स्यात् । न च द्रव्यसम्बन्धमुखेन प्रकृताधिकारापूर्वसम्बन्धादङ्गत्वसिद्धिः । व्रीह्यादिशब्दानामाकृतिवचनत्वात्, यद्यपि कार्यसम्बन्धवशतया व्यक्तीनां प्रकरणार्थो व्रीहिशब्दः, तथापि व्यक्तिमात्रं लक्ष्येत नापूर्वविशेषसम्बद्धा व्यक्तिः । न च प्रकृताग्नेयीवत् तदपूर्वसम्बन्धविशिष्टनैवापूर्वसम्बन्धः तथापि यथा आग्नेयीन्यायेन संनिहितव्यक्तिपरिग्रहः, तथापि स्वरूपेणैव तासां प्रकृतव्यक्तिपरिग्रहेण प्रतीतिः, न पुनरपूर्वविशेषसाधनतया तस्य स्वरूपस्य लाक्षणिकत्वात् । न च लक्षितलक्षणाया प्रमाणमस्ति । तथाहि, व्रीह्या व्यक्तिः लक्ष्यते । व्यक्त्या च साधनविशेष० इति लक्षितलक्षणा प्रकरणाभावात् अयुक्ता । अत एव च 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति तस्यापि प्रकृतपरिग्रहे न प्रकरणेन आग्नीध्रं उपस्थानं च । अत एव च न तत्र विनियुक्तविनियोगविरोधः । कार्यान्तरसाधनतया च आग्नीध्रोपस्थानेऽविनियोगात् । एवं च स्वरूपमात्रेण अवघातादीनां संबन्धात् नापूर्वविशेषसम्बन्धसिद्धिः । दीर्घमीयवाद्-

नियमनवत् । यथा स्वाभान्तरापूर्वसंबन्धात् वाङ्नियमो नाधिकारापूर्वानुप्रवेशी तथा अवघातायपि स्यात् । ततश्च अधिकारपूर्वे प्रत्यवघातादीनामङ्गता न स्यात्, तदनङ्गत्वे च तत्प्रयुक्त्यभावात् अवघातादीनामनुष्ठानं न स्यात् । अतः अवघातादिपूर्वोत्पत्तिनियोगोऽङ्गीकरणीयः । तस्मिन् स्वह्राश्रिते अधिकाराभावेन तस्यानुष्ठानानुपपत्तेरधिकारिणि कल्पयितव्ये प्रकृताधिकारापूर्वोऽधिकृत एव प्रयाजादिष्विवाधिक्रियते इति उपायोपेयभावात् तदङ्गत्वसिद्धिरिति । तदिदं तत्र भवानुपाध्यायो न मृष्यति । अनभिज्ञो भवान् विषयनियोगानामिति । अवघातादिषु शब्दतो वस्तुतो वस्तुस्वभावतश्च प्रोक्षणादिषु शब्दत एव तुषकणविमोचनादि दृष्टमदृष्टं च कार्यमङ्गीक्रियते । तत्र यदि नियोगोऽप्यपर आश्रीयते कार्यभूतस्तदा कार्यद्वयमेकस्मिन् कार्ये नान्वीयते । न च यथा स्वर्गादिकं फलं तथा भूतमेव तद्भवितुमर्हति । तस्य च नियोगविशेषणत्वेनान्वयसंभवात् । न च तुषकणविमोचनादि नियोगविशेषणं क्रियाफलत्वात् यदेव नियोगात् फलं तदेव नियोगविशेषणतामनुभवति । साध्यविशिष्टो हि नियोगस्तदेव कार्यतया प्रतिपत्तुमर्हति यदेव तस्य साध्यं साधयति इति नियोगविशेषणस्य सिद्धिरपेक्ष्यते । यच्च क्रियाफलं न तन्नियोगात्सिध्यतीति न तद्विशिष्टो नियोगो नियोज्यतामश्नुते । न च प्रतीततुषकणविमोचनादिकार्यत्यागो युक्तः, प्रतीतहानादेव । ननु च नियोगाभिधायिलिङ्गादिप्रयोगवशेन नियोगोऽपि प्रतीत एवेति तुल्यो दोषः । उच्यते । संनिहिते विधौ विधिरवगम्यमानः स एव तावदवगन्तुमुचितः । तत्र यदि तद्विषयानुप्रवेशिता विषयस्य न स्यात् । भवद्विषयान्तरम् । अनुप्रविशन्ति चावघातादिप्रकृतविषये तदर्थव्रीह्यादिसंबन्धात् । तथाहि संनिहिताधिकारिनियोगपरतयैव अवहन्त्यादिभिः पदैः अवघातादय उच्यन्ते । तथाभूतानां तेषां क्रियाकारकभावोपदेशात् । यदि स्वरूपमात्रावस्थितैर्व्रीह्यादिभिः सह संबन्धः स्यात्तदा तदधिकारसंबन्धो न स्यात् तदीयसाधनविशेषरूपतया व्रीह्यादिभिः पदैर्व्यवस्थापितोऽवघातादिभिरन्वीयते न स्वरूपमात्रमेव चोपदेश एव यत्रेष्वप्यवघातादय सिद्धा भवन्ति, साधनभावस्याविशेषात् । अत एव चावघातादयो नियोगसाधनतयाऽप्राप्ता एव विधीयन्ते । नियमस्तु प्रयोजनम् । यदि नियोगाङ्गतया अवघातादयो न विधीयेरन् । तदा पुरोडाशमात्रसिद्ध्यर्थतया नखदलनाद्यप्याक्षिप्येत, नियोगाङ्गतया त्ववघातादिषु विहितेषु तैर्विना नियोगसिद्ध्यनुपपत्तेर्नियमेन त एवाक्षिप्यन्ते नियोगाङ्गता तु पक्षेऽप्यप्राप्ता । नियोगस्यालौकिकतया तदङ्गस्यापि शब्दादन्यतोऽनवगमात् नियोगाङ्गत्वाच्च अवघातादीनां नियोगसंबन्धः प्राप्तः स लिङ्गादिभिरनूद्यते । ननु यद्यवघातादीनां नियोगसंबन्धोऽस्ति कथं तर्हि तेषां नियोगाविषयत्वम् ? उच्यते । किंतु यस्य नियोगस्य सिद्धिरेव कार्यं स विषयः, अवघातादीनां च तुषकणविमोचनाद्यवान्तरकार्यं कुर्वतां नियोगाविषयत्वम्, तेन नियोगाविषयत्वमङ्गता चेति सिद्धम् । विधेयास्त्ववघातादयो नियोगसिद्ध्यर्थं तयोपादीयमानत्वात्तदुक्तम् 'यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेयमिति तत्र व्यवहारः' इति । तदेव नियोगप्रत्यभिज्ञोपबृंहितसंनिधानमात्रेणैवावघातादीनां नियोगाङ्गता न पदार्थान्वयमुखेनेति सिद्धम् । येषां पुनः पदार्थान्वयमुखेनानुप्रवेशोऽभिमतस्तेषां प्रकरणाधीतस्य पात्रद्वयस्यानारभ्याधीतस्य च शास्त्रद्वयस्य सामिधेनीसंबन्धमुखेनानुप्रवेशनोरविशेषात् उभयोरपि प्रकृतावेव नियोगो विकल्पश्च स्यात् । संनिधानमात्रेण तु प्रकरणाधानस्य ग्रहणे शीघ्रं पात्रद्वयमधिकारानुप्रविष्टमिति तदवरुद्धे शास्त्रद्वयमधिकारविधौ नानुप्रविशति तेन विकृतावेव तस्य निवेशः इति । यदि संनिधानतोऽधिकारविधावनुप्रवेशः तर्हि पर्णतादीनां अनारभ्याधीतानां कथमनुप्रवेशः । उच्यते । जुह्वादयोऽव्यभिचरितक्रतुसंबन्धा इति तत्संबन्धमुखेन क्रतुसंबन्धसिद्धिः । तस्मात् येनैव च जुह्वादिषु पर्णतादिसंबन्धात् । अत एव 'हिरण्यं भार्यम्' इति स्वतन्त्रमेवाधिकारनियोगविषयः । हिरण्यस्य क्रतुसंबन्धव्यभिचारात् । ये च पदार्थस्वरूपानर्थक्यापत्तेस्तस्यैवान्यावस्थान्वयपूर्वकं प्रकरणान्वयमाहुः । तेषामिदमेव तावत् स्यम् । आनर्थक्येन न भवितव्यमिति, वेदवाक्यत्वादिति चेत्, वेदेनानर्थकेन न भवितव्यमिति न

'सुवर्णं भार्यम्' इति क्रतुधर्म एव स्यात् । श्रुतानु गुणाधिकारानुप्रवेशितेव न्याय्या, यतः न स्वतन्त्राधिकारकल्पना एवमतः सुवर्णशेषित्वत्यागप्रसङ्गात् । क्रियाजन्यफलभागित्वे तु शब्दार्थे न श्रुतहानिरिति स्वतन्त्रकर्तृतावगमात्, तत्कारणभूताधिकारत्वेनैव न्याय्या प्रकृतनियोगप्रत्यभिज्ञानाद् नियोगान्तरे स्थिते प्रजापतिव्रताधिकारवत् कल्पनेनाधिकारकल्पनैव उचितेति स्नानादिषु वस्तुस्वभावपर्यालोचनया लिङ्गारकर्तृसंस्काररूपकार्याङ्गीकारः । तेन कर्तरि शेषितामानादीनां सामर्थ्यासामर्थ्यमात्रं च लिङ्गम् । नाभिधानसामर्थ्यमेव सति 'आज्यं जुहोति' इत्यादिषु वाक्यादतिरिक्तस्य होमः कार्यतया प्रतीयते इति वाक्येनापि न विनियोगः संनिपत्योपकारकारणम् । न च प्रकरणेन विनियोगः संभवति येषां प्रकरणं कल्पयति तेषां प्रकरणाधीनो विनियोगः । इतिकर्तव्यताकाङ्क्षा प्रकरणम् । तथा च करणोपकारः कार्यभूतः कल्प्यते, तथाऽसौ संनिपत्योपकारिणा द्वारमिति न तेषां प्रकरणेन विनियोगः । स्थानसमाख्ययोरपि संनिपत्योपकारकारिणि प्रति न कार्यकल्पकतेति न विनियोगकारणत्वम् । एवं संनिपत्योपकारकाणां नियोगे दमर्थ्यमभिदधानो विनियोगतश्च कारकेदमर्थ्यमुपादानतश्चाधिकारनियोगकरणीभूतयागार्थेदमर्थ्यं विनियोगाक्षेपो ह्युपादानम् । तत्कृत प्रोक्षणादेः तदर्थत्वम् । यदि यदीयप्रकरणोपकारता प्रोक्षणादेर्न स्यात् तदा केनापरेण प्रकारेण तदन्विता विनियोगप्रतीतिर्निर्वहतीति नियोग एव तदन्वित प्रतिपन्नस्वरूप करणोपकारक सावद्य्य करणेदमर्थ्यमाक्षिपतीति तत्कृतमेव प्रोक्षणादेः तदर्थत्वं विनियोगात् पुनः करणेदमर्थ्यमेवेति । कथं पुनस्तेषां करणोपकारकता तुषकणविमोचनादिकार्यपरम्परादानेनोपकार्यविशेषादायकतया । ननु एवं सति कारकानुप्रवेशिनामवघातादीनां करणशरीरविशेषादायकतया करणोपकारकत्वम्, प्रयाजादीनां व्यतिरिक्तकारकानुग्रहजनकतेति न संनिकृष्ट उपकारः क्रियते । ततश्च संनिकृष्टेतिवर्तयतेति न स्यात् । उच्यते, उपकार्यविशेषायत्तत्वात् उपकारसिद्धेरपपन्नमुपकार्यस्य हि विशेषस्योपकारकं कल्पयितुं शक्यते । नान्यस्येत्यवघातादिविनियोगादवगम्यते । एवं चेदुपपन्नमवघातादेरपि प्रयाजादिभिः सह करणोपकारजनकत्वम् । कस्मात् पुनः प्रयाजादिवदवघातादयोऽप्युपकारका नाभ्युपेयन्ते । प्रकृताधिकारनियोगप्रत्यभिज्ञानात् । संभवति च अत्र नियोगैक्यं तदीयव्रीहिसंस्कारगुणेनेत्युक्तम् । प्रयाजादितुल्यत्वे हि अवघातादीनामङ्गीक्रियमाणे उत्पत्तिनियोगान्तरमाश्रयणीयमिति वक्ष्यामः । तत्र संग्रहश्लोकाः—

'संनिधानवशोत्पन्ना प्रकृता पूर्वभाविनी । भावाधिष्ठा स्वमिहेति तदनुग्रहकाङ्क्षया ॥ अवहन्त्यादिभिः शब्दैः कार्यान्वितपदार्थकैः । प्रकृतापूर्वसंबन्ध एव स्वार्थोऽभिधीयते ॥ तथा सति तदीयत्वं तेषां रक्षितुमिच्छता । व्रीह्यादिभिः पदैर्युक्ता कार्यसाधनलक्षणा ॥ क्रियाकारकसंबन्धो ह्येतत्साधनगोचरः । शेषिबोधोऽपि तस्यैव श्रौतत्वाद्यनुसारतः ॥' पञ्जिका. पृ. २०२–२१०.

• **संनिपत्योपकारकत्वे** ( सामवायिकत्वे ) संभवति न आरादुपकारकल्पना युक्ता । तद्यथा 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इत्यत्र अग्नीषोमयोरेव संनिहितयोः संस्कार्यत्वं विज्ञायते, न पशोः आरादुपकारकत्वेन कल्प्यते । वा. ३।४।४।१२ पृ. १०२.

• **संनिपत्योपकारिणः** ( मन्त्राः ) । आज्यग्रहणे प्रोक्षणे अभिमर्शने च मन्त्राः उपस्थितं कर्म अभिदधति । भा. ११।१।९।१८. • **संनिपत्योपकारिणः** संस्कारातिरिक्तापूर्वकल्पनाऽभावः । सु. पृ. १३७८.

• **संनिपत्योपकारित्वेन** समवेतार्थत्वसंभवे आरादुपकारित्वं बाध्यते, नान्यथा । सु. पृ. ७२८.

• **संनिपत्योपकार्यं** यागापूर्वं प्रधानोत्पत्त्यपूर्वं एव व्याप्रियते इति सार्वत्रिकम् । क्वचित्तु अगत्या तदुत्पत्तस्यैव प्रधानापूर्वस्य धारणे व्याप्रियते । बाल. पृ. ८४.

संनिपातश्चेद् यथोक्तमन्ते स्यात् । ५।२।१२।२३ ॥

अग्निचयने दीक्षणीयहोमानन्तरं चोदकेन वपनादयो दीक्षितसंस्काराः प्राप्ताः प्रत्यक्षवचनपाठक्रमेण च रुक्मधारणं प्राप्तम् । तयोर्मध्ये आदौ किं कार्यं इति विचारे रुक्मधारणं पूर्वं इति पूर्वपक्षे उत्पन्ने प्राप्ते सिद्धान्तमाह । संनिपातश्चेत् प्राकृतवैकृतयोः युगपत्प्राप्त्या क्रमविरोधः चेत् यथोक्तं प्रत्यक्षश्रुत रुक्मधारणं अन्ते स्यात् । आदौ दीक्षितसंस्काराः कर्तव्याः पश्चात् रुक्मधारणं कर्तव्यम् । तथा कृतेऽपि दीक्षणीयोत्तरत्वस्य अविघातात् । के.

* संनिपातः सूर्याचन्द्रमसोः सहावस्थानम् । संकर्ष. ३।१।१.

संनिपातेऽवैगुण्यात् प्रकृतिवत् तुल्यकल्पा यजेरन् । ६।६।१।१॥

बहूनां यजमानानां संनिपाते समवाये सत्रे इत्यर्थः । तुल्यकल्पाः ये स्युः ते एव समेत्य यजेरन् । तथा सति कस्यापि वैगुण्यं न स्यात् । यथा प्रजासु केचित् नराशंसकल्पाः केचित् तनूनपात्कल्पाः । तत्र यस्य कल्पो नोपसंह्रियेत तस्य वैगुण्यं स्यात् । अवैगुण्यार्थं तु तुल्यकल्पानामेव संभूय यजनम् । प्रकृतिवत्, यथा प्रकृतावेर विना साद्गुण्येन फलाभावः एवं सत्रेऽपि । तस्मात् समानकल्पानामेव सहाधिकार इति सिद्धान्तः ।

वचनाद्वा शिरोवत् स्यात् । २ ॥

सत्रे नराशंसादिसमानकल्पानामेव सहाधिकारः इति सिद्धान्ते उक्ते पूर्वपक्षी आह । वाशब्दात् पक्षो विपरिवर्तते । न चैतदस्ति भिन्नकल्पानां न सहाधिकार इति । वचनात् 'सत्रमुपेयुः' इत्यादिसामान्यवचनात् भिन्नकल्पानामपि सहाधिकारः स्यात् । शिरोवत् । यथा 'पुरुषशीर्षमुपदधाति' इति वचनात् शवशिरसा स्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियते तद्वत् ।

अथवा 'वचनाद्वाऽऽशिरवत् स्यात्' इति सूत्रपाठः । आशिरवत् । यथा क्रतपेये नाम यागे 'पृतक्तो भवति' इति वचनात् सतदुग्धे गवि निवृत्तायामपि, आशिरार्थं अन्या गा कल्पयन्ति तद्वत् ।

नाऽनारभ्यवादत्वात् । ३ ॥

भिन्नकल्पानां न सहाधिकारः सत्रादौ यजमानसमवाये इति न वा इति शब्दयोरर्थः । 'सत्रमुपेयुः' इत्यादिवचनं तु न भिन्नकल्पान् अधिकृत्य उच्यते । अनारभ्यवादस्तु सः सामान्यवचनं तत् इत्यर्थः । समानकल्पेषु तद्वचनं सार्थकं भविष्यति । इति न तेन भिन्नकल्पानां सहाधिकारः सिध्यति । तस्मान्न भिन्नकल्पानां सहाधिकारः इति सिद्धान्ती ब्रवीति ।

स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् । ४ ॥

पुनः पूर्वपक्षी ब्रूते । स्याद् वा भिन्नकल्पानामपि संभूयकर्तव्ये सत्रादौ सहाधिकारः । वसिष्ठादीनां नराशंसादिकल्पस्य यज्ञार्थत्वात् । योऽपि कल्पो यज्ञसाधक एव तनूनपात्कल्पोऽपि । तस्मादुभयकल्पानामपि सहाधिकारः स्यात् । औदुम्बरीवत् । यथा 'यजमानेन संमितामौदुम्बरीं परिवासयन्ति' इति कस्यचिद्यजमानस्य परिमाणेन संमिताऽपि सर्वेषां यज्ञसाधिका, तद्वत् नराशंसादिकल्पोऽपि । तस्मात् भिन्नकल्पानामपि सहाधिकारः स्यात् इति ।

न तत्प्रधानत्वात् । ५ ॥

'स्याद्वा यज्ञार्थत्वात्०' इति पूर्वपक्षिशङ्कां निराकरोति सिद्धान्ती । औदुम्बरीदृष्टान्तं तु उत्तरसूत्रे विघटयिष्यति । न वसिष्ठादीनां नराशंसादिकल्पो यज्ञार्थः किंतु पुरुषार्थः पुरुषप्रधानः । यश्च यस्य यज्ञाङ्गम्, तेन सहितं कर्म तस्य फलदम्, नान्यस्य । तेन नराशंसकल्पो न वसिष्ठादिभिन्नानां यज्ञसाधको भविष्यति । तस्मात् तत्कल्पस्य तत्र प्रधानत्वात् न भिन्नकल्पानां सहाधिकारः संभूयकर्तव्ये सत्रादौ ।

औदुम्बर्याः परार्थत्वात् कपालवत् । ६ ॥

सिद्धान्ती चतुर्थसूत्रोक्तं औदुम्बरीदृष्टान्तं विघटयति । सत्रादौ केनचिदेकेन यजमानेन संमिता औदुम्बरी सर्वेषां यज्ञं साधयति इति यदुक्तं तदुक्तम् । औदुम्बर्याः शाखायाः परार्थत्वात् । औदुम्बर्यां पुरुषो गुणः, न प्रधानम् । तस्मात् सा परार्था न पुरुषार्था । कपालवत् । यथा 'पुरोडाशकपालेन तुषानुपवपति' इति तुषोप-

अद्रव्य चापि दृश्यते । १४ ॥

सामशब्दः गीतिवाचकः रथन्तरादिशब्दश्च गीतिविशेषवाचकः इति अवगतम् । अनेन हेत्वन्तरमाह सिद्धान्ती । अद्रव्य द्रव्यरहित ऋग्रहितम् । अपि च साम अद्रव्य अनृक्कं दृश्यते । दृश्यतामिति छन्दोगैः ऋग्षु प्रयुक्तः । ऋग् द्रव्य गीतिश्च तस्य गुण इति । ' प्रजापतेर्हृदय अनृच गायति ' इति । प्रजापतेर्हृदय नाम साम । तत् अनृचि उत्पन्नम् । यदि ऋचि साम शब्दः स्यात् कथं प्रजापतेर्हृदय नाम साम अनृच स्यात् । तस्मादपि गीतिः साम । ' चापि ' इति अपिच इति शब्दः हेत्वन्तरसमुच्चये ।

तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वा दर्थो ह्यासां न लौकिके विधानात् । १५ ॥

सामशब्दार्थो गीतिः ऋचा संस्कारकर्म इति, इति सिद्धान्त उक्तः । तत्रैवमाशङ्का । ननु संस्कारकर्मत्वे अकर्मकाले गीतिप्रयोगः अनर्थकः स्यात् इति । तत्रोच्यते । अकर्मकाले शिक्षाकाले अभ्यासकाले च तस्य गीत्यात्मकस्य साम्नः क्रिया उच्चारणरूपा ग्रहणार्था ज्ञानार्था । नानार्थेषु विरूपित्वात् नानाभूतेषु भिन्नेषु अर्थेषु विविधरूपत्वात् । लौकिके गाने एकस्मिन्नपि श्लोके यथा मेरुमेरुगीतादयो गानविशेषा गीयन्ते तथा एकस्यां ऋचि नानाविधानि नानारूपाणि सामानि गातव्यानि भवन्ति । तानि च पूर्वाभ्यासं विना यज्ञे सम्यक् अकस्मात् गातुं न शक्यन्ते । तस्मात् अकर्मकाले गानक्रिया ग्रहणार्था । सा तस्य प्रयोगकाले सौकर्यमुत्पादयति । यथा भूमिरधिक भूमौ रथमालिख्य अभ्यास करोति तद्वत् । अर्थो हि यस्मात् आसां रथन्तरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः । नाम सामगान नाम लौकिकं पदार्थः । विधानात् विधीयमानत्वात् । विधीयते हि अभ्यो शिष्योपाध्यायसम्बन्धेन ' एवरूपं रथन्तरं भवति, एवरूपं बृहत्, एवरूपं वामदेव्यं ' इति । तस्मात् अकर्मकाले गानक्रिया ग्रहणार्था ।

तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् । १६ ॥

ननु रथन्तरं बृहत् वामदेव्यं इत्यादिसंज्ञाभेदात् ऋग्विशेषा एव रथन्तरादिशब्दवाच्याः स्युः इति । तत्राह– तस्मिन् एकस्मिन्नपि गानाख्ये संस्कारे रथन्तरबृहदादयः संज्ञाविशेषा भिन्नाः संज्ञाः स्युः । विकारपृथक्त्वात् विकाराणां भिन्नत्वात् । गानत्वे तुल्ये गानविशेषा भवन्ति । गानविशेषाच्च संज्ञापृथक्त्वम् । न तु ऋग्भेदात् संज्ञापृथक्त्वम् । यथा आसारितक गीतिः, वर्धमानक गीतिः, इति । अन्यथालक्षणा आसारितकगीतिः, अन्यथालक्षणा वर्धमानकगीतिः । एवमिहापि अन्यथालक्षणा रथन्तरगीतिः, अन्यथालक्षणा बृहद्गीतिः । तस्मात् गीतिभेदात् संज्ञापृथक्त्वं न ऋग्भेदात् ।

योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते । १७ ॥

यस्यां ऋचि साम्न उत्पत्तिर्भवति सा योनिर्नाम ऋक् । योनिः सती या ऋक् शस्यते शस्त्रे अप्रगीतत्वेन पठ्यते सा योनिशस्या ऋक् । ' यास्या शंसति ' ' शिपिविष्टवती शंसति ' इत्येवं या ऋक् विहिता सा न कस्यचित् साम्नो योनिभूता । तादृशी ऋक् शस्या सती अयोनिभूता इति अयोनिशस्या इत्युच्यते । योनिशस्या ऋचः इतराभिः अयोनिशस्याभिः ऋग्भिः तुल्यवत् विधीयन्ते । तुल्यवत् शंसतिशब्देन विधानम् । ' यास्या शंसति ' ' शिपिविष्टवतीं शंसति ' ' रथन्तरस्य योनिमनु शंसति ' ' बृहतो योनिमनु शंसति ' इति । एवं च शंसतिशब्देन विधानात् अप्रगीतामृचं रथन्तरस्य योनिं दर्शयति । यदि च रथन्तरं गीतिरूपम्, तत एव तस्य अप्रगीता ऋक् योनिः संभवति नान्यथा । तस्मात् रथन्तरादिशब्दः सामशब्दश्च गीतिवाचक एव । सिद्धान्ते हेत्वन्तरसमुच्चयार्थमक्षरम् ।

अयोनौ चापि दृश्यतेऽतथायोनि । १८ ॥

सामशब्दो गीतिवाचकः, न ऋग्वाचकः इति सिद्धान्ते युक्त्यन्तरस्य प्रदर्शनार्थं सूत्रम् । चकार समुच्चयार्थः । साम अयोनौ अपि दृश्यते । साम प्रायः तृचे गीयते । तत्र प्रथमा ऋक् योनिर्नाम । सर्वाश्च योनयः सामवेदे पूर्वार्चिके नाम योनिग्रन्थे पठिताः ।

उत्तरे द्वे ऋचौ उत्तरार्चिके नाम उत्तराग्रन्थे पठिता किंचित्साम क्वचित् अयोनौ योनिभिन्नाय मपि ऋचि पठ्यते। तथा च श्रुतिः बृहद् गायत्रीषु क्रियते ' इति। तथा समानच्छन्दस्के तृचे साम प्रायः गीयते। तादृशं साम तथायोनि इत्युच्यते। क्वचित्तु योनिच्छन्दसः भिन्नेऽपि च्छन्दसि गीयते तादृशं साम अतथायोनि। तथा च श्रुतिः 'यो वै त्रिच्छन्दसि साम ऊहति' इति। एवं सति साम्नः क्वचित् अयोनिकत्वात्, क्वचिच्च अतथायोनिकत्वात् सामशब्दः नियतऋग्वाचको भवितुं नार्हति। तस्मात् स गीतिवाचक एव।

ऐकार्थ्ये नास्ति वैरूप्यमिति चेत्। १९॥

'तस्य च क्रिया ग्रहणार्था०' इति सूत्रे (७।२।१।१५) सिद्धान्तिना यदुक्तं तत्र पूर्वपक्षी शङ्कते। रथन्तरबृहदादिसंज्ञाभेदः गानभेदात् स्यात्, परन्तु रथन्तरगानं सर्वत्र एकरूपमेव। तस्य च स्वयोनिभूतायां 'अभि त्वा शूर' इत्यस्यां ऋचि अभ्यासेन दृढीकरणे उत्तरयोरपि ऋचोः प्रयोगतोऽन्यथा गातुं शक्यत्वेन प्रयोगात् बहिः पठनं व्यर्थम्। तथाहि, रथन्तरगानस्य एकार्थ्ये एकरूपत्वे सति उत्तरयोर्गानस्य वैरूप्यं भेदो नास्ति इति ग्रहणार्थायाः क्रियाया नापेक्षा। तस्मात् संस्कारकर्मत्वे अकर्मकाले प्रयोगः अनर्थक एवेति। इति चेत्।

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके। २०॥

रथन्तरगानस्य एकरूपत्वात् योनिगाने अभ्यस्ते उत्तरागानस्य अकर्मकाले प्रयोगो वृथा इति शङ्कायां उत्तरमाह सिद्धान्ती। स्यात् वैरूप्यं एकस्यामृचि रथन्तरगानात् अन्यस्यामृचि रथन्तरगानस्यैव। एकस्यामृचि अभ्यासेऽपि अर्थान्तरेषु ऋगन्तरेषु अभ्यस्तरथन्तरगानस्य अनिष्पत्तेः ऋगन्तरेष्वपि पुनः पुनरभ्याससाधकः। रथन्तरगानस्य एकरूपत्वेऽपि आश्रयभेदात् क्रियाभिन्नत्वो भवत्येव। तस्मादभ्यास उपपन्नतरः। यथा पाकः। एकः पचनाख्यः पाको नाम। परन्तु अन्यथालम्बनं ओदनस्य पाकः, अन्यथालम्बनं सूपस्य, अन्यथालम्बना गुडस्य। येन ओदनपाको गृहीतः नासौ अशिक्षितो सूपं गुडं वा पक्तुं जानाति। तस्मात् एव समानस्यापि आश्रयभेदाद्भिन्नस्य अकर्मकाले अभ्यास उपपन्नः। तस्मात् संस्कारकर्मत्वपक्षे अकर्मकाले प्रयोगो नानर्थकः।

शब्दानां च सामञ्जस्यम्। २१॥

यदुक्तं 'शब्दानां चासामञ्जस्यम्' (७।२।१।१२) इति तत्रोत्तरमाह सिद्धान्ती। एवं च सामशब्दस्य रथन्तरादिशब्दानां च गीतिवाचकत्वे सामशब्दानां ऋक्शब्दानां च सामञ्जस्यं भवति। 'कवतीषु रथन्तरं गायति' इति कवतीशब्दः 'कया नश्चित्र आभुवत्' इत्यादीऋच एव वक्ष्यति रथन्तरशब्दश्च साम वक्ष्यति। तथा च न विरोधः। तस्मात् गीतौ सामशब्द इति सिद्धान्तः। के

* साम्न आधारभूते तृचे प्रथमा ऋक् योनिर्नाम, सा च 'योनिग्रन्थे पूर्वार्चिके' विहिता। उत्तरे द्वे ऋचौ 'उत्तरे' नाम, ते च 'उत्तराग्रन्थे उत्तरार्चिके' विहिते। वि १०।४।२५, * साम्न ऋक्संस्कारकर्मता। ९।२।२ * साम्न वैतानसस्य विपर्यये 'पोडश्युत्तरे' इति प्रमाणानुवादः अङ्गिरसां द्विरात्रे। १०।८।१३५३–५४ वर्णक २ मीको पृ १८१ 'अङ्गिरसां द्विरात्रे०' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्न सौभरस्य हीष् इत्यादिनिधनस्य च फलवत्त्वादि। अत्र निधनविशेषनियमविधिः। वि २।२।१३ * साम्नो गौतवयोपाजययोः गानं बृहतीविष्टार-पङ्क्त्योरेव प्रग्रथनेन संपादिते वार्हते तृचे, ज्योतिष्टोमे। ९।२।६।२५–२८ वर्णक २ मीको पृ १८१९ 'ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव०' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्ना अपराभिव्यक्तिः प्रयोजनम्। मणि पृ ५ * साम्ना अप्राकृतानां आगमेन अतिरात्रे एकविंशादी काम्ये अधिकसंख्यापूरणं कर्तव्यम्। १०।५।६।१५–२५ मीको पृ २५६ 'अतिरात्रे एकविंशादी काम्ये०' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्ना साम्यामो त्रिवृद्धस्तोमके क्रतौ बहिष्पवमाने। १०।५।७।०६ मीको पृ ३६७९ 'त्रिवृद्धस्तोमके क्रतौ बहिष्पवमाने०' इत्यत्र अधिकरणं द्रष्टव्यम्। * साम्नां–

मुपलभ्यते । साम्नि क्रियमाणे ऋगक्षराण्युच्चार्यन्ते । तस्मिन् सति नादृष्टं कल्पनीयम् ।

**परार्थत्वाच्च शब्दानाम् । ७ ॥**

भाष्यम्— परार्थाश्च शब्दाः स्तुत्यर्थाः । स्तुतिर्हि चोदिता, 'आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति । सा ऋगक्षरेषूच्चार्यमाणेषु प्रत्यक्षाऽवगम्यते । तत्र स्तुत्यर्थेषा ऋच सत्या सामार्थता परिकल्प्येत । कल्पनायां च प्रमाणं नास्ति । तस्मादपि साम गुणभूतमत्र इति ।

**असम्बन्धश्च कर्मणा, शब्दयोः पृथगर्थत्वात् । ८ ॥**

भाष्यम्— इतश्च गुणभूतं साम । कुतः ? असम्बन्धश्च साम्नः स्तोत्रेण स्यात् । तत्प्रधानभावेन स्तुति साम्नः उपदिश्येत, न साम स्तुते । तत्र 'बृहत् पृष्ठं भवति, रथन्तरं पृष्ठं भवति' इति वचनं नाध्येत । रथन्तरगुणकं पृष्ठं भवति बृहद्गुणकं पृष्ठं भवतीत्यनदेवं मुपदिश्यते । तदर्थे साम्नः सम्बन्धते । प्रत्यक्षं हि तदा पृष्ठस्योपकारं साम करोति । यदस्य वाचकं प्रकाशयति शब्दम्, तद्रथन्तरपृष्ठशब्दयोः सामानाधिकरण्यादेकार्थत्वे वाक्यं विज्ञातुम् । पृथगर्थत्वे त्वसम्बन्धः स्यात् । तस्मादपि साम गुणभूतमिति ।

**संस्कारश्चाप्रकरणेऽग्निवत् स्यात् प्रयुक्तत्वात् । ९ ॥**

भाष्यम्— अथ यदुक्तम्, अकर्मकाले गानमत्र संस्कारकमग्न्याधानमिव कल्प्येत । प्रयुक्तत्वादिति । तत्परिहर्तव्यम् ।

**अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत । १० ॥**

भाष्यम्— यदि ह्यकर्मकाले गानं कृतं कर्मकाले यावत्तिष्ठत्, न विनश्यत् । ततः पुनरप्रयोगः प्रतीयेत । यदि वा पुनर्न शक्यत कर्मकाले गानं कर्तुम्, तथाप्यप्रयोगः स्यात् । शक्यते तु प्रगीता ऋक् पुनः प्रयोक्तुम् । तस्मादकर्मकाले प्रयुक्ता असाधका इति कर्मकाले प्रयुज्येरन् । तस्मान्न दोषो भविष्यतीति ।

**आश्रितत्वाच्च । ११ ॥**

भाष्यम् – अपि च कर्मकालाश्रितं गानं दर्शयति 'औदुम्बरी स्पृष्ट्वाऽन्या अथ उद्गातोद्गायत्' इति । सदस्यौदुम्बरी मध्यमा स्थूणा भवति । तां स्पृष्ट्वेति ब्रुवन् सदसि गानं दर्शयति । तस्मात्कर्मकाले गानमग्न्याधानवत् कल्पयितव्यमिति ।

**प्रयुज्यत इति चेत् । १२ ॥**

भाष्यम्— अथ यदुक्तम्, अग्न्याधानमाम्नायमानं प्रयुज्यते, तत्फलाय भविष्यतीति । तत्परिहर्तव्यम् ।

**ग्रहणार्थं प्रयुज्येत । १३ ॥**

भाष्यम्— न हि फलाय भवितुमर्हति । तथाऽदृष्टं कल्प्येत । दृश्यतेऽत्र प्रयोजनम् । यत्तावद्गुरोः स्थाय शिष्यसन्निधावधीते, तत् ग्रहणार्थम् । यच्छिष्यः स्वाध्यायार्थम् । ग्रहणधारणे प्रयोगार्थे भूमिरथिकवत्, शुक्लपक्षवत् । तद्यथा भूमिरथिको भूमौ रथमलिख्य शिक्षां करोति, संग्रामे प्रागुभावी भवितेति । यथा च छात्रः शुक्रपक्षो प्रयुङ्क्ते, प्रयोगे प्रागुकर्मा भवता-ऽस्मीति । एवमेतत् द्रष्टव्यम् । तस्मात् दृष्टं सति नादृष्टार्थमध्ययनम् । तस्मात् संस्कारकर्म सामेति ।

शा— सामानि किं ऋचः प्रति प्रधानभूतानि उत तासंस्कारार्थानि गुणभूतानि इति विचारः । तत्र अकर्मकालेऽपि (अभ्यासकाले) प्रयोगात् प्राधान्यमिति पूर्वपक्षे प्राप्ते— 'अक्षराणामभिव्यक्ति साम्ना दृष्टं प्रयोजनम् । अक्षरश्चाप्यभिव्यक्तैः स्तुतिर्नत्व ऋचोदिता ॥ एवं दृष्टे फले लब्धे नादृष्टफलकल्पना । ननु चाविनियुक्तत्वादक्षराणां न सत्क्रिया ॥ सक्तूनामिव होमेन नैव दृष्टफलत्वतः । प्रयोजनं न सक्तूनां दृश्यते श्रूयतेऽपि वा ॥' तस्मात् संस्कारकर्माणि सामानि इति सिद्धान्तः । यत्तु अकर्मकाले गानं वाचनिकं तत् शिक्षार्थतया रथस्याभ्यासयोगवत् ।

सोम— यदर्थं गीतिः सामेति विचारितं तदिदानीं विचार्यते इति अवसरलक्षणा सङ्गतिः । सूत्रार्थस्तु-साम प्रधानकर्म यतः प्रधानविधिलक्षणा द्वितीया रथन्तरादिषु विद्यते इति ।

वि— 'सामर्चं प्रति मुख्यं स्याद् गुणो वा बाधपाठतः । मुख्यमभ्यसितुं पाठो गुणो गीतास्तु स्तुते ॥'

अवभृथाद्यभूताना साम्ना अनुव ष्यादिसाम्ना परिसामा ख्याना च स्वरूपत प्रसो यथावेदमेव स्वरो युक्त । सु पृ १२८३

🙧 सामस्वर्थान्तरश्रुतेरविकार प्रतीयेत । १०।४।८।१६ ॥

महाव्रते श्लोकेन पुरस्तात् सदस स्तुवते अनुश्लोकेन पश्चात्, क्रौञ्चेन चात्वालमवेक्षमाण ' इति श्रूयते । प्राकृतानि सामानि चोदकेन प्राप्तानि । तत्र वैकृते प्राकृताना बाध समुच्चयो वा इति विचारे सिद्धान्तमाह । सामसु श्लोकादिषु श्रूयमाणेषु प्राकृताना अविकार प्रतीयेत । अर्थान्तरश्रुते सदस पुरस्तात् श्लोक नाम गातव्य सदस पश्चात् अनुश्लोकम् । तथा च प्राकृताना वैकृताना च अर्थभेदात् समुच्चय एव न बाध इति ।

अथ त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकार स्यात् । १७ ॥

म० व्रते श्लोकानुश्लोकादिसाम्ना प्राकृते चोदकप्राप्तै सामभि समुच्चय इत्युक्त पूर्वसूत्र सिद्धान्तिना । तत्र शङ्का — ननु यथा ' कौत्स भवति काण्व भवति, वसिष्ठस्य जनित्र भवति ' इत्येवमादिभि वैकृते सामभि प्राकृतना बाधो भवति एव श्लोकादिभि सामभिरपि प्राकृतना बाध स्यात् इति । तुशब्द शङ्का बाध स्यार्थ । अर्थे प्राकृते फले अश्रूयमाणे सति शेषत्वात् प्राकृतस्यापि साम्न विकृतिशेषत्वात् प्राकृतस्य प्रकृतिगतस्य विकृतौ चोदकप्राप्तस्य विशेषविहितेन विकार बाध स्यात् । महाव्रते तु वैकृतानामर्थान्तरश्रवणात् तै प्राकृताना न बाध ।

एव पूर्वाधिकरणगुणसूत्रतया इद व्याख्यातम् । अधिकरणान्तरपरतयाऽपि इद व्याख्यातम् । उदाहरण अक्षरार्थस्तु स एव । रचनाविशेषस्तु इत्थ कुतूहले— विकृतिविशेषेषु ' कौत्स भवति ', ' काण्व भवति ' इति श्रुतम् । तत्र साममात्रश्रवणात् स्तुतेरश्रवणात् दीक्षणीयादिपरिसामवत् अदृष्टार्थत्वात् न तै प्राकृतस्तुतिसाम्ना निवृत्ति । इति प्राप्ते, सिद्धान्तयति । तृतीयपक्षे । श्लोकादिसाम्ना स्तुत्यनुवादेन विधानाभावात् विशिष्टस्तुत्यन्तराणा अदृष्टार्थतया विधानात् न तै प्राकृतस्य निवृत्ति । अर्थे स्तुतिलक्षणकार्ये श्रूयमाणे तु कौत्सादिविधौ प्राकृतस्य गायत्र्यादिसाम्न विकार बाध स्यात् । शेषत्वात् प्राकृतगायत्र्यादिसामवत् कौत्सादिसाम्नामपि स्तुत्यर्थत्वात् । इति । कै

* ' सामस्वर्थान्तरश्रुत ० ' ( १०।४।८।१६ ) इत्यत्र महाव्रते उपदिष्टाना श्लोकादिसाम्ना अतिदिष्टाना च गायत्रादीना समुच्चय उक्त । बाल पृ १७८

* सामसु दीक्षणीयादिपरिसामसु— ' प्राचीनमग्नीषोमीयात् ' इत्यनेन उपांशुत्वम् । वा ३।३।२।९ पृ ८११

* सामान्तरागम विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये । १०। ।६।१९–२५ मीको पृ २५६ ' अतिरात्रे पञ्चदिनादौ काम्ये० ' इत्यत्र अधिकरण द्रष्टव्यम् ।

* सामार्थं ऋचोऽध्ययन गम्यते । न हि अन्तरेण ऋच सामनिर्वृत्तिर्भवति । अन्तरेणापि तु साम, ऋङ् निर्वर्त्यते । न ऋक् साम आकाङ्क्षते इति । भा ९।२।८।२१ वर्णक ४ * ' सामार्थो य कश्च गीतेषु स्वर ' इति श्रुते सामशब्दस्य षड्जादिस्वरसमूहवाचित्वावगति । मु पृ ८६१

* सामान्योऽपि ननु प्रवर्तनोपाया । न ब्रूमो न प्रवर्तनोपाया इति परिक्रयस्तु यत्र आम्नात । भा १० २।८।२५

* सामादिशब्दाना गीतिवाचित्वम् । ९।२।१।१ २

* सामाधारभूतामृच उच्चैरुच्चरयन् सामानि अन्यथा उच्चारयितु न हि कश्चित् समर्थ । वा ३ ३।१।८

🙧 सामोहन्याय । सामयोन्या ये आर्द्रभावदर्शने उत्तरयोस्तद्गतवर्णदर्शने कर्तव्य ॥

सामप्रदेशे विकारस्तदपेक्ष स्याच्छास्त्रकृतत्वात् । ९।२।९।२१ ॥

भाष्यम् — इदमाम्नायते ' रथन्तरमुत्तरयोर्गायति, यद्योन्या तदुत्तरयोर्गायति, कवतीषु रथन्तर गायति, विराट्सु वामदेव्य गायति ' इति । तत्र संदेह — किमुत्तरावर्णवशेन गातव्यम्, किं योनिवर्णवशेन ।

शा— उपोद्घातं समाप्य प्रकृतमिदानीं साम्नामूहं चिन्तयति 'रथन्तरमुत्तरयोर्गायति' इत्यादिभिः । ऋगन्तरे गीयमानानि सामानि किं ऊहितव्यानि नेति । यदि योनिवर्णवशेन गानं यस्मिन् प्रदेशे योनौ आयीभावः तस्मिन्नेव अस्यापि संध्यक्षरे उत्तरयोः आयीभावः, ततो नोहः । अथ तु उत्तरवर्णवशेन गाने यस्मिन् प्रदेशे संध्यक्षरवशेन आयीभावो योनौ तत्प्रदेशान्तरे यत्र संध्यक्षरं तत्र आयीभावः ततः ऊहः । किं प्राप्तम् ? योनिवर्णवशेन । कुतः ? योनावेकारः निरर्थकः ईकारश्चोच्चारितः तत उत्तरयोरपि तद्भागपतितः वर्णः निरर्थकः एकारः उच्चार्यः । किंच नात्र कार्यमुखेन साम्नः प्राप्तिः रथन्तरादिस्वरूपस्यैवातिदेशात्तत्र दृष्टमात्मपूर्वमन्वयेन सामस्वरूपमुत्तरयोः प्रापितमविकृतस्वरूपमेव स प्राकृतमप्रकृतं दृष्टमदृष्टं वा कार्यं कुर्यात् तस्मान्नोहः साम्नामिति प्राप्ते, ब्रूमः । यदि हि एकारं लुप्त्वा अवर्णेवर्णौ उच्चारितौ ततो भवेत् यथा अत्र भवान् आह । न त्वेतत् । किं तर्हि ? एकारो नाम न वर्णान्तरम्, अवर्णेवर्णौ सहतौ एकमात्रमापन्नौ आयीभावेन विश्लेषितौ दर्शितौ प्रत्यक्षं हि अवर्णेवर्णौ एकारं प्रत्यभिज्ञाप्येते, तस्मादुत्तरयोरपि एकार एव यत्र तत्रास्योऽप्यायीभावेन विश्लेषणीयः । एवं ऋगक्षराभिव्यक्त्या स्वानं साम्ना संपाद्यते नान्यथा । यद्यपि च सामस्वरूपस्य अतिदेशः तथापि स्तोत्रसाधनतया अतिदिश्यते । 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति वचनात् । स्तोत्रसाधनता च अक्षराभिव्यक्तिद्वारा । न च संध्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति एवं सर्वत्र । तस्मात् योनिवर्णवशेन गानात् अस्ति ऊहः साम्नाम् ।

सोम— सूत्रार्थस्तु— सामातिदेशः आयीभावादिलक्षणो विकारो योन्यपेक्षः स्याद्वा, उत योन्यामिव्याप्ति देशात्प्रकृतवदिति ।

वि— 'आयीभावो योनिवशादुत्तरावशतोऽथ वा । , गीत्यर्थत्वादादिमोऽन्त्यो वर्णाभिव्यक्तये ॥'

भाट्ट— एवं सामोहोपोद्घातं सप्रसङ्गं निरूप्याधुना सामोहो निरूप्यते । 'कवतीषु रथन्तरं गायति, यद्योन्यां गायति' इत्यादौ यत्र सामातिदेशस्तत्र साम्न ऋगक्षराभिव्यक्त्यर्थत्वात् यत्र स्थाने योनौ एकाराद्यक्षरसत्त्वादिना आईभावादिरूपा गीतिः श्रुता तत्र स्थानान्तरे यद्येकारपाठः उत्तरादौ तत्रैव आईभावरूपा गीतिः करणीया, न तु प्राकृतस्थानपठिताक्षरान्तरे कर्तव्या, तत्र गीतेस्तदक्षराभिव्यञ्जकत्वासंभवेनानादुपकारकत्वप्रसङ्गात् । आईभावो हि प्रकृतौ अवर्णेवर्णात्मकस्य संध्यक्षरस्यैकारस्य विश्लेषरूपसंस्कारार्थः । न हि एकारो नाम वर्णान्तरम्, प्रमाणाभावादपितु स्मृतिसहकृतप्रत्यक्षेणावर्णेवर्णात्मक एव । अतश्च तद्विश्लेषकस्याईभावस्य तत्स्थानपठिताक्षरविशेषकत्वाभावात् यत्रैवोत्तरादावेकारस्तत्रैवाईभावः कार्यः । यद्यपि चायं विश्लेषादिरूपः संस्कारो नार्थाभिधानोपयोगितया दृष्टार्थः, तद्व्यतिरेकेणैव संध्यक्षरेणार्थाभिधानस्य जायमानत्वात् । तथाऽपि गानसंस्कृतमन्त्रस्य गुणाभिधानं यत्स्तोत्रं तया स्तोत्रत्वसिद्ध्यर्थतयैवोपयुज्यते । न चैवं न विश्लेषादिरूप एव संस्कारः, प्रमाणाभावादननुगमाच्च । न हि विश्लेष एव सर्वत्र संस्कारः 'ए इ ऐ ई इत्येतानि तालव्यम्' इति स्मृत्या इईकारयोरपि तालव्यत्वात् 'तालव्यमाई यद्वद्वम्' इति स्मृत्या च तथापि आईभावविधानेन तत्र संध्यक्षरत्वाभावेन विश्लेषासंभवात् । अतः सर्वानुगतो यत्स्थानागमेन पूर्वाक्षरपरिलोप एव संस्कारः स्तोत्रत्वघटकः । तस्य चैकारस्थानस्थितवर्णान्तरेऽपि संभवान्नोहसिद्धिरिति वाच्यम् । तथात्वेऽपि संस्कार्यतावच्छेदकस्यैकारत्वस्याक्षरान्तरेऽभावेनोहोपपत्तेः । वस्तुतस्तु परिलोपाख्यसंस्काराङ्गीकारे श्रुतस्य वर्णस्य स्तोत्रसाधनस्थानापत्तेर्गौरवस्य क्वापि संस्कारस्यादर्शनाच्च विश्लेषादिरेव सामगप्रसिद्धोऽननुगतोऽपि संस्कार इति सिद्ध ऊहः । एवं च प्रवानभूतोत्तरादिऋगक्षरानुरोधेन यत्र ऋगक्षरान्तरे तत्राविशिष्टगीतर्लोपः । यत्र वा ऋगक्षराधिक्यं तत्र गीतिविशेषस्यावृत्तिः इत्याद्यप्यसमानमपि न दुष्यति ।

मण्डन— 'योनिवर्णक्रमो न हि ।'

शंकर— 'उत्तरादिषु सामोहः ।'

* सामकाले-ब्रह्मसामकाले- प्राजापत्यानां पशूनामालम्भोत्कर्षमात्रविधाने वाजपेये। ११।२।१२।५१-५३. मीको. पृ. २८४५ 'प्राजापत्यानां पशूनां ब्रह्मसामकाले०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* सामगानं आधाने वपायु। ३।३।२।९. मीको. पृ. १५८८ 'गुणमुख्यव्यतिक्रमन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम्। * सामगानस्य विकल्पः आधाने। १०।८।६।९-११. मीको. पृ ११६६ 'उपवादाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। * सामगाने 'यथाऽऽचिषाणि पदानि निवर्तन्ते, स्तोभा गेष्णाम्अनुयन्ति' इति। गेष्णाः स्वराः (मगरिसा)। भा. ९।२।१०।३६.

* सामगानकाले ज्योतिष्टोमे बृहद्रथन्तरधर्माणां व्यवस्थया अनुष्ठानम्। ९।२।१५।४५-४६. मीको. पृ. २९७७ 'बृहद्रथन्तरधर्माणां व्यवस्थया०' इत्यत्र अधिकरणं द्रष्टव्यम्।

* सामतः यज्ञस्यार्ती स्व स्वाहा इति आहवनीये जुहुयात्। भा. १२।३।५।१६. * सामतो यज्ञभ्रेषप्रायश्चित्तार्थे 'स्व स्वाहेत्याहवनीये जुहुयात्' इति। वि. १२।३।५.

* सामप्रकारभेदानां शाखाप्रकारभेदेन विकल्पः। भाट्ट. ९।२।७.

ॐ सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्। ९।२।९।३१॥

इदमाम्नायते 'यद् योन्यां तदुत्तरयोर्गायति' इति। किं योनिवर्णवशेन गातव्यं उत्तरावर्णवशेन वा। 'कया नश्चित्र आभुवत्' इत्यसौ ऋक् वामदेव्यस्य साम्नो योनिः। तस्यामृचि 'कया' इत्यक्षरद्वयं आद्यो भागः। 'नश्चित्र आभुवत्' इत्यक्षरषट्कं द्वितीयो भागः। तस्मिन् भागे द्वितीयाक्षरे चकारस्य उपरितनं इकारं विलोप्य तस्य स्थाने आयीभावं आम्नाय गीतिर्निष्पाद्यते (चायीत्रा)। 'कस्त्वा सत्यो मदानां' इत्यनन्तरभाविनी ऋक् उत्तरा तस्यां योनिन्यायेन चतुर्थाक्षरे तकारस्य उपरितनं यकारं ओकारं च लोपयित्वा तयोः स्थाने आयीभावः कर्तव्यः (सतायी)। 'अभीषुणः' इत्यसौ अपरा उत्तरा, तस्यामपि चतुर्थाक्षरे णकारस्य उपरितनं अकारं लोपयित्वा तस्य स्थाने आयीभावः कर्तव्यः (षुणायी) इति पूर्वः पक्षः। तदाह सूत्रम्, सामप्रदेशे योनौ उत्पन्नस्य साम्नः ऋगन्तरे अतिदेशे विकारः आयीभावादिः तदपेक्षः योन्यपेक्षः स्यात्। योनेर्यत्र भागे विकारः उत्तरयोरपि तत्रैव भागे स विकारः स्यात्। 'यद्योन्यां तदुत्तरयोर्गायति' इति शास्त्रेण विकारस्य कृतत्वात्। तस्मात् योनिवर्णवशेनैव उत्तरयोः विकारः कर्तव्यः इति पूर्वः पक्षः।

वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्। ३२॥

योनौ उत्पन्नस्य साम्नः उत्तरयोरतिदेशे आयीभावादिर्विकारः योन्यनुसारेणैव कर्तव्यः इति पूर्वपक्षं तुशब्देन व्यावर्तयन् सिद्धान्तमाह। बादरिः आचार्यस्तु यथाद्रव्यं वर्णे विकारः इति मन्यतेस्म। द्रव्य इति उत्तरा ऋक् प्राह्या। तामनतिक्रम्य वर्णे विकारः स्यात्। योन्यां तावत् इकारस्य स्थाने आयीभावो जातः उत्तरयोरपि यस्मिन् कस्मिन्नपि भागे इकारः हृद्यतालव्यः स्यात् तस्यैव आयीभावः स्यात्, न तु चतुर्थे एवाक्षरे। तेन 'अभीषुणः सखीनामविता जरितॄणाम्' इति द्वादशाक्षरगतस्य रेफस्य उपरितनः इकारः आयी भवति (जरायि)। न तु चतुर्थे एवाक्षरे षुणायी इति, द्रव्यव्यतिरेकात् योनिगतचतुर्थाक्षरस्थात् ह्रस्वतालव्यात् इकारात् अभीषुणः इत्यत्रत्यणकाराकारस्य द्रव्यव्यतिरेकात् ह्रस्वतालव्यरूपधर्मात् भिन्नत्वात्। द्रव्यशब्दो वर्णवाची अत्र। एवं 'कस्त्वा सत्यो' इत्यत्रापि द्रष्टव्यम्। तस्मात् न योनिवर्णवशेन गीतं भवति किंतु उत्तरावर्णवशेनैव गीतम्। इति सिद्धान्तः। कै.

* सामभक्तिः अन्त्या निधनमित्युच्यते। धा. २।२।१३।२८. * सामभक्तयः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः। सु पृ. ८७९.

* साममन्त्राणां अशब्दत्वायामपि शब्दाभिव्यञ्जकत्वेन शब्दानुग्राहकत्वात् शाब्दप्रमाजनकसामग्र्यन्तर्गतत्वेन शब्दप्रमाणान्तर्भावः। शाळ. पृ. ७२.

● सामरूपं हि समाम्नायादवगम्यते । तच्च अन्येन अन्यत्वेन अप्रत्यभिज्ञानादन्यदेव भाति । ' प्रयत्नते रूपविनाशमभीत्येर्गीतिर्न गीत्यन्तरमक्रियोगम् । अत. समस्तैव विकल्प्यमाना यथासमाम्नायमगो नियम्या ॥ ' वा. २।२।१३।२९ पृ ५७०. ● सामरूपाः मन्त्राः । बाल पृ. ५८.

● सामलक्षणं अस्तिनास्तीति विचारे अस्तीति निर्णय. । गीति. साम । गीतिविशिष्टो मन्त्र. साम । भा. २।१।११।३६.

अ सामलक्षणम् ॥

गीतिषु सामाख्या । २।१।११।३६ ॥

भाष्यम्— अथ साम्न किं लक्षणम् ? विशिष्टा काचित् गीतिः सामेत्युच्यते । प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति । सामान्यधीमहे, सामान्यध्यापयाम , सामानि वर्तन्ते इति । अभियुक्तोपदेशश्च न प्रमाणम् । यथा अम्ल दधि, मधुरो गुड इति । गीतिविशिष्टे तावन्मन्त्रे गीतिशब्द । गीतिसम्बन्धात् मन्त्रे समप्रत्यय. इत्यवगन्तव्यम् ।

वा— तेषामिलनुवर्तते । अत्रापि च एवाभियुक्तोपदेशोपन्यास । प्रायम्यात्, ' यथाऽम्लं दधि ' इति । पूर्वेण वाक्य सदनादशादिहोदाहृतम् । अथवा यथा ऽनेकधर्मसमाहारे सति दधिगुडयो रसविशेषमात्रमम्ल मधुरशब्दावुपदशाते । तथा सामशब्दो गीतिमात्रनिन्दोदाहरणम् । ननु च प्रत्यक्षगम्यत्वाद्रसविशेषस्याभियुक्तोपदेशोऽनुरवानेव प्रमाणम् । नैष दोष । प्रत्यक्षेणाय इतिकरणात्छिन्नं निदर्शनम् । एवं तु भवति । यथाऽम्ल दधि मधुरो गुड इत्येतद्विज्ञान प्रमाणमेव मभियुक्तोपदेश इति । गीतेविशेषणत्वात्पूर्वेनप्रत्यायने सत्याकृतिवदभिधेयेवं निर्णेतव्यम् । आह च– ' एकत्रण्डेन शब्देन विशिष्टो यत्र गम्यते । विशेषणस्य चान्यस्य तत्र सर्वत्र जायते ॥ '

शा— यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानां तथापि नागृहीतविशेषणेत्यभावात् ' कवतीषु रथन्तरं गायति ' इत्यादिनिर्देशोपरत्नाच्च गीतिरेव सामेति एतस्मै स्वकमेव सूत्रकारो वक्ष्यति । इह तु मन्त्रविभागमात्रं विवक्षितम् । तद्यदि प्रगीतो मन्त्र साम यदि वा गीतिमात्रं उभयथापि ऋग्यजुर्भ्यामन्यत्सामेति विभागसिद्धे. विभागाय न प्रयत्यते । सप्तमे तु ' रथन्तरमुत्तरयोर्गायति ' इत्याद्यतिदेशोपयिकत्वात् विभागेन प्रयोजनमस्तीति तत्रैव वक्ष्यमाणावष्टम्भेन ' गीतिः साम ' इत्युक्तम् । यत्तु अत्र भाष्यवार्तिकयो गीतिवाचित्वं साधितम्, तत् वक्ष्यमाणमेव प्रसङ्गात् इति द्रष्टव्यम्, न सूत्रार्थतया । मा भूत् सातत्यिकस्य पौनरुक्त्यम् ।

सोम— मन्त्रप्रसङ्गात् ऋगादिलक्षणस्य संगतिः ।

वि— ' नर्क्सामयजुषां रूपं साकर्याद्विति शङ्किते । पादश्च गीति प्रश्लिष्टपाठ इत्यसरसकरः ॥ '

भाट्ट— मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम् ।

मण्डन— ' मन्त्रस्य गीतिं प्रवदन्ति साम । '

शङ्कर— ' सामलक्षणमप्युक्तम् । '

● सामविकल्पः आधाने विहितत्वात् निन्दितत्वात् च । १०।८।६।९–११. मीको. पृ. ११६६ ' उपगादाधिकरणम् ' इत्यत्र अधिकरण द्रष्टव्यम् ।

● सामशब्द ऋक्-स्तोम-स्वर-काल-अभ्यासविशिष्टाया. गीतेः वाचक. । भा. ९।२।१०।३५, ● सामशब्द. गानकर्मणो वाचकः इति सिद्धम् । ९।२।१।१, ● सामशब्द गीतौ । ७।२।१।२१. ● सामशब्द. गीतिविशेषवाचकत्वेन निर्णीत । परास्मः. २।१.

अ सामशब्दो रथंतरादिशब्दाश्च गीतिवाचका ॥

सामानि मन्त्रमेके, स्मृत्युपदेशाभ्याम् । ९।२।१।१॥

भाष्यम्— सन्ति सामानि, रथंतर, बृहत्, वैरूप, वैराज, शाक्वर, रैवतमिति, ' अभि त्वा शूर नोनुम ' इत्येवमादिषु । तत्रैषोऽर्थ. सन्दिह्यते किं प्रगीता एते मन्त्रा. सामानि, उत गीतयः सामानीति । ननु सिद्ध ' गीतिषु सामाख्या ' ( २।१।११।३६ ) इति । उच्यते । तत्र द्वितीयेऽध्याये मन्त्रगते भावशब्दे चोदकत्वे विचार्यमाणे, मन्त्राभावाशङ्कायां मन्त्रगतत्वोपगमनाय, ' तच्चोदकेषु मन्त्राख्या ' ( २।१।७।३२ ), इति इति

लक्षणे, 'अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूंषि' इति ऋगादीनां विभागाय प्रस्तावानुप्रसक्तं लक्षणम्, 'गीतिषु सामाख्या' इत्युक्तम्। तत्र यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रं उभयथाऽपि, ऋग्यजुर्भ्यामन्यत्सामेति सिद्धे विभागे न विवेकाय प्रयत्नः, प्रयोजनाभावात्। इह तु प्रगीते मन्त्रे अन्यत्कर्म, गीतिमात्रे अन्यदिति विवेकाय प्रयत्यते। आह। नन्वेतदपि सिद्धम्, गानकर्मणो वाचकः सामशब्द इति। उच्यते। तदेव पुनरभिधीयते स्मरणाय, उत्तरमधिकरणं चिन्तयितुम्। गीतिः सामेति स्थिते इदं चिन्त्यते, गीतिषु ऋचः प्रधानभूता उत गुणभूता इति। आह। नैव स्मरणाय पूर्वपक्षोद्धरणम्। नहि मन्त्राः सामानीत्येषोऽर्थः स्मर्तव्यः। अत्रोच्यते। पूर्वपक्षेऽपि सिद्धान्तस्मरणार्थमेवोपादीयते। यत् प्रगीतं मन्त्रवाक्यम्, तत् सामेत्येवं पूर्वपक्षं कृत्वा गीतिमात्रं सामेति स्थापितम्। तस्मिन् स्थिते अयमुत्तरो विचारः कर्तव्यः, गीतिषु किमृचः प्रधानभूता उत गुणभूता इति। किं प्राप्तम्? एके मन्यन्ते प्रगीतं मन्त्रवाक्यं सामेति। कुतः? स्मृत्युपदेशाभ्याम्। एवं हि स्मरन्ति, प्रगीतं मन्त्रवाक्यं सामेति तत्रभवन्तश्छान्दोगाः, एवं चोपदिशन्ति शिष्येभ्यः। आह। ननु यदेव स्मरन्ति, तदेवोपदिशन्ति। नेदं स्मृतेः उपदेशो द्वैरन्तरमिति। उच्यते। बाढम्। अन्यथा तदुपदेशं वर्णयामः। अयमुपदेशः 'अहे बुध्निय मन्त्र मे गोपाय। यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूंषि' इति। मन्त्रप्रकारः कश्चित् सामानीति मन्त्रोपदेशो भवति। तस्मादुपदेशात् मन्त्राः सामानीत्यवगच्छामः।

वद्धुक्तदोषम्॥२॥

भाष्यम्— तस्यैतस्य पक्षस्योक्तो दोषः तस्मै (७।२।१।१३)। ऋचः प्रदेशो नोपपद्यते 'कवतीषु रथंतरं गायति' इति, देशलक्षणा धर्मलक्षणा वा प्राप्नोतीति। तस्माद्गीतय. सामानि, न प्रगीतानि मन्त्रवाक्यानीति।

सोम— सामोहोपोद्घातत्वेन अवान्तरसंगतिः। सूत्रार्थस्तु– प्रगीतमन्त्रः साम इत्यध्यायकस्मरणात् 'अहे बुध्निय मन्त्र मे गोपाय-ऋचः सामानि' इति मन्त्रे सामशब्दोपदेशाच्च प्रगीतमन्त्रमेव सामान्येके मन्यन्ते इति।

वि— 'सामोक्तिर्बृहदाद्युक्ती गीतायामृचि वेयते। गाने वा, गान एवेति स्मार्यते सप्तमोदितम्॥'

भाट्ट— रथंतरादिशब्दानां सामादिशब्दानां च गीतिमात्रवाचित्वम्, गीतिविशेषत्वादिधर्मवाचित्वं वा सिद्धमेव उत्तरविवक्षया स्मार्यते।

मण्डन— 'गीतिमात्रं भवेत् साम।'

शंकर— 'गीतेः सामादिरूपता।'

* सामशब्दः संस्कारकर्मणो वाचकः (७।२।१)। भा. ९।२।२।३, * सामशब्दः। स्तोभस्वरकालाभ्यासविकारवत्यां हिंकार-प्रणव-प्रस्ताव-उद्गीथ-प्रतिहार-उपद्रव-निधनवत्यामृचि सामशब्दोऽभियुक्तैरुपचर्यते। ७।२।१।१, * स्वर. सामशब्देन लोकेऽभिधीयते– सुसामा देवदत्त इति, सुस्वरो देवदत्त इति। स्वरो घोषो नाद इति समानार्थाः। इति शङ्का। ७।२।१।७, ८ सामशब्दस्य षड्जर्षभगान्धारमध्यमपञ्चमधैवताख्य (धैवतनिषादाख्य?) स्वरसमूहवाचित्वम्। सु. पृ. ८६१, * सामशब्दस्य सामशाखाप्रयोजनलक्षणार्थत्वमभिप्रेत्य कार्यार्थत्वात् साधननियमस्य स्तोत्रकार्यार्थत्वेन वृत्तिर्विवक्षिता। पृ. ८७२.

* सामस्तुल्यार्थः अयशब्द. 'अयशो वा एष योऽसामा' इति। वि. १।४।१६.

* सामगानां उहग्रन्थः पौरुषेय एवेति न्यायनिरोधे सति अप्रमाणम्। वि. ९।२।१ वर्णकं २, * सामगानां द्वौ ग्रन्थौ छन्द., उत्तरा चेति। तत्र छन्दोनामके ग्रन्थे नानाविधसाम्नां योनिभूता एव ऋचः पठिताः। उत्तराग्रन्थे तु तृचात्मकानि सूक्तानि प्रायः पठितानि। एकस्मिंस्तृचे प्रथमा ऋक् छन्दोगतयोनिर्नाम, इतरे द्वे उत्तरे नाम। 'उत्तरयोर्गायति' इत्यत्रोत्तराशब्देन उत्तराग्रन्थस्थयोर्ऋचोर्ग्रहणं न तु छन्दोग्रन्थस्थयोनिभूताया ऋच. परतो विद्यमानयोर्ऋचोः।

९।२।५. ● सामगाना रथंतरादिसामयोनीनामेव पाठात्मकः एको ग्रन्थ. छन्दोनामक. । तथा एकस्य साम्नो योनिपाठानन्तरमपि अयोनिभूतऋग्द्वयपाठः क्वचिदेकऋक्पाठोऽपि, ततः समनन्तरयोनिपाठ., इत्येवं योनितदुत्तरऋक्पाठात्मकः अपरो ग्रन्थः य., स एव उत्तराग्रन्थः इत्युच्यते । सोम. ९।२।५ वर्णक १.

● **सामर्थ्यं** अप्राप्त सति प्रत्यक्षवचने । वा. २।३।३।८ पृ. ५८९. ● सामर्थ्यम् । अशक्यार्थानुष्ठानायोगात् प्रवर्तकस्य व्याघातापत्ते सर्वैर्विधिभिः सामर्थ्यस्यावश्यापेक्षणीयत्वात् सामर्थ्यस्य च प्रमाणान्तरगम्यत्वेऽपि विषयस्य अन्यतोऽनवगतेः वेदस्य नैरपेक्ष्याविघातात् सामर्थ्यात् व्यवस्थितविषयत्वकल्पना युक्ता । सु. पृ. ५३०. ● 'सामर्थ्यं कर्मणस्तावदेक लिङ्ग निरूपितम् । अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात् ॥' वा. ३।४।११।२१ पृ ९६५. ● सामर्थ्यं च भवति विशेषणविशेष्यभावे । अध्यापरस्य च भवति विशेषणम् ( समर्थः पदविधिः ) । भा. २।३।११ पृ. ५७२, ● सामर्थ्यं च लिङ्गमित्युच्यते । ३।३।७।१४ पृ. ५८०. ● सामर्थ्यं च व्यपेक्षा । विगतापेक्षत्व च व्यपेक्षा निरपेक्षसाधनत्वमित्यर्थ. । ( समर्थः पदविधिः ) । इति महसोमेश्वरः । बाल. पृ. १५०. ● सामर्थ्यं च सर्ववस्तुविषयम्, लिङ्ग केवल मन्त्रगतमेव अवगन्तव्यम् । वा. ३।३।७।१४ पृ. ८४१. ● सामर्थ्यं नाम लिङ्गम् । भा. ६।५।९।३२. ● सामर्थ्यम् । मुख्यसामर्थ्यसमवे गौणसामर्थ्यस्य अग्रहणम् । सोम. १।२।१ पृ. ७. ● सामर्थ्यम् । 'समर्थः पदविधिः', 'समर्थाना प्रथमाद्वा' इत्यत्र एकार्थीभावलक्षणं व्यपेक्षालक्षण वा सामर्थ्यम् । वा. २।१।५।१६ पृ. ४१८, ● सामर्थ्यम् । सर्वपदार्थानामिव कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति । १।३।९।२० पृ. २६९. ● **सामर्थ्येन** अभ्यतरिष्यताना व्यवस्था । वि. १।४।२०. ● सामर्थ्येन विना समासो नाङ्गीक्रियते । वा. २।३।१।१ पृ. ५७२. ● **सामर्थ्यस्य** ऐकार्थ्याधीनत्वात् विशेषणविशेष्यत्व च विना ऐकार्थ्यायोगात् विशेषणत्वापेक्षा । सु. पृ. ८८७.

● **सामर्थ्याधिकरणम्** । १।४।१४।२५. मीको. पृ. ३८०८ 'शक्त्यधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । ● सामर्थ्याधिकरणम् । अत्र सामर्थ्यकल्पितस्य द्रव्यादिपदस्य सदिग्धार्थनिर्णये प्रामाण्यं अभिहितम् । कौ. १।४।२०।३०, ● सामर्थ्याधिकरणे लिङ्गस्य नियामकत्वबोधकत्वं व्युत्पादितम् । ३।१।८।७, ● सामर्थ्याधिकरणे लिङ्गस्य स्वरूपेण विनियोजकत्वमुक्तम् । ३।३।४।११, ● सामर्थ्याधिकरणे सामर्थ्यकल्पितद्रव्यादिपदस्यैव स्वार्थोपस्थापनद्वारा निर्णायकत्वोपपत्तिः । १।४।१।१.

● **सामर्थ्यानुसारी** विनियोगः । वा. ३।३।७।१४ पृ. ८२९.

卐 **सामर्थ्ययोगन्यायः** । अयं न्याय. 'इको यणचि' (पा० ६।१।७७) इति सूत्रमहाभाष्येऽभिहितः । तथाहि– 'जनत्र न सिद्ध यणमत्र, पदय यश्चापदान्तो हल्चश्च पूर्वः । दीर्घश्च यण् ह्रस्व इति प्रवृत्ते संज्ञया गुणवृद्धिबाध्यम् ॥ नित्ये च यः शाकलभावसमासे तदर्थमेतद्भगवाँश्चकार । सामर्थ्ययोगान्न हि किंचिदस्मिन्पश्यामि शास्त्रे यदनर्थक स्यात् ॥' इति । साहस्री. ४८१.

● **सामर्थ्यवान्** मन्त्र. यथा 'देवस्य त्वा०' इति निर्वापप्रकाशनसमर्थो मन्त्रः । बाल. पृ. ६०.

● **सामवायिकं** आरादुपकारकाच्च गरीय. । टुप्. १०।१।६।१२. ● सामवायिक कल्पसबन्ध अदृष्टसंस्कारद्वारकमपि आरादुपकारकात् कल्प्यदृष्टत्वात् प्रबलम् । सोम. १०।१।६. ● **सामवायिकानि** अङ्गानि आरादुपकारकेभ्यो गरीयांसि । तत्र हि साक्षात् वाक्यम् । आरादुपकारकेषु प्रकृतेन परोक्षेण एकवाक्यता स्यात् । भा. १०।४।१९।३८, ● सामवायिकान्यङ्गानि आरादुपकारकेभ्यः गरीयांसि भवन्ति । १०।१।९।२३. ● सामवायिकानि आरादुपकारकेभ्यो गरीयांसि । टुप्. ९।४।६।२८.

● **सामवायिकत्वेन** ( संनिपत्योपकारकत्वेन ) आरादुपकारकत्व बाध्यते । अप्राप्तबाधः । वा. ३।३।७।१४ पृ. ८६०, ● सामवायिकत्वस्य आरादुपकारकत्वात् अभ्यर्हितत्वम् । ३।३।१०।२०.

● **सामवेदः** आदित्यादजायत । भा. ३।३।३।२. ● **सामवेदेन** यत् किंचित् काम्यं नैमित्तिकं वा चोद्यते तत् उच्चैः कर्तव्यम् । वा. ३।३।२।९ पृ. ८१३. ● **सामवेदस्य** उच्चैः स्वरः । भा. ३।३।१।१. ● **सामवेदे** आज्यस्तोत्र- पृष्ठस्तोत्राख्यौ धर्मौ विहितौ । वि. ३।३।६. ● **सामवेदे** उपतिष्ठते वा स्तौति वा इत्युक्ते प्रगीतायामेव ऋचि सम्प्रत्ययो भवति, नाप्रगीतायाम् । भा. ९।२।८।३१ वर्णक २, ● **सामवेदे** कृत्स्नेऽपि जगत्–नाम साम न हि अस्ति । १०।९।१५।५८. ● **सामवेदे** गानमेव प्रसृतम्, ऋचां संहितापाठस्तु अत्र गानार्थेन । वि. ९।२।८ वर्णक २. ● **सामवेदे** ज्योतिष्टोमोत्पत्त्यभावः । सु. पृ. ९९७. ● **सामवेदे** तलवकारादिशाखाभेदः, तेन गीतिष्वरस्वर-विकारादिवैलक्षण्यम् । तेषां चानुष्ठाने विकल्पाः, न समुच्चयः । वि. ९।२।७, ● **सामवेदे** न हि ज्योतिष्टोमस्य विधानम् । भा. २।४।२।२५, ● **सामवेदे** सहस्र गीत्युपायाः । ९।२।७।२९.

● **सामवेदोत्पन्नः** श्येनः । वि. ३।७।२१.

● **सामस्त्यव्यवहारः** । किंचिदपनयेऽपि सामस्त्य-व्यवहारोपपत्तिः ( एकदेशविकृतस्य अनन्यत्वम् ) । सु. पृ. ७९२.

● **सामानाधिकरण्यं** अन्तरेणापि षष्ठीं एक-विभक्तिनिर्देशात् अवगमिष्यामः, यथा नीलमुत्पलमिति । भा. ३।१।६।१२ पृ. ६८५. ● **सामानाधिकरण्य-** भिन्नप्रवृत्तिनिमित्तानां एकस्मिन्नर्थे वृत्तिः तात्पर्येण । सु. पृ. ४०९, १४४०. ● **सामानाधिकरण्यं** भिन्नप्रवृत्ति-निमित्तकत्वे सति एकधर्म्युपस्थापकत्वम् । मणि. पृ. १५१. ● **सामानाधिकरण्य-** यदा संख्या आत्मानमुप-सर्जनीकृत्य संख्येये वर्तते, तदा विना षष्ठ्या सामानाधि-करण्यं भवति, यथा विंशतिर्गावः इति । यदा संख्या प्रधानभूता, तदा षष्ठीमन्तरेण संख्येयशब्देन सामानाधि-करण्यं नास्ति, विंशतिर्गवां इति यथा । टुप्. ९।४।१।१ पृ. १७६७. ● **सामानाधिकरण्येन** विशेषण-विशेष्यभावो भवति समानविभक्त्यन्तानाम् । वा. ३।४।१२ पृ. ९२३, ● **सामानाधिकरण्येन** शब्दानां सम्बन्धः । यदा उभाभ्यां उभयार्थोपादानं तदा सामा-नाधिकरण्यं भवति । ३।१।६।१२ पृ. ६८५. ● **सामाना-धिकरण्येन** हि भवति सादृश्यम्, यथा सिंहो देवदत्त इति । टुप्. ६।१।६।२३ पृ १३६९.

● **सामानाधिकरण्यनिबन्धना** विशेषणविशेष्यता अरुणैकहायन्यादौ । सु. पृ. ४०९.

● **सामानाधिकरण्यप्रयोगात्** आचारात् अर्था-व्यवसानं भवति । यथा ' अयं देवदत्तः ' इति । भा. १०।६।७।२३.

● **सामानाधिकरण्यबोधकवाक्यात्** निमित्त-विशेषसंयोगबोधकं वाक्यं बलीयः वाक्ययोर्विरोधे । वा. ३।३।७।१४ पृ. ८४०.

● **सामानाधिकरण्यबोधकश्रुतेः** विशेषसंयोग-बोधकश्रुतिर्बलवती । वा. ३।३।७।१४ पृ ८४०.

● ये तु **सामानाधिकरण्यविकल्पाः** तान् ' नियमो वैकार्थ्ये हि ' ( ६।८।१०।३५ ) इत्यत्र षष्ठाष्टमाधिकरणसूत्रे सर्वानेव वक्ष्यामः । वा. ३।१।६।१२ पृ. ६८८.

● **सामान्यं** अनभिधाय विशेषाभिधानशक्तिर्न निरूप्यते । शिंशपाशब्दो हि न यावत् वृक्षत्व-पार्थि-वत्व–द्रव्यत्व–सत्ता–प्रमेयत्व–ज्ञेयत्वानां अभिधायकः । अथ च तद्विशेषमेव शिंशपां अभिधत्ते । वा ३।४।४।१३ पृ ९४०, ● **सामान्य** अनिरूप्य अगृह्णतोऽपि चक्षुषः रूपग्रहणशक्तिः न निरूप्यते । ३।४।४।१३ पृ ९४०. ● **सामान्यं** आकृतिः जातिः । भा.–– द्रव्यगुण-कर्मणां सामान्यमात्रमाकृतिः । १।३।९।३० पृ. २९८ । वा.–– ' द्रव्यादीनां च सामान्य परापरविभागवत् । वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा ॥ पुनर्वायुत्व-तेजस्त्वजलत्वात्मत्वभिन्नता । पृथिवीत्वाद् घटत्वं च तद्व्यक्तिषु समाप्यते ॥ वृक्षत्वात् परतश्चैव शिंशपात्वादि केवलम् । शरीरत्वाच्च गोवाजिहस्तिपुंस्त्वादि गम्यते ॥ वाजित्वादि चाश्वत्वात् कर्कादिस्तु गुणो मतः । हस्तित्वाद् भद्रमन्द्रादिदिङ्नागकुलजातयः ॥ पुंस्त्वाद् ब्राह्मणत्वादि कण्ठादि समाप्यते । तथा गुणत्वकर्मत्व-रूपता चलनादि यत् ॥ तत शुक्लादि तद्व्यक्तिगुणेषु

प्रतितिष्ठन्ति । कर्मणामपि यागत्वहोमत्वादिविभागतः ॥ अपर्यायस्मृतैरुक्तं धातुभिः प्रविभज्यते । पुनर्विधान संख्याख्या गुणप्रकरणान्तरैः ॥ अन्ये तु भेदमाचार्या कर्मणामेव मन्वते ॥' पृ. २९५ । परसामान्यापेक्षया च सर्वाण्येव अवान्तरसामान्यानि विशेषव्यपदेश प्राप्नुवन्ति । पृ. २९६ । केचित् गोत्वादिषु विशेषत्वमङ्गीकृत्य सामान्यत्वाविना शब्देन अनभिधेयत्वात् यदेव महासामान्य सत्तावस्तु–भावशब्दाभिधेय तदेव शब्दस्वरूपावच्छिन्न गोत्वादि विशेषव्यवच्छिन्न वा गोसत्ताख्य आकृत्यभिधानपक्षे वाच्यमिति मन्यन्ते । यथा आहु – 'अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् । अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥' इति । 'तत्तु कक्ष्याविभागेन सामान्यानां निरूपणात् । अयुक्त न गवादीना तत्र वाचकशक्तता ॥' पृ. २९७. * सामान्य जाति । तस्या पट घट इत्यादि प्रमा । ननु नेय प्रमा, अलीकघटत्वादिजातिविषयकत्वात् । तथाहि, न तावत् व्यक्तिभिन्ना जाति प्रत्यक्षत उपलभ्यते 'इह गवि गोत्व' इति प्रतीत्यभावात् । भिन्नाऽपि सा सर्वगता व्यक्तिगता व्यक्तिमात्रनिष्ठा वा ? अन्तराले अनुपलब्धेर्नाद्य । द्वितीयेऽपि नित्याया उत्पत्त्ययोगात् । अमूर्ताया व्यक्त्यन्तरात् आगमनासंभवात् भविष्यति घटे सा न स्यात् । न चागत आगमनम्, निरवयवत्वात् । एव एकस्या व्यक्तौ कृत्स्नाया अंशेन वा न वृत्ति संभवति इत्यवगन्तव्यम् । अतो न व्यक्तितो भिन्ना जाति संभवति । व्यक्त्यात्मकत्व तु नित्यत्वानित्यत्वाभ्या विरुद्धधर्माभ्या अपहस्तितम् । भेदाभेदश्च अत्यन्तविरुद्ध । एव च स्वलक्षणरूपशुद्धविषयकमेव निर्विकल्पक प्रमा इति चार्वाकैकदेशिन । तत्र, पाणकृपाणमसदृशगोव्यक्तिषु एकाकारप्रत्ययानुपपत्ते । किंच सामान्यस्य अलीकत्व वदता वस्तुत्व व्यापकभेदाभेदाभभनेन सामान्ये वस्तुत्व निराक्रियते । सिद्ध तर्हि वस्तुत्वसामान्यम् । तेन सिद्ध सामान्य जातिरूपम्, तद्बाधके तु उपाधिरूपम् ।

सामान्य च नित्यमेकमनेकानुगतम् । तद्बाधकानि च 'व्यक्तेरभेदस्तुल्यत्व संकरोऽथानवस्थिति । रूपहानिरसंबन्धो ह्याशिकत्वमपीष्यते ॥' इति । एकव्यक्तिगत न सामान्यम् । यथा आकाशत्वम् । तुल्यव्यक्तिगत न सामान्यद्वयम् । यथा घटत्वकलशत्वादि । परस्परात्यन्ताभावसमानाधिकरण एकव्यक्तिवृत्ति न सामान्यद्वयम्, यथा भूतत्वमूर्तत्वे । अनवस्थित न सामान्यम्, यथा जातित्वम् । अनित्य न सामान्यम्, यथा पृथुबुध्नोदराकारत्वम् । असमवेत न सामान्यम्, यथा अभावत्वादि । आशिक न सामान्यम्, यथा उपेक्षात्वम् । इति दिक् । तत्रापि आशिकत्व संकरान्तर्गतम् । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य जातिनिष्ठस्वस्वाभावोभयसामानाधिकरण्यकत्वस्य भेदाभेदगर्भस्य दूषकतानीजस्य तुल्यत्वात् । मणि पृ. २२–२३.

**सामान्यं तच्चिकीर्षा हि । ६।३।११।२७॥**

कर्मसु श्रुतद्रव्यापचारे प्रतिनिधिमुपादाय प्रयोक्तव्य इत्यवगतम् । यत्तु प्रतिनिधेय द्रव्य तत् सामान्य श्रुतेन मुख्येन सदृशमेव उपादातव्य न तु यत्किंचित् । हि यस्मात् तच्चिकीर्षा यद्विषयिणी इच्छा, तदलाभे तत्सदृशस्यैव इच्छा लोके दृष्टा । तच्चिकीर्षा मुख्यद्रव्योपादित्सा सदृशद्रव्येण पूर्यते, न विसदृशद्रव्येण इति कुतूहले ।

तस्मात् मुख्यसदृश एव प्रतिनिधिर्ग्राह्य इति सिद्धान्त । के

* 'सामान्य तच्चिकीर्षा हि' (६।३।११।२७) ! नहि नीवारेभ्यो व्रीहिबुद्धि व्यावर्तते इति वक्ष्यति 'सामान्य०' इति । वा. ३।६।१४।३८ पृ. १०५८ * सामान्य (सादृश्य) देवतासामान्यात् हवि सामान्य बलीय । शू. ८।१।१७।३२–३४. * सामान्य नि शेष सामान्यायोगात् विशेषापेक्षाया सबन्धविशेष बोधयति । सु पृ. १२०० * सामान्य परापररूप द्वेधा । मणि. पृ. २१ * सामान्य यत् शब्दार्थभूत तस्याननुष्ठेयत्वेनाविधेयत्वात् सर्वत्र व्यक्तय एव विधीयन्ते । 'व्यक्तयो हि विधीयन्ते सामान्येनोपलक्षिता.' इति । वा. २।२।२।२ पृ. ४७१, * सामान्य विशेषो बाधते एकविषयत्वे सति । ३।८।७।१७, * सामान्य विशेषेण

बाध्यते । ३।६।१६।४२ पृ. १०६३. ● सामान्यं विशेषेण बाध्यते । भा. १२।४।७।२०. मीको. पृ. ३६७९ 'विशेषेण' इति बिन्दो द्रष्टव्यम् । ● सामान्यं सर्वविशेषेषु अन्तर्गतम् । वा. ३।२।८।२२. ● अन्या च व्यक्तिः, अन्यच्च सामान्यम् । भा. ३।२।८।२१ पृ. ७७६. ● 'अवदधमेव सामान्य विशेष प्रति गच्छति । गतमात्र च तत्तेन विशेषे साध्यते ध्रुवम् ॥' वा. ३।१।१५।२७. ● तत्र हि सामान्यमङ्गीक्रियते यत्र हि भेदग्रहणानुबन्धं अभेदग्रहणम् । यथा गवादिषु । यत्र पुनः भेदग्रहो नास्ति, तत्र भेदाग्रहणनिबन्धनः अभेदाव-सायव्यपदेशः शुक्तिरजतवत् इति न सामान्यकल्पनोप-पत्तिः । ऋजु पृ. १८९. ● यस्मिन् पदार्थग्रहणे सति पूर्वदर्शनप्रत्यवमर्शो भवति तत् सामान्यम् । बृहती. पृ. १२०. ● सूक्ष्ममपि किंचित् सामान्य शब्दो वा ( यथा– निर्वपतिशब्दः ) अर्थो वा ( एकदेवताकत्व द्विदेवताकत्वं इ. ) दृष्टिः ( यथा– ओषधिः ) देवतादि वा तद्गुणा वा रूपादयः उपलभ्येरन् यत्र तत्र तदीयो विध्यन्तः कल्प्य. । भा. ८।१।२।२. ● 'सामान्या-न्यपि चैतानि नश्यन्त्याश्रयनाशतः ।' मु. पृ. ११२६. ● सामान्येन यत् प्राप्नोति तदवरोधं लक्षणया, यत्तु विशेषेण, तत् प्रत्यक्षं श्रुत्या । श्रुतिश्च लक्षणाया बलीयसी, प्रत्यक्षं च परोक्षात् । भा. ३।६।३।१०. ● सामान्येन व्यवहारो न भवति किंतु विशेषेण । टुप्. ११।४।७।२८, ● सामान्यात् विशेषो बल-वान् । सामान्येन शुनःश्रेपा द्वितीयेऽहनि, विशेषेण ऐन्द्रावरुणमस्य । १०।५।२५।८५. ● सामान्यात् विशेषो बलीयान् । भा. ३।६।३।१०. ● सामा-न्यस्य अनुग्राहकं शास्त्रं सामान्ये मुख्य यत् विशेषे लाक्षणिकतया दुर्बलम् । विशेषशास्त्रं तु व्याप्त्या विधायकत्वात् प्रबलम् । 'आहवनीये जुहोति' 'पदे जुहोति' इति । नि. १०।८।८. ● 'सामान्यस्य प्रति-व्यक्ति समाप्तिः' । वा. ३।२।८।२१ पृ. ७७६. ( अत्र मन्त्रदेवतात्वरूपं सामान्यम् । प्रतिव्यक्ति प्रतिमन्त्र-व्यक्ति । आग्नेय्या ऐन्द्या इत्यादि– टिप्पणी. ) । ● सामान्यस्य प्रत्यक्षत्वाभ्युपगमनिरूपणेन अनुमानैक-गम्यत्वं मन्यन्ते शाक्याः । रत्नाकरः अनुमानं श्लो. १४९. ● सामान्यस्य । 'प्रत्यक्षविषयत्वं च सामान्यस्य प्रसाधितम् । वस्तुत्वं च ... ॥' श्लोवा. अनुमान १४६. ● सामान्यस्य प्रवृत्तौ अनुपयोगः ( देवता-नाम् ) । संकर्ष. २।४।२. ● सामान्यस्य विशेषेण– 'तत्र नाम विशेषेण सामान्यस्य निराक्रिया । प्रत्यक्षो यत्र सम्बन्धो विशेषेण प्रतीयते ॥' तुल्यप्रमाणको हि विशेषो बाधको भवति, न दुर्बलप्रमाणकः । वा. ३।६।२।९ पृ. १०३०. ● सामान्यस्य विशेषेण बाधः यथा– आहवनीयस्य वर्त्मना, आहवनीयस्य वल्मीकवपया इत्यादि । भा. १०।८।८।१६. ● सामान्यस्य व्यक्तिवाच-कत्वात् व्यक्तेः सामान्याश्रयत्वं मुख्यम् । समुदाय्या-श्रयत्वं तु वृक्षाश्रयो वन इतिवत् समुदायस्य तन्मध्ये समुदायिप्रतीतेः औपचारिकम् । सु. पृ. ३४६. ● सामान्यस्य साक्षात् कार्यान्वयाभाव. ( साक्षात् विशेष विना ) । रत्न. ६।२।१९।५४. ● 'सामान्यानां न वा नाश. कश्चिदभ्युपगम्यते ।' श्लोवा. उपमान २५ । सामान्यं नित्य इति सिद्धान्तः । रत्नाकरः. पृ ४४१. ● सामान्ये प्राप्ते विशेषो विधीयते । टुप्. १०।३।२।१५. ● सामान्ये हि कश्चिद् विशेषो भवति । न तु नि सामान्यः कश्चिद् विशेष उप-पद्यते । वा. ३।४।१४।४१ पृ. ९८२.

Ꮓ सामान्यातिदेशे विशेषानतिदेश इति न्यायः । अय भावः– सामान्ये अतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा– ब्राह्मणवत् अस्मिन् क्षत्रिये वर्तितव्यमिति । सामान्य यद् ब्राह्मणकार्यं तत्क्षत्रियेऽति-दिश्यते, यद्विशिष्टं माठरे कौण्डिन्ये वा न तदतिदिश्यते, एवं प्रकृतेऽपि । अयं न्याय. 'स्थानिवदादेशोऽनल्विधौ' ( पा० १।१।५६ ) इति सूत्रमहाभाष्ये स्पष्ट । साहस्री. ४३८.

● 'सामान्यान्यन्यथासिद्धेर्विशेष गमयन्ति हि ॥' श्लोवा. अर्थापत्तिपरिच्छेदः ७०.

● सामान्यावगमात् विशेषावगमश्च सर्वप्रत्ययः । भा. ३।१।७।१४ पृ ७०६.

जातं निवृत्तयागाशया चोदनाया प्रमाणान्तरं मृग्यम्, न च तदस्तीत्यप्रमाणता । यथा वक्ष्यति ' न चाग्निरष्टाकपालस्य देवता नाऽऽज्यस्य ' ( २।२।३।६ भा. पृ. ४८७ ) इति । तेन वचनस्याभावात् यथैन्द्रे चोदितेऽग्नेर्देवतात्वं न भवति, सोमस्य च चोदिते न पुरोडाशस्य, अभिषुतस्य च न स्तायाः, शुद्धे च न सगुणस्य, तथैव गुणवति चोदिते न निर्गुणस्य । उक्तं च । ' देवता हि विधेयत्वाद्विवक्षितगुणेष्यते । उपादेये तु तस्याः स्यादविवक्षा गुणादिषु ॥ ' यदि हि तद्धितसम्बन्धे देवतोद्दिश्यमाना स्यात्, ततोऽस्या गुणाविवक्षा भवेत् । इयं पुनर्विधीयमाना देवतात्वमेव न प्रतिपद्यते, इत्यवश्योपादातव्या । ततश्च विवक्षितगुणत्वात्तद्रूपाये न कथंचिद्देवतेति गम्यते । यथा ' शुक्लाया भोक्तव्यम्. ' ' लोहितोष्णीषा ऋत्विजः प्रचरन्ति ' ' दण्डी प्रैषानन्वाह ' इति विशेषणरहितानामकर्माङ्गत्वम् । यदा तेऽप्युद्दिश्यन्ते योऽयं शुक्लवाससमानयेत्यादौ, तदा विनाऽपि विशेषणेनाऽऽनीयन्ते । तदिह यद्यपि तावद्देवता रूपेणोपकुर्यात्, तथापि न गुणरहिता आश्रीयेत, किमुत यदा अभिधानोपकारिणी विशिष्टव्यतिरिक्ताभिधानाभिहिता नैव प्रत्यभिज्ञायते सैवेयं देवतेति । समासेन च विधीयमानाया नानेकार्थविधिदोषप्रसक्तिः । तत्र माहेन्द्रमहत्ता न कथंचिदिन्द्रशब्देनोच्यते । या तु तेनोच्यते, सा तत्र नैव देवता इति अनर्थकमेवाप्या. प्रकाशनम् । ( शुद्धेन्द्रदेवतात्वनिरासेऽपि विशिष्टता सम्यक् अत्राव-अवगमो यस्य देवतात्वस्य तत् श्रुतिसमवायि, तस्य भाव. श्रुतिसमवायित्वं इत्येव सूत्र (१६) योजयति–) अतश्च ' न श्रुतिसमवायित्वात् ' इत्ययमपि सूत्रार्थो भवति श्रुतिसमवेत देवतात्वं भविष्यति तदधीनज्ञानमित्यर्थ. । तच्च तद्धितसमवादे सति ज्ञायते । ( अभिधानाभेदेऽपि देवताभेदमित्युपसंहरति–) तस्मादस्ति देवताभेद इति ।

अथ तस्मिन् पक्षे भाष्यगमनिका । तदभिधीयते । पूर्वपक्षवादी तावदनुवदर्थं प्रमाणस्य वदति, यस्य माहेन्द्रात् ग्रहादिन्द्राभिधानसमर्थमन्त्रानुकर्षं वदति तेनाकर्माङ्गमन्त्रार्थप्रकाशनसैथ्यादिन्द्र एवात्र शुद्धो देवताभूत. प्रकाशयने इत्यभ्युपगत भाति । तस्य च देवतात्वं नाभ्युपगममात्रेण सिध्यति, नापि प्रमाणान्तरेणेति च एतद्भक्षोपचितात्र्यर्थे देवताभिधानशक्तिसहितः श्रूयते ' माहेन्द्र गृह्णाति ' इति तत्प्रयोगात् निश्चायते । स च यदि समासाभिप्रायं केवलादिन्द्रशब्दादुत्पाद्यते, ततो मन्त्राभिधेयस्य देवतात्वमुक्तं भवति । सिद्धश्चैतमर्थं पूर्वपक्षवादिनोऽभिप्रेत मन्त्राणां निष्कृष्य प्रतीति 'इन्द्रोऽस्य देवता' — इति तद्धितप्रयोगेन ज्ञायते, न चास्य महत्त्वमपेक्षमाणस्य, अकृते समासे शुद्धस्योपसर्जनीभूतस्य ' तद्धितसंयोगः ' ' तद्धितसंयोगापेक्षस्य वा ' इति । यद्यपि सापेक्षप्रधानसमासे प्रातिपदिकावस्थाया तद्धितापेक्षा, न च तदानीमसुबन्तत्वात् समासोपपत्ति. । येन यत्रैव पृथग्भूत सुबन्तं सम्बन्धार्हमेव पदान्तरमपेक्षते यथा ' राजपुरुष. शोभन. ' इति, तद्विषयमेवैतत्, ' भवति वै प्रधानस्य सापेक्षस्यापि समास ' इति ग्रहणम् । अकृते च समासे तद्धितापेक्षाया वाक्यात्तद्धितोत्पत्तिरनभ्युपेता स्यात् । शुद्धस्य वा तद्धितसम्बन्धाद्विशेषणानर्थक्यप्रसङ्ग. । नमश्रुति. पुनर्भवती नाभिप्रेतैव, पूर्वे तद्धितसम्बन्धे पूर्वोक्तावेव द्वयविशेषणोत्पत्त्यदृष्टिप्रसङ्गदोषौ । न च समासार्थे वृत्तस्य शुद्धस्य तद्धितसम्बन्धः । तेनैकस्मिन्नेव प्रयोगे तत्सम्बन्धोऽभ्युपगन्तव्य. । ततश्च 'ऐकार्थ्ये परार्थत्वात्' ( १।४। ९।८ ) इति तथैव वैरूप्यदोष ।

' विप्रश्चापमन्त्रोऽपि. ' इति प्रकरणासादनेकार्थविधि. समासपदलभ्यत्वाद्वाक्यभेदमाह । कृते तु समासे नैव दोष. । ' तस्मादैन्द्री देवता अमहत्त्वविशिष्ट. ' शुद्ध: किं तर्हि, विशिष्ट एव । अथवा ऐन्द्री देवता केवलशब्दोपात्तः शुद्ध इत्यभिप्राय. । कथं तर्हि, महत्त्वविशिष्ट., समासप्रातिपदिकात्तद्धितोत्पत्तेः । ' न व्यपवर्तनयेन ' इति नानात्वसिद्धिनिराकरणपरम्, किं तर्हि, वाक्यवशसम्बन्धेन तद्धितेऽपि निष्कृष्टप्रत्यायकत्वादित्यभिप्राय. । 'तस्माद्देवतान्तरम्' इति । यद्यपि द्रव्यैकत्वे सगुणनिर्गुणप्रथग्देवतान्तरत्वम् । आह च–

भाट्ट— ‘ आज्यैः स्तुवते ’ ‘ प्रउग शंसति ’ इत्यादिस्तोत्रशस्त्राणां याजीयदेवतादिप्रकाशकतया याज्यामन्त्रवदेव दृष्टार्थत्वात् अवघातादिवदेव सन्निपत्योपकारकत्वम् । इति प्राप्ते, लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात्, प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तोत्रशस्त्रपदवाच्यत्वात्, एवं गुणिप्रकाशनतात्पर्यकत्वासंभवेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम्, अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आराद्‍उपकारकत्वात् तन्मन्त्राणां तदर्थत्वमेव । न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम्, लिङ्गादेव तादर्थ्योपपत्तौ विधिवैयर्थ्यात् । एवं च माहेन्द्रयागविधौ ऐन्द्री स्तुतिरुपपन्ना भवति । इतरथा शब्दसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम् । अतो यत्रेन्द्र एव देवता तत्रोत्कर्षापत्तिः, सामान्यसम्बन्धबोधकप्रमाणाभावेन वा मनोतादयभिशब्दवत् लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ।

मण्डन— ‘ न देवतार्थः स्तुतशस्त्रपाठ । ’ ६.

शंकर— ‘ स्तोत्रशस्त्रप्रधानत्वम् । ’ ८.

● स्तुतशस्त्राधिकरणम् । इदमेव महेन्द्राधिकरणम् । स्तोत्रशस्त्राधिकरणं चेदमेव । स्तोत्रशस्त्रेषु विनियुक्तानां मन्त्राणां कर्मसमवायिदेवतास्तुत्या देवतास्मरणार्थत्वं नास्ति इति स्तुतशस्त्राधिकरणे उक्तम् । सोम. १।२।१ पृ. ८. ● स्तुतशस्त्राधिकरणे अपकर्ष उक्त. । वा ३।२।६।१७, ■ स्तुतशस्त्राधिकरणे लिङ्गक्रमयोर्विरोधो दर्शितः ‘ अर्थेन त्वपकृष्येत ’ ( २।०।५।१८ ) इति । ३।३।७।१८ पृ ८३६. ● स्तुतशस्त्राधिकरणे स्तोत्रशस्त्रयोरदृष्टार्थत्वं वक्ष्यते तथापि तयोरभिधानात्मकयोरदृष्टार्थत्वेऽपि तन्मन्त्राणां अभिधानरूपदृष्टार्थत्वं न विरुध्यते । कु. १।२।४।८३ पृ. ४६ ● स्तुतशस्त्राधिकरणे स्तोत्रशस्त्रयो. आरादुपकारकत्वं वर्णितम् । सोम. १०।८।२५.

● स्तुतशस्त्राधिकरणोदाहृतवृद्धश्लोके ‘ आचार्यो मातुलश्चैव द्रव्यैकत्वेऽपि दृश्यते । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तथा ॥ ’ इत्यत्र विरुद्धानामपि अपेक्षाभेदेन एकत्र युगपत्समवस्योक्तत्वात् वस्तुविरोधस्तावदास्ति । सु. पृ. ११११.

● वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषां देवतात्वं किंतु वाजित्वेन, ततश्च स्तुतशस्त्राधिकरणगतेन्द्रमहेन्द्रन्यायेन देवताभेदात् नास्ति पूर्वकर्मसमवायः इति न च वाच्यम् । कु. २।२।९।२१.

● स्तुतशस्त्राधिकरणवार्तिके ‘ तदर्थो यादृशो यत्र देवतात्वेन चोदित । मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥ ’ इति व्याख्यातम् । सु. पृ. ७४२.

● स्तुतशस्त्रवान् षोडशिग्रहः । भा. १०।५। १२।४९–५२.

● स्तुतिः गुणगुणिसम्बन्धकीर्तनम् । सु. पृ. ३९५. ● स्तुतिः गुणगुणिसंबन्धकीर्तनम् । सा प्रथमं गुणगुणिभ्यां निर्वर्त्यते । तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात् । तत्र गुणानां तावदकर्माङ्गतया निष्प्रयोजनत्वात् पर्यन्तेन स्तुत्यर्थता । वा. २।१।५।१३ पृ. ४१६ ● स्तुतिः गुणसंकीर्तनम् । सु पृ. ८८५ । गुणसंकीर्तनपरः पदसमूहः स्तुतिः । वि. १०।५।३. ● स्तुतिः नाम गुणकथनपरमेकं वाक्यम् । वि. ९।२।३, ● स्तुतिः नाम स्तोतव्यस्य स्तावकैर्गुणैः सम्बन्धकीर्तनमानविशिष्टम् । २।१।५, ● स्तुतिः विद्यमानगुणैरिव अविद्यमानगुणैरपि भवति । ९।१।१६. ● स्तुति । ‘ विधिस्तुत्यो सदा वृत्ति समानविषयेष्यते । तस्मादेकत्र संदिग्धमिनर्णयावधार्यते ॥ ’ वा. १।४।१३।२४. ● स्तुतिः साम्नैव, न ऋचा । वि ९।२।८. ● न च प्रत्यक्षविरुद्धा स्तुतिः संभवति । वा. १।२। १।२ पृ १०८. ● ननु ‘ इदं विष्णुर्विचक्रमे ’ इति स्तुतिरियम् । न खलु, नात्यत्र स्तुतिशब्दः । नापि किंचित्स्तोतव्यमस्ति । ननु विष्णु । न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुतो विष्णुः कश्चिदर्थमीप्सते । भा. १२।४।३।११ पृ. २२७०.

● न हि तेनैवात्मना तस्य संस्तुतिर्भवति । स्तु. । अत्यन्तभेदात् स्तुतिस्तुत्ययोः । न हि देवदत्तो देवदत्तेन स्तूयते । भिन्नैः शिरःपाण्यादिभिः संस्तूयते । भा. १०।६।१३।१५ । अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा । यथा महाव्रतधर्मेण संवत्सरसत्रस्य । 'घ्नन्ति वा एते मिथुनात् ये संवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ संभवतः ( महाव्रते ), तेनैव मिथुनान्न यन्ति' इति समुदायदोषप्रतिघाताय तदवयवभूतस्य महाव्रतस्य धर्मेण अनुनिमृशन् समुदायस्यावयवधर्मेण स्तुतिं दर्शयति । लोकेऽपि अवयवधर्मेण अवयवी संस्तूयते एव । यथा दीर्घैः केशैः शोभनो देवदत्तः इति । १०।६।१३।४३. ● यस्य स्तुतिम्यस्य विधानं यत्र विधीयते तस्य स्तुतिः इति परिभाषा । या. ३।४।११।१० पृ. ६६४. ● यत्र 'आग्नेः स्तुवते' इति चोदना तत्र कानिचित् पदानि गुणं प्रत्याययन्ति कानिचित् गुणिनम् । तत्र गुणगुणुच्चारणेन स्तुतिर्भवति । स्तुतिचोदनात्तु स्तुतिमात्रस्य गुणाभिधानात्मकस्य चोदितत्वात् विपरिवृत्त्या न गुणवचनाभिरिच्यते । करणेषु ( अभिधानेषु तु ) विपरिवृत्त्या स्तुतिर्गुणिन स्थापयति । टुप् १२।८।१।१. ● वर्तन्त अक्षरैर्बहुभिर्वा अक्षरै स्तुतयो दृश्यन्ते । अनुप्रयाणे दरवाय कश्चित् काश्चित् अर्थस्यो भवन्ति । या. १।८।११।१०.

● स्तुत्यर्थः आदित्य इति शब्दो यूपस्य । वि. ११४।१५, ● स्तुत्यर्थः 'ऐन्द्रो राजन्यः' इत्यैन्द्रशब्दो राजन्यस्य । १।४।१४. ● स्तुत्यर्थं गवादीनां अपशुशब्दः 'अपशवो वा अन्ये गोअश्वेभ्यः' । भाट्ट १।४।१६ ( ११ ). ● स्तुत्यर्थ. छन्दोमस्य अन्नशब्दः 'अन्नं वा एतच्छन्दोमम्' । वि. ११८।१६, ● स्तुत्यर्थ. प्रजाभूताद्यशब्दः । १।४।१८, ● स्तुत्यर्थः ब्राह्मणस्य 'आग्नेयो वै ब्राह्मणः' इत्याग्नेयशब्दः । ११८। १४, ● स्तुत्यर्थं यजमानशब्दः एकधाकस्य 'यजमान एकधाकः' । १।८।१३, ● स्तुत्यर्थं यजमानशब्दः प्रस्तरस्य 'यजमानः प्रस्तरः' । १।४।१३, ● स्तुत्यर्थं यूपस्य यजमानशब्दः 'यजमानो यूपः' । १।४।१५, ● स्तुत्यर्थः वैश्यस्य वैश्वदेवशब्दः 'वैश्यो वैश्वदेवः' । १।४।१४, ● स्तुत्यर्थ. साम्नः अपशब्दः 'अपशो वा एष योऽसामा' । १।४।१६.

● स्तुत्यर्थताऽपि असत्यस्य नास्तीति व्यवस्थितमेव । या. १।२।१।३. ● स्तुत्यर्थता आग्नेयस्य श्रुतेः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' । २।१। १४।२७-२९. मीको. पृ. ८३२ 'आग्नेयस्तुत्यर्थताऽधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● स्तुत्यर्थवादः विधायकस्यार्थविधेयवाक्यस्तवम् । सु. पृ. ११७१.

● स्तुतिपदार्थस्य प्रशंसाया तदनुविधानगुणविधानयोग्यत्वम् । अर्थवादेषु । भाट्ट १।२।१.

● असताऽपि गुणेन असतोऽपि गुणिनः स्तुतिगुणगुणत्वसंभवः । बाल. पृ ७२.

● स्तुतिभावस्त्वलक्षणं देवतान्तरम् । सु. पृ. ७५२.

● स्तुतिमन्त्राः 'अग्निर्मूर्धा दिवः' इति । भा. १२।८।१।१, बाल. पृ. ५१. ● स्तुतिमन्त्राः — येषु कानिचित्पदानि गुणं प्रत्याययन्ति कानिचित् गुणिनम् । तत्र गुणगुण्युच्चारणेन स्तुतिर्भवति । स्तुतिचोदनात् स्तुतिमात्रस्य चोदितत्वात् विपरिवृत्त्या न गुणवचनाभिरिच्यते । टुप् १२।८।१।१. ● स्तुतिमन्त्राणां समुच्चयः । भा. १२।८।१।१-२ ● स्तुतिमन्त्रेषु वजातीये. समुच्चयो न विकल्प. । वि. १२।४।१.

● स्तुतिमात्रे यत्र कस्यचित् क्रियार्थं तदनर्थकं इत्युक्तं 'आम्नायस्य क्रियार्थत्वात्०' ( १।२।१।१ ) इति । भा. ३।३।१४।२९.

● स्तुतिशब्दस्य गुणवत्त्वाभिधानवाचित्वम् । सु. पृ ५८९.

☞ स्तुत्ये श्रूते तु बलवान् परिलोपमेतीति न्याय । अथ महान् जनः अहं तु अनेनैव अपराधं करोमि, न दुर्बलोऽपि भाविकत्यापराधी । माहसी. ७०.५.

● 'स्तूयते न विधीयते' इति न्याय. । 'पशुर्वै पूर्वम्' इत्येव तेजस्तेन पुरुषं स्तूयमानत्वात् विधेयत्वं

कृत्स्नं सुत्याङ्गमेव नः । आधार एव तस्यापि यजना-नीतशङ्गवत् ॥ नानावेदस्वरछाम्यात् स्तोत्रादेः प्राप्त आदितः । प्रधानाङ्गतया पश्चादुपाङ्गत्वेन बाधितः ॥ ततो वाचनिकेनैव यथावचनभाविना । मन्त्रादिना समस्तानि सुत्याङ्गानि प्रयुञ्महे ॥ ' वा. ३।३।२।९ पृ. ८१२-१३.

* स्तोत्रशस्त्रादयः षडहधर्माः षडहाच्चो भ्यार-भ्यन्ते । ते हि अहःसमवायाः । तेषामहःसमावृत्तिरिति स्तोत्रशस्त्रादीनामावृत्तिरित्युक्तम् । न हि ते अहःसु असमानसंयोगेन चोद्यन्ते । भा. १०।६।१०।३०. * स्तोत्रशस्त्रादीनां अदृष्टार्थानां वचनसामर्थ्यात् ग्रहणम् । वा. ३।३।३।१०.

* स्तोत्रशस्त्रमन्त्राणां आयतुपकारकत्वम् । सु. पृ. १०९. * स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेव अग्निष्टुति अविकारेण प्रयोगः । भा. १०।४।१८।५०. मीको पृ. ६५ ' अग्निष्टुति स्तोत्रशस्त्रमन्त्राणा॰' इत्यत्र अधि-करणं द्रष्टव्यम् ।

* स्तोत्रसाधनत्वं विकल्पशृत्यर्थम् , प्रगीताश्च एव ऋचः । भा. ९।२।८।२०-२१ वर्णके १.

* स्तोत्रीयः नाम तृचः ज्योतिष्टोमे पठिष्यमाणादौ प्रथमः ' उपास्मै गायता॰ ' इत्यादिः । वि. ५।३।४, * स्तोत्रीया ऋक् । साम्नो योनिभूता प्रथमा ऋक् । ९।२।६. * स्तोत्रीयाः विश्वजित्, भूतोमशो । भा. १०।३।१४।५६.

* स्तोभः गीत्युपाय. अन्यतमः । भा. ९।२।७। २९. * स्तोभः नाम अधिकरणे सति ऋग्विलक्षण-वर्णस्यम् , ऋग्विलक्षणवर्णत्वं चार्थानभिधायकत्वम् । वि. ९।२।११. * स्तोभाः सामशब्दार्थैकदेशः इति भाष्यम् , नेति वार्तिकम् । कै. (९।२।१०।३५ ).

■ स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् । ९।२।१०।३३॥

' यद्योन्यां तदुत्तरयोर्गायति ' अत्र वचनार्थवशेन तात्पर्यं न योनिवर्णवशेन इत्यवगतम् । अथ स्तोभाः अतिदिश्यन्ते न वेति विचारे पूर्वपक्षमाह । एके आचार्याः द्रव्यान्तरे ऋगन्तरे उत्तरायां स्तोभस्य निवृत्तिं मन्यन्ते । ऋग्वत् ऋगक्षरवत् । यथा योन्यक्षराणां स्तोभाः उत्तरायां न प्रदिश्यन्ते तथा योन्यां गीतस्य स्तोभस्यापि उत्तरायां नातिदेशः इति ।

सर्वातिदेशस्तु सामान्याल्लोकवत् विकारः स्यात् । ३४ ॥

योनौ गीतानां स्तोभानां उत्तरायां नातिदेशः इति पूर्वपक्षं तुशब्देन व्यावर्तयन् सिद्धान्तमाह । स्तोभानां न निवृत्तिः । किंतु सर्वातिदेशः सर्वस्य साम्नः अतिदेशः । सामशब्दस्य ऋक्स्तोभस्वरकालाभ्यासविशिष्टस्य गीतिसामान्यस्य वाचकः । सामान्यात् सामान्यवाचकत्वात् । यद्यपि स्तोभाः ऋक्शब्दार्थैः न सम्बध्यन्ते तथापि नानर्थकास्ते । लोकवत् यथा लोके गायकैः अक्षरस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकालपूरणार्थानि न अर्थसम्बन्धाय उच्चार्यन्ते तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्तेरन् । तस्मात् स्तोभोऽपि प्रक्षेपरूपो विकारः स्यात् । ततश्च स्तोभस्याप्यतिदेशः इति सिद्धान्तः ।

अन्वयं चापि दर्शयति । ३५ ॥

योनिस्थानां स्तोभानां उत्तरयोर्ऋचोः अन्वयं दर्शयति ' यत्र आर्चिकानि पदानि निर्वर्तन्ते स्तोभा गेष्णाश्चानुयन्ति ' इति । गेष्णाः स्वराः । चापि अपिच इति हेतुसमुच्चयमाह । तस्मात् स्तोभानामतिदेशः ।

निवृत्तिर्वाऽर्थलोपात् । ३६ ॥

योनिगतस्तोभानां उत्तरयोरतिदेशः इति सिद्धान्ते उक्ते पूर्वपक्षी आह । वाशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । स्तोभानां निवृत्तिः स्यात् अतिदेशो न स्यात् । अर्थलोपात् । अग्निष्टोमे यज्ञायज्ञीयसाम अग्नि होतार मन्ये दास्वन्तं इति आग्नेय्यां ऋचि गीयते । तत्र च ' अग्निदहति प्रतिदहति ' इति स्तोभा भवन्ति । क्वचित् विकृतिसोमे च ' ऐन्द्रीमग्नेयसाम गायति ' इति श्रुतम् । इन्द्रश्च दीर्घकर्मा शत्रुदलोपादस्यामते । तेन उक्तानां स्तोभानां तत्र अर्थस्य दहनप्रतिदहनादेर्लोपात् निवृत्तिरेव स्तोभानां । तस्मात् ऋगन्तराच्च अन्यत्रापि स्तोभानां नातिदेशः स्यात् ।

**अन्वयो वाऽर्थवादः स्यात् । ३७ ॥**

'निवृत्तिर्वा' इति सूत्रेण प्राप्तां पूर्वपक्षिणः शङ्कां निरस्यति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अग्निष्टपाति इत्येवमादीयकानामपि स्तोभानां ऐन्द्र्यां ऋचि अन्वयः स्यात्, इन्द्रस्य शीतवर्मत्वविषयकोऽवाक्यशेषस्तु अर्थवादः स्यात् । सर्वथाऽपि स्तुतिसम्भवात् न वाक्यशेषविरोधः । तस्मात् ऐन्द्र्यां अग्निष्टपाति इत्यादीनां स्तोभानामतिदेशो न विरुद्धः । एवं सर्वत्र स्तोभानामतिदेश इति सिद्धान्तः । के

* स्तोभानामपि अतिदेशः कर्तव्यः । तथा च वामदेव्यसाम्न योनिस्थस्य 'औ ओ हो हाई' इत्यस्य स्तोभस्य उत्तरयोरपि अतिदेशः । वि. ९।२।१०.
* स्तोभानां सामकालपूर्ति प्रयोजनम् । मणि पृ ५.
* स्तोभानां हुकारादीनां कात्यायनादिकृतस्तोभभाष्यरीत्या अर्थाभिधानार्थता । अभिधानं तु स्तोत्रशब्दादिवत् अदृष्टार्थम् । यद्यपि नवमे ( ९।२।११।३८ ) स्तोभानामनर्थकत्वं वक्ष्यते तथापि सामयोनिभूतया ऋचा एकवाक्यताभावाभिप्रायं तत् इति अदोषः । कु. १।२।४।८३ पृ ४६
* स्तोभाक्षराणि गीतिकालपरिच्छेदार्थानि ऋचि प्रक्षिप्यन्ते । भा. ९।२।१०।३९.

स्तोभाधिकरणम् । अतिदेशः योनिस्थस्तोभानां उत्तरयोर्ऋचोः ॥

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् । ९।२।१०।३३॥**

**भाष्यम्**— 'यवतीषु रथन्तरं गायति' 'रथन्तरमुत्तरयोर्गायति' 'यद्योन्यां तदुत्तरयोर्गायति' इति । तत्र उत्तरागर्णनदीन गातव्य इत्येतत् समधिगतं (९।२।५)। अथेदानीं इदं संदिह्यते, किं स्तोभाः प्रदिश्यन्ते नेति । किं प्राप्तम्? न प्रदिश्यन्ते इति । कुतः? गीतिर्हि साम, न स्तोभाः । या गीतिः, सा प्रदिश्यते, 'यद्योन्यां तदुत्तरयोर्गायति' इति गायति-शब्दसंबन्धात् । अपि च, ऋक्-शब्दार्थे असंबध्यमानाः स्तोभाः अनर्थकाः स्युः । तस्मादपि न प्रदिश्येत । अपि च क्वचित् भवति वचनं 'ऐन्द्र्यामग्निष्टपाति गायति' इति । तत्र अनुपपत्तिर्भवेत् । शीतवर्मा हीन्द्रो वाक्यशेषेभ्योऽवगम्यते । तस्य 'तपति' इत्यनेन संबन्धो न स्यात् । तस्मात् स्तोभस्य ऋगन्तरे निवृत्तिः । यथा ऋगक्षराणां अगीतित्वात् निवृत्तिः, एवं स्तोभाक्षराणामपीति ।

**सर्वातिदेशात्तु सामान्याल्लोकवद् विकारः स्यात् । ३४ ॥**

**भाष्यम्**— नैतदस्ति स्तोभानां निवृत्तिः इति । सर्वातिदेशो भवति । ऋक्-स्तोभ-स्वर-काल-अभ्यासविशिष्टायां गीतौ सामशब्दो वाचकः । कथमवगम्यते? तत्र प्रयोगात् । यदि स्तोभा निवर्तेरन्, तत्कृतो विशेषो नोपसंगृहीतः स्यात् । तत्र शब्दो बाध्येत । तस्मात् स्तोभाः प्रदिश्येरन् । यदुक्तम्, ऋक्-शब्दार्थे असंबध्यमानाः स्तोभा अनर्थका भवेयुः इति । अत्र ब्रूमः । लोकवत् नानर्थका भविष्यन्ति । तद्यथा लोके गायनैः अक्षरस्तबकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकालगणनार्थानि नार्थसंबन्धाय उच्चार्यन्ते । सुखं हि अक्षरैः गीतिकालः परिच्छिद्यते । तद्वत् इहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्तेरन् इति ।

**टुप्टीका**— 'ऋक्स्तोभस्वरकालाभ्यासविशिष्टायां गीतौ सामशब्दो वाचकः' इति एतत् ( भाष्यं ) अयुक्तम् । 'गीतिषु सामाख्या' (२।१।११।३६) इत्युक्तत्वात् । तस्मादन्यथा वर्ण्यते । यद्यपि स्तोभा न सामशब्दवाच्याः तथापि अतिदिश्यन्ते । कथम्? साम उपकारकं ऋगक्षराणाम् । तस्योपकुर्वतः इष्टेन साहाय्यं कुर्वन्तः स्तोभा उपकुर्वन्ति । तदनिर्देशे च यदि स्तोभा नागच्छेयुः तत्कृत उपकारोऽपि हीयेत । तस्मादतिदिश्यन्ते ।

**अन्वयं चापि दर्शयति । ३५ ॥**

**भाष्यम्**— अन्वयनश्चापि स्तोभान् दर्शयति 'यत्र आर्चिकानि पदानि निवर्तन्ते स्तोभा गेहमाश्च अनुयन्ति' इति । स्तोभाः स्तोभा एव । गेहमाः स्वराः । तस्मादपि स्तोभाः प्रदिश्यन्ते ।

निवृत्तिर्वाऽर्थलोपात् ॥ ३६ ॥

भाष्यम्— वाशब्दात् पक्षो विपरिवर्तते । निवृत्तिः 'अग्निष्पति' इत्येवंजातीयकानां स्तोभानाम् । गीतकर्मा हीन्द्रो वाक्यशेषे उपलभ्यते । न तेन एवंजातीयकाः स्तोभाः संबध्येरन् इति ।

अन्वयो वाऽर्थवादः स्यात् ॥ ३७ ॥

भाष्यम्— अन्वयात् सम्पन्ने लोकवत् इति यदुक्तम्, तत् परिहर्तव्यम् । ( उच्यते ) अन्वीयुर्न एवंजातीयकाः स्तोभाः । नहि वयं इन्द्रस्य अन्यथाभ्युपलभामहे । यत्र वाक्यशेषवचनम्, सोऽर्थवादः ।

शा— सामातिदेशे किं स्तोभानां अतिदेशः अस्ति न इति सन्देहे, साम्नः अभिन्नत्वात् स्तोभानां ऋगक्षराणामिव नातिदेशः । भिन्नानामपि गीतिकालपरिच्छेदेन सामाङ्गत्वात् तदतिदेशादेव अतिदेशः । सामानि हि योनौ येन अंशेन अक्षराणि अभिव्यञ्जन्ति तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति । स्तोभाक्षराभिव्यक्तिनिर्वर्त्येन तु अंशेन स्तुत्योपयिकमेव अदृष्टं कुर्वन्ति । तद्यदि स्तोभा नातिदिश्येरन् तन्निर्वर्त्यस्य गीत्यंशस्य लोपात् तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्, तस्मादतिदिश्येरन् । ऋगक्षराणां तु प्रधानत्वात् न सामवशात् अतिदेशः ।

सोम— यदि ऋगक्षराभिव्यक्तिरूपोपकारमुखेन सामातिदेशः तर्हि स्तोभानां ऋगक्षराभिव्यक्तौ अनुपयोगात् तेषामनतिदेशः इत्युदियवेः संगतिः । भिन्नत्वेन रथंतरादिशब्दवाच्यत्वागमात् अतिदेशाभावेऽपि रथंतरादिशब्दवाच्यगीत्यङ्गतया प्रधानभूतगीत्यतिदेशादेव तदतिदेश' इति सिद्धान्तः । स्तोभनिर्वर्त्यसामभागस्य ऋगक्षरानभिव्यञ्जकतया दृष्टद्वारा स्तुत्युपकाराभावेऽपि अदृष्टद्वारा स्तुत्युपकारकत्वं योनौ क्लृप्तम्, उत्तरयोरपि स्तोभनिर्वर्त्यसामभागानतिदेशे तत्साध्यादृष्टवैकल्येन स्तुतेः वैगुण्यं स्यात्, अतः ऋगक्षरानभिव्यञ्जकस्यापि स्तोभगीत्यंशस्य अदृष्टरूपस्तुत्युपकारार्थं अतिदेशे सिद्धे तन्निर्वर्तकतया स्तोभानामपि अतिदेश आवश्यकः । सूत्रार्थः— स्तोभानामुत्तरे निवृत्तिमृगक्षरवत् एके आचार्या ब्रुवते इति ।

वि— 'स्तोभा नोत्र प्रदिश्यन्ते, नागीतित्वेन वर्णवत् ।, स्वरादिवत् प्रदिश्यन्ते गीतिकालोपयोगतः ॥'

भाट्ट— साम्नः कश्चित् अंशः ऋगक्षराधिरूढः कश्चिच्च स्तोभाक्षराधिरूढः । प्रजापतिहृदयादौ स्तोभाक्षराधिरूढ एव । तत्र सामातिदेशे स्तोभानामपि अतिदेशो भवेन्न वा इति चिन्तायां साम्नः ऋगक्षराभिव्यक्त्यर्थत्ववत् स्तोभाक्षराभिव्यक्त्यर्थत्वस्य तुल्यत्वात् गुणानुरोधेन प्रधानभूतानां ऋचामिव स्तोभानामपि नातिदेशः । न च स्तोभानां प्रायशः अनर्थकत्वात् स्तोमसाधनत्वासंभवेन निष्प्रयोजनानां प्राधान्यानुपपत्तेः गीतिकालपरिच्छेदकत्वेन गीत्यङ्गत्वात् तदतिदेशे अतिदेशोपपत्तिः इति वाच्यम् । 'अग्निष्पति' इत्यादिभाष्यकारोक्तस्तोभाक्षराणां ऋगेकवाक्यत्वासंभवेऽपि स्वातन्त्र्येणैव गुणाभिधानरूपस्तोत्रकरणत्वसंभवेन शब्ददेव प्राधान्योपपत्तेः । येषामपि हुफडादिस्तोभाक्षराणां अर्थशून्यत्वं तथापि तदुच्चारणस्य अदृष्टद्वारा अनुष्ठानसादेश्यात् प्रधानऋगङ्गत्वं प्रकरणादिना स्तोभाङ्गत्वमेव वा इति न सामाङ्गत्वकल्पनावसरः । न च साम्नो वा अदृष्टार्थत्वं स्तोभानां वा इत्यत्र नियामकाभावः, साम्नोऽशे दृष्टार्थत्व अंशे च अदृष्टार्थत्व इत्येवंविधवैरूप्यापत्तेरेव नियामकत्वात् । इति प्राप्ते, 'यज्ञायज्ञीयेन स्तुवीत' इत्यादौ तत्र तत्र साम्ना सामान्यतो विशेषतश्च विनियोगस्यैव नियामकत्वेन सामोच्चारणस्यैव तद्द्वारा अदृष्टार्थत्वम्, स्तोभानां तु अर्थशून्यानां गीतिकालपरिच्छेदकत्वेन दृष्टार्थत्वमेव । अन्यथा हि साम्नः प्रकरणादिनैव सर्वस्यापि विवक्षितार्थस्य लाभे विनियोगविधिवैयर्थ्यापत्तेः । अतो विनियोगवशेन झटिति प्रयोजनलाभे द्वारभूतादृष्टस्यापि तत्रैव इति झटिति कल्पना, न तु स्तोभेषु, स्तोभादिस्मद्वारिसंबन्धकल्पनासापेक्षत्वात् । अतः स्तोभादीनां गीत्यङ्गत्वात् तदतिदेशेन अतिदेशोपपत्तेः न तदंशस्य लोपस्य अन्यथाभावः । अर्थवत्स्तोभाक्षरेषु तु ऋगक्षरवदेव स्तोभाद्युपयोगोपपत्तेः गीतेरेव तदङ्गत्व इति [illegible] प्रतिभाति । अत एव अनर्थकस्तोभेषु ऊहप्रसक्तौ साम्नः आथर्विकर्मत्व तदभावे शुद्धादृष्टार्थत्वमेव ।

मण्डन— 'स्तोभस्य चातिदेशोऽस्ति।' १७

शंकर— 'तत्र स्तोभातिदेशनम्।' तत्र उत्तरातु। १७.

स्तोभलक्षणम् ॥

अधिकं च विवर्णं च जैमिनिः स्तोभशब्दः स्यात्। ९।२।११।३८ ॥

भाष्यम्— अथ कः स्तोभो नाम, तस्य लक्षणं कर्तव्यम्। उच्यते। य ऋगक्षरेभ्योऽधिकः, न च तैः सवर्णः स स्तोभो नाम। ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति। तद्यथा, देवदत्तेन समायां परप्रलपता बहुस्तोभं कथितमिति। यदर्थवचनेभ्योऽधिकं विवर्णं च, तदालोकेष्वेवंवक्तारो भवन्ति। लक्षणकर्मणः प्रयोजनं न वक्तव्यम्। लक्षणकर्मणो हि तदेव प्रयोजनम्, यल्लक्षितो भविष्यतीति। किमर्थमुभयं सूत्रितम्। नन्वन्यतरत्पर्याप्तम्, अधिकमिति वा विवर्णमिति वेति। नेत्याह। भवति हि किंचिदधिकम्, न विवर्णम्। यथा, अभ्यासः, आद्रिः आद्रिरिति। तथा किंचिद्विवर्णं नाधिकम्। यथा, विकारः, ओ मा इ इति। तस्मादुभयं सूत्रयितव्यमिति।

सोम— सूत्रार्थः— अधिकं च विवर्णं च यत्स स्तोभः इति जैमिनिर्मन्यते लोके देवदत्तेन वाक्यविप्लावयता बहुस्तोभं कथितं इत्यादौ अर्थाभिधानानुपयुक्ते च विपरीतशब्दभूते स्तोभ व्यवहारादिति।

वि— 'स्तोभस्य लक्षणं नास्ति किंवाऽस्ति, विवर्णता। आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् ॥'

भाट्ट— प्रसङ्गात् स्तोभलक्षणमुच्यते। येऽक्षरेभ्यो ऋगर्थाभिधानोपयोगिभ्योऽधिकाः ऋगक्षरविलक्षणा वर्णाः ते स्तोभाः। अत्र ऋगक्षरेभ्योऽधिकत्वेऽपि आद्रिः आद्रिरित्यभ्यासे ऋगक्षरविलक्षणत्वाभावात् अन्य विशेषणम्। 'ओ मा ई' इत्यादिविकारे ऋगक्षरविलक्षणत्वेऽपि आधिक्याभावादाद्यम्।

कुतुहलवृत्ति— विलक्षणत्वस्य अर्थानभिधायकत्वरूपत्वे अर्थाभिधायकेषु अभिष्टवीत्यादिस्तोभेष्व यातिव्याप्तेः विलक्षणत्वस्य निर्वक्तुमशक्यत्वात् यत्र अभियुक्तानां स्तोभ इति प्रसिद्धिः ते स्तोभाः। स्तोभत्वं च मन्त्रत्वादिवदेवाखण्डोपाधिरिति न तत्र तदवच्छेदकाप्रसिद्धिः। अत्र च येऽर्थवन्तः स्तोभास्तेषां ऋङ्मन्त्रवदेव गुणिनिष्ठगुणाभिधानजनकत्वादेव प्रामाण्यम्। गुणाभिधानस्य चादृष्टार्थत्वेऽपि ज्ञानस्य स्वतः प्रमाणत्वात् दोषाभावेन चाप्रामाण्यायोगात् विषयसिद्धेः प्रमाणत्वाविघातो ऋग्वदेव नानुपपन्नः।

यदि देवताविग्रहादिप्रसङ्गभिया तात्पर्यविषयीभूतस्यैवार्थस्य सिद्धिः, प्रकृते तु तद्दृष्टान्त गुणाभिधानस्याऽदृष्टार्थत्वान्न तात्पर्यकल्पना, अपितु आहार्यज्ञानजनकत्वमेव, तदाऽस्तु पदार्थविषया प्रामाण्यमनर्थकस्तोभानवत्। अथवा सर्वत्रैवमादिस्थले प्रामाण्याभावेऽपि प्रयोजनवत्त्वमात्रेण स्वाध्यायविधेरुपयोगः। नहि वेदत्वावच्छेदेन प्रामाण्यमिति राजाज्ञा 'वेदोऽखिलो धर्ममूलम्' इति मूलपदस्य जनकत्वज्ञापकत्वोभयसाधारण्येनाप्युपपत्तेः।

मण्डन— 'विवर्णश्चाधिकश्च यः।' सः स्तोभः।

शंकर— 'स्तोभोऽधिकं विवर्णं च।'

• ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्ति। तद्यथा— देवदत्तेन समायां प्रलपता बहुस्तोभं कथितं इति। यत् अर्थवचनेभ्योऽधिकं विवर्णं च तदालोक्य एवंवक्तारो भवन्ति। भा. ९।२।११।३९.

• स्तोमः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः ज्योतिष्टोमे। त्रिणवः, त्रयस्त्रिंशः, इत्यादिः विवृद्धस्तोमश्च क्रतौ। वि ७।३।१०, १०।५।६, • स्तोमः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंश इति पृष्ठ्ये षडहे। १०।६।१९. • स्तोमः। 'स्तुतेर्मन् स्तोमः' इति स्मृतेः स्तोमशब्दस्य स्तोत्रीयसंख्याविशेषवाचकत्वात्। सु. पृ. ४१७. • स्तोमः। स्तोत्रसाधनमात्रपरिच्छेदेन स्तुतिमानात्मकः स्तोमः। या. १।४।२।३ पृ ३२९. • स्तोमाः विवृद्धा अविवृद्धा वा येषु तेषु क्रतुषु साम्नामावापोद्वापौ भाष्य-

दिनार्भवपवमानस्तोमयोरेव । १०।८।११।२१-२२. मीको. पृ. ३६६८ 'विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव०' इत्यत्र अधिकरणं द्रष्टव्यम् । * स्तोमा. विवृद्धा यस्मिन् तत्र क्रतौ श्रुतसंख्यासंपत्तये सामान्तरागम । भा. १०।५।६।२५-२७, * स्तोमाः विवृद्धा यस्मिन् तत्र विवृद्धस्तोमके क्रतौ बहिष्पवमाने साम्नामभ्यासः श्रुतसंख्यासंपत्तये । १०।५।७।२६, * स्तोमाः विवृद्धा येषु तेषु क्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नामबाधः । १०।८।१०।२०. * स्तोमानामागन्तूना बहिष्पवमाने पर्यासोत्तरकालता । भा. ५।३।४।७-१२ । माध्यंदिनार्भवपवमानयोस्तु साम्ना गायत्र्यादिष्वेव निवेश. । ५।३।५।१३-१४.

* स्तोमत्वं मुख्य स्तुतिमानमिमित्तम् । वा. १।४।२।३ । स्तोमशब्दो ब्रह्मस्तोम इत्यादिषु समुदायमात्रवचनः । स्तुतेश्च मान स्तोम. इति व्युत्पत्तिस्मरणात् । १।३।४।९ पृ. २२३.

* स्तोमपदस्य स्तोत्रसाधनऋक्समुदाये शक्ति । मणि. पृ. १६४.

* स्तोमभागान् अधीयान एव ब्रह्मा भवेत् । स अधाविष्टोऽपि वासिष्ठकार्यं समर्थः कर्तुम् । भा ३।८। ४।२५.

स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् । १०।४।१०। २० ॥

विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतवो भवन्ति । प्रकृतौ यत्र यावन्त· स्तोमा भवन्ति ततोऽधिका. न्यूना वा स्तोमा कस्मिंश्चित् क्रतौ भवन्ति । यत्र प्रकृते रधिका· स्तोमाः स विवृद्धिमान्. विवृद्धस्तोमक· न्यूनत्वे च अविवृद्धस्तोमकः इति । तयोरुभयोरेव विकृतिषु प्रकृतिवत्. साम्ना प्राप्तिर्भवत्येव । एवं सति किं विवृद्धौ स्तोमाना विवृद्धौ हानौ च उभयथाऽपि प्राकृताना साम्ना निवृत्ति· कर्त व्या किंवा हानौ निवृत्ति , विवृद्धौ तु न निवृत्ति इति विचारे सिद्धान्तमाह । स्तोमविवृद्धौ सत्या प्राकृतं सामजात अधिकं स्यात् , समुच्चय· स्यात् , न निवृत्तिः । अत एव स्तोमविवृद्धौ साम्नामागमेन संख्यापूरणं वक्ष्यते । अविवृद्धौ हानौ तु द्रव्यविकारः स्यात् , यावता निवृत्तेन संख्या पूर्येत तावत् प्राकृतस्य सामद्रव्यस्य विकारः बाध· स्यात् , न तु सर्वस्य प्राकृतस्य बाध. । अन्यत् प्राकृतमेव स्यात् । इतरस्य अश्रुतित्वात् हानौ सत्या यावत् किंचित् न्यूनं प्रयोक्तव्यं तस्य आगमे न श्रुति. । तस्मात् तावत् प्राकृतमेव स्यात् । तथा च चोदकस्य सर्वथा बाधो न भविष्यति । तस्मात् स्तोमविवृद्ध्यविवृद्ध्योः प्राकृतस्य व्यवस्थया बाधाबाधौ इति सिद्धान्तः । के.

* 'स्तोमविवृद्धौ०' (१०।४।११।२०) इत्यधिकरणे द्वात्रिंशत्सप्तमोऽभिषेचनीयः इत्यादिविवृद्धौ उपदिष्टानां यज्ञसाम्ना अतिदिष्टाना च समुच्चय उक्तः । बाल. पृ. १७८. * स्तोमविवृद्धौ न्यूना संख्या प्राकृतैः सामभिः पूरणीया । न प्राकृताना बाध । भा. १०। ४।१०।२०.

स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात् संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् । १०।५।६।१५॥

विवृद्धस्तोमकेषु 'एकविंशेनातिरात्रेण, त्रिणवेन त्रयस्त्रिंशेन' इत्यादिषु क्रतुषु स्तोमविवृद्धौ स्तोमाना विवृद्धौ प्राकृताना साम्ना अभ्यासेन संख्यापूरणं संख्याया पूर्ति· स्यात् । अविकारात् एव हि अधिकृताना प्रकृताना ग्रहण स्यात् , इतरथा अप्रकृतप्रक्रिया भविष्यते । ननु एकविंशत्यादिसंख्याविधिप्रसङ्गे· मान्तरविधानात् अप्राकृतसामभिरेव संख्यापूरणमुचितं इत्यत आह । संख्याया गुणशब्दत्वात् एकविंशत्यादिः संख्याशब्द· साम्ना गुणबोधक. शब्दः । संख्या हि प्राकृताना प्रधानभूताना साम्ना गुणभावेनोच्यते, न प्राधान्येन । अन्यस्य च अश्रुतित्वात् , न च प्राकृतादन्यत् सामद्रव्यं श्रुत्या विधीयते । अविद्यमाना गुणेर्धर्मस्य, तस्य भाव. अश्रुतित्व श्रुतिशून्यत्व तस्मात् । तस्मात् स्तोमविवृद्धौ अधिकसंख्यापूरण प्राकृतसाम्नामभ्यासेन स्यात् इति पूर्वः पक्षः ।

आगमेन वाऽभ्यासस्याश्रुतित्वात् । १६ ॥

एकविंशत्रिणवाद्यतिरात्रेषु विवृद्धस्तोमकेषु क्रतुषु अधिकसंख्यापूरणं प्राकृतानां साम्नामभ्यासेन इति पूर्वपक्षव्यावृत्त्यर्थो वाशब्दः । स्तोमविवृद्धौ अधिकसंख्यापूरणं साम्नां आगमेन कर्तव्यम्, न प्राकृतसामाभ्यासेन अभ्यासस्य अश्रुतित्वात् विधानाभावात् अविद्यमानश्रुतिकत्वात् । इति सिद्धान्तः ।

संख्यायाश्च पृथक्त्वनिवेशात् । १७ ॥

एकविंशत्रिणवाद्यतिरात्रेषु विवृद्धस्तोमकेषु क्रतुषु अधिकसंख्यापूरणं अप्राकृतानां साम्नां आगमेन इति सिद्धान्ते हेत्वन्तरमाह । एकविंशत्यादेः उक्तायाः संख्यायाः पृथक्त्वनिवेशात् पृथक्त्वे स्वभावतो निवेशात् । 'अष्टौ घटाः' इत्यादौ संख्या पृथक्त्वनिवेशिनी दृष्टा । अभ्यासे तु पृथक्त्वनिवेशो न स्यात् । तस्मात् आगमेन संख्यापूरणम् ।

पराक्शब्दात् । १८ ॥

एकविंशत्रिणवाद्यतिरात्रेषु विवृद्धस्तोमकेषु क्रतुषु अधिकसंख्यापूरणं अप्राकृतानां साम्नां आगमेन इति सिद्धान्ते हेत्वन्तरमाह । पराक्शब्दात् 'पराग् बहिष्पवमानेन स्तुवन्ति' इति अनभ्यासस्य वाचकः पराक्शब्दो भवति । यथा 'पराचीः सामिधेनीरन्वाह' इति अनभ्यस्ता इति गम्यते । तस्मात् नाभ्यासेन संख्यापूरणम् ।

उक्ताविकाराच्च । १९ ॥

विवृद्धस्तोमकेषु एकविंशाद्यतिरात्रेषु संख्यापूरणं साम्नामागमेन इति सिद्धान्ते हेत्वन्तरमाह । उक्ताविकारात् उक्तानां अविकारात् अपुनर्वचनात् अनभ्यासात् । अभ्यासे हि जामितादोषः उक्तः 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ' इति । तस्मान्नाभ्यासः ।

अश्रुतित्वादिति चेत् । २० ॥

विवृद्धस्तोमकेषु एकविंशाद्यतिरात्रेषु संख्यापूरणं साम्नामागमेन, अभ्यासस्याश्रुतित्वात् (१०।५।६।१६) इति सिद्धान्तिना उक्ते, पूर्वपक्षी शङ्कते । आगमस्यापि अश्रुतित्वात् न आगमेन संख्यापूरणम् । इति चेत् ।

स्यादर्थचोदितानां परिमाणशास्त्रम् । २१ ॥

अश्रुतित्वादिति चेत् (१०।५।६।२०) इत्यस्य उत्तरमाह । परिमाणशास्त्रं एकविंशेन त्रिणवेन इति स्तोमपरिमाणविधानं अर्थचोदितानां संख्याविधिप्रयुक्तार्थापत्तिलब्धानां प्रापकं स्यात् । नहि सामसु उक्ता संख्या तावतीर्व्यक्तीः विना स्वरूपं लभते । तस्मात् आगमेनैव संख्यापूरणम् ।

आवापवचनं चाभ्यासे नोपपद्यते । २२ ॥

विवृद्धस्तोमकेषु एकविंशत्रिणवाद्यतिरात्रेषु आगमेन संख्यापूरणं इति सिद्धान्तवादी— अभ्यासपक्षं अनुपपत्त्या दूषयति । 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् अत्र ह्येतावपन्ति' इति आवापवचनं अभ्यासे स्वीकृते नोपपद्यते । अभ्यासपक्षे हि आवाप एव नास्ति । तस्मादागम एव । चकारो हेत्वन्तरसमुच्चयार्थः ।

साम्नां चोत्पत्तिसामर्थ्यात् । २३ ॥

विवृद्धस्तोमकेषु एकविंशत्रिणवाद्यतिरात्रेषु संख्यापूरणं साम्नामागमेन इति सिद्धान्ते हेत्वन्तरमाह । सामशास्त्रे साम्नां उत्पत्तेः सामर्थ्यात् आगमेनैव संख्यापूरणं नाभ्यासेन । उक्तं च 'दश सामसहस्राणि शतानि च चतुर्दश । साङ्गानि सरहस्यानि यानि गायन्ति सामगाः ॥ अशीतिशतमाग्नेयं पावमानं चतुःशतम् । ऐन्द्रं स्यात् सप्तविंशानि यानि गायन्ति सामगाः ॥' इति अभ्यासेन संख्यापूरणे एतेषां साम्नां उत्पत्तिरनर्थिका स्यात् । तस्मादागमेन पूरणम् ।

धुर्येष्वपीति चेत् । २४ ॥

यदि विवृद्धस्तोमकेषु क्रतुषु साम्नामभ्यासो न स्यात्, धुर्येष्वपि सामसु अभ्यासो न स्यात् । तथा सति प्रागुक्ता धुर्ये आवृत्तिः (१०।५।३।११) विरुध्येत । इति चेत् पूर्वपक्षी ब्रूयात् ।

नाऽऽवृत्तिधर्मत्वात् । २५ ॥

विवृद्धस्तोमकेषु एकविंशाद्यतिरात्रेषु यदि साम्नां नाभ्यासः धुर्येष्वपि न स्यात् इति पूर्वपक्षिणः शङ्कायां सिद्धान्ती परिहारमाह । न धुर्यसामसु विरोधः तेषां

'आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठन्ते' इति वचनेन आवृत्तिधर्मत्वात्। वचनात् तेषामावृत्तिः। विवृद्धस्तोमेषु च तथा आवृत्तिवचनं नास्ति। तस्मात् आगमेनैव संख्यापूरणं नाभ्यासेन इति सिद्धान्तः। के.

■ सोमविवृद्धौ बहिष्पवमाने पुरस्तात् पर्या-सादागन्तवः स्युस्तथाहि दृष्टं द्वादशाहे। ५।३। ४।७॥

अग्निष्टोमे बहिष्पवमानं त्रिवृत् नाम स्तुत्तृच-ात्मकं भवति। 'एकविंशेनातिरात्रेण प्रजाकामं याज-येत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति विवृद्धस्तोमकाः क्रतवः पठिताः। वर्धितसङ्ख्या-पूरणं च आगामिनेति वक्ष्यते (१०।५।७।२६) तत्र आगमितानां ऋचां किं अन्ते निवेशः किंवा पर्यासात् प्राङ्निवेशः इति विचारे पूर्वपक्षमाह। एकविंशातिरा-त्रेषु सोमविवृद्धौ सत्यां बहिष्पवमाने स्तोत्रे आगन्तवः तृचाः पर्यासात् पुरस्तात् स्युः। न अन्ते। तथाहि एवमेव किल द्वादशाहे दृष्टम्। तत्र हि 'सोमीयानु-रूपौ तृचौ भवतः, बृहद्वन्तास्तृचाः, तृच उत्तमः पर्यासः' इत्युक्तम्। द्वादशाहे पाष्ठिके द्वितीयेऽहनि सोमीयानुरूपौ तृचौ पठितौ अपूर्वौ बृहद्वन्तः बृहत्-शब्दघटिताः तृचाः पठिताः। तत्र उत्तमः पर्यास-पठितः। तस्मात् पर्यासात् पूर्वं एतेषां निवेशो द्वादशाहे दृष्टः इति प्रकृतेऽपि तथैव भवितुमर्हति।

पर्यास इति चान्ताख्या। ८॥

पूर्वस्मिन् सूत्रे 'पुरस्तात् पर्यासात्' इत्युक्तं तत्र कोऽयं पर्यासो नामेति पर्यासशब्दार्थं उच्यते सूत्रे। पर्यास इति च अन्तस्य अन्तिमस्य आख्या नाम भवति लोके। यथा क्षेत्रपर्यासः, नदीपर्यासः इति।

अन्ते वा तदुक्तम्। ९॥

'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिण-वेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इत्यत्र स्तोमानां विवृद्धौ, आगमेन च संख्यापूरणे सति आगन्तूनां तृचानां पर्यासात् पुरस्तान्निवेशः इति सूत्रेण पूर्वपक्षे प्राप्ते सिद्धान्तमाह। वाशब्देन पूर्वपक्षव्यावृत्तिः। आगन्तूनां निवेशः न पर्यासात् प्राक्, किंतु अन्ते निवेशः पर्यासस्थाने एव तेषां निवेशः। तत् तत्र उक्तम्। तत्साधको न्यायः 'अन्ते तु बादरायणः' इति प्रागुक्तः (५।२।५।१९)। तस्मात् आगन्तूनामन्ते निवेशः।

वचनात्तु द्वादशाहे। १०॥

एकविंशोऽतिरात्रः त्रिणवोऽतिरात्रः त्रयस्त्रिंशोऽति-रात्र इत्यत्र स्तोमविवृद्धौ सत्यां बहिष्पवमाने संख्यापूर्तिः तृचागमेन भविष्यति। आगन्तवश्च तृचाः पर्यासात् तृचात् पुरस्तात् निवेशनीया इति पूर्वपक्षे द्वादशाहे बृहद्वतां तृचानां दृष्टान्त उक्तः 'सोमविवृद्धौ०' इति सूत्रे। तत्र सिद्धान्ती दृष्टान्तं वैषम्येण परिहरति। सत्यं द्वादशाहे पाष्ठिके द्वितीये अहनि बृहद्वतां तृचानां पर्यासात् पुरस्तान्निवेशः इति। स तु 'बृह-द्वन्तस्तृचाः, तृच उत्तमः पर्यासः' इति वचनात् भवति। न तु न्यायात्। एकविंशातिरात्रे तु प्रकृते वचनाभावात् न्यायेन निर्णयः कर्तव्यः। न्यायश्च आगन्तूनामन्ते निवेश इति 'अन्ते वा तदुक्तम्' इत्य-त्रोक्तम्।

अतद्विकारश्च। ११॥

सिद्धान्तगतं सूत्रम्। द्वादशाहे यद्यपि बृहद्वद्रथ-न्तरवन्तस्तृचाः पर्यासात् प्राक् भवन्ति तथापि एकविंशातिरात्रादयः न तद्विकाराः न द्वादशाहविकाराः। तस्मात् संख्यापूरणार्थं आगमिनस्तृचा अन्ते एव स्युः। पर्यास इति अन्तिमस्य तृचस्य आख्या।

तद्विकारेऽप्यपूर्वत्वात्। १२॥

तद्विकारेऽपि अहीनसत्रयोः बृहद्वद्व्यतिरिक्तानां ऋचां अन्ते एव निवेशः न पर्यासात् प्राक्। अपूर्वत्वात् अवरुद्धस्थानत्वात्। बृहद्वतां पाठक्रमेण स्थानं पर्यासात् प्राङ्निश्चितम्। बृहद्वद्भिन्नानां तु क्लृप्त-स्थानाभावात् अन्ते निवेश एव युक्तः। तस्मात् सोम-विवृद्धौ बहिष्पवमाने आगन्तूनां तृचानां अन्ते एव निवेश इति सिद्धान्तः। के.

■ स्तोमविषये त्रिवृच्छब्दस्य अन्यत्र दर्शनात्, यथा 'त्रिवृद् बहिष्पवमानः' इत्यत्र स्तोमविषयता

परिच्छिन्ना एव ' त्रिवृदग्निष्टोम ' इत्यत्रापि स एव शब्द उच्चरित स्तोम सम्बन्धिन अनुमानात् बुद्धौ सन्निधापयेत्। भा १०।६।७।२३.

* स्तोमवृद्धौ ' एकविंशेनातिरात्रेण प्रजाकाम याजयेत् ' इत्यादौ आगमेन संख्यापूरण दशमे वक्ष्यते। सु पृ. ८०९.

* स्तोमशब्दस्य लोकप्रसिद्धसमुदायमात्रवचनत्वा-तिक्रमेण स्तोत्रीयासमुदायवचनत्व वेदव्याकरण प्रसिद्धिबलात्। सु. पृ २९७.

* स्तौति-शंसति। इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थे व्यवस्थितविषयौ। प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्द, अप्रगीतेषु शंसतिशब्द। यथा–' प्रउगं शंसति ', ' निष्केवल्यं शंसति '। ' आज्यै स्तुवते, पृष्ठै स्तुवते ' इति। भा ७।२।१।१७

* स्त्री नाम व्यक्तिविशेष। भा ९।१।९।३३, * स्त्री पुमान् नपुंसक इति द्रव्यविशेषा द्वेते। ३।१। ६।१२, * स्त्री पुंसा अनुज्ञा। यजमान पुमान् विद्वांश्च पत्नी स्त्री चाविद्या च। ६।१।६।२४ * स्त्रिय। क्रयविक्रयसंयुक्ता हि स्त्रिय। पित्रा विनीयन्ते भर्त्रा क्रीयन्ते। विक्रीतत्वाच्च पितृधनाना-मनीशिन्य। क्रीतत्वाच्च भर्तृधनानाम् ( पूर्वपक्षे )। न चैतदस्ति निर्धना स्त्रीति। द्रव्यवती हि सा। अर्थेन चास्या समवेतत्व भवति। एव दानकाले समाद क्रियते– धर्मे चार्थे च कामे च नातिचरितव्येति स्मार्तं च श्रुतिविरुद्ध विक्रय नानुमन्यते ' पत्नी वै पारिणह्यस्येशे '। (इति सिद्धान्ते) भा ६।१।३।१० –१६। दम्पती उभावपि स्वतन्त्रौ इति तावत् स्थितम्। ६।१।४।१७ * स्त्रिया अध्ययनरहिततया उपस्थाना- नुमन्त्रण इत्यादीन्यङ्गानि कर्तुमशक्यानि तानि तु पुंसैव कर्तव्यानि, पत्न्या तु ' पत्नी आज्यम वेक्षते ' आज्ये ब्रह्मचर्यं इत्यादि यावदुक्त कर्तव्यम्। वि , भा. ६।१।६।२८. * स्त्रिया अध्ययननिषेध श्रय त्रिविधार्थविषयक पुरुषार्थमात्रविषयक पुरुषार्थ क्रत्वर्थ प्रतिषेध। चाट पृ ३१–३२. * स्त्रिया अपि कर्माधिकारोऽस्ति ' स्वर्गकामो यजेत ' इत्यत्र पुंलिङ्गस्योद्देश्यगतत्वेन एकत्वस्येवाविवक्षितत्वात्। वि ६।१।३. * स्त्रिया अपि क्रतुष्वधिकार इति बादरायणमत सिद्धान्त। नास्त्यधिकार इति ऐति-शायनमत पूर्वपक्ष। भा ६।१।३।६–१६, १९–२१. * स्त्रिया अपि क्रतुष्वधिकार। ६।१।३।६–१६, १९–२१. मीको. पृ. २८८ ' अधिकार क्रतुषु स्त्रिया अपि ' इत्यत्र अधिकरण द्रष्टव्यम्। * स्त्रिया कर्माधिकारत्वेऽपि न स्वातन्त्र्येणाधिकार। दम्पत्योर्हि सहाधिकार। सहाधिकारत्वेन यजमान निष्ठयत्र पत्न्या अपि कार्यसिद्धि। मीन्या. * स्त्रिया द्रव्यवत्ता भवति न वेति विचार मीको. पृ २८८ ' अधिकार क्रतुषु स्त्रिया अपि ' इति बिन्दौ द्रष्टव्य। * स्त्रिया यद् द्रव्य भर्त्रोपसर्पणेन वा वर्तनादिना वोपार्जित भवति तदपि सा यस्य स्वभूता तस्यैव ' भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते। यत् ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥ ' इत्यैतिशायनमतम्। यत्तूच्यते भार्यादयो निर्धना इति, स्मर्यमाणमपि निर्धनत्व व्यवस्थमेव श्रुतिविरोधात्। दानकाले च विवाहे समाद क्रियते ' धर्मे चार्थे च कामे च नातिचरितव्या ' इति। भा. ६।१।३।१२–१४ * स्त्रीणा अपि वैदिके कर्मणि अधिकार, स च पत्या सहैव। ६।१।३।६–१६, १९–२१. * स्त्रीणा अस्वा तन्त्र्य उच्यते साम्प्रदायप्रसिद्धयर्थम्। भा ६।१।३।१४. * स्त्रीणा पत्य तरवर्जनाचारस्य मूलभूता श्रुति ' द्वे द्वे रशने नैका बहून् पतीन् ' इति यूपैकादशिन्याम्। वा १।३।४।९ पृ २२१, सु पृ. २१४. * स्त्रीणा पूर्वं सव्याञ्जनाचारमूलभूता श्रुति ' सव्य हि मनुष्या पूर्वमञ्जते ' इति। वा १।३।४।९ पृ २२१, सु पृ. २१४ * स्त्रीणा प्रायेण चक्षुरन्तदर्शनम्। सु पृ १२. * दृश्यते हि अपराधिनीनामपि ( स्त्रीणां ) स्वभर्तृनिमित्त प्रसव। तदपराधनिमित्तस्तु तासामशुभ फलोपभोगो भवेत् न तु अपत्याना वर्णसङ्कर। न च

नियोगतो वर्णान्तरेरेव सह प्रमादः । सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः । मस्त्रजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यतरवर्णापत्तिः स्मर्यते । या. १।२।१।२. ● स्त्रियां यत् प्रातिपदिकं वर्तते तस्मात् स्त्रीप्रत्ययो भवति । भा. ३।१।६।१२ पृ. ६८१–६८१.

● "इत्युपायमाणमशादि पुरुषार्थमपि स्त्रियः । प्रतिषेधः स्त्रीरङ्गमिष्टः प्रकरणाभयात् ॥" इति व्याकरणाधिकरणे निषेध उक्तः । बाल. पृ. ३९.

● 'स्त्रीकामः प्रायश्चित्तं कुर्यात्' इतिवत् । स्त्रीकामना यथा प्रायश्चित्तनिमित्तं तथा 'स्वर्गकामो यागं कुर्यात्' इत्यत्र स्वर्गकामना निमित्तम् । पूर्वपक्षे, 'स्त्रीकामः' इत्यादावपि न कामनाया निमित्तत्वम् । प्रायश्चित्तप्रकरणे प्रायश्चित्तप्रसङ्गात् । किंतु प्रमाणान्तरसिद्धकामनानिमित्तकप्रायश्चित्तार्थत्वमेव सिद्धान्ते । भाट्ट. ६।१।१.

● स्त्रीत्वं लट्वादौ अविद्यमानमेव टाबादिप्रत्ययदर्शनेन आरोप्यते । मु. पृ. ४१८.

● स्त्रीदेवत्यः सारस्वतः पूर्वम्, पुंदेवत्यः सारस्वत पश्चात् इति मुख्यक्रमेण नियमः पुरोडाशयोः । भा. ५।१।७।१४.

● स्त्रीपुंसयोः सहाधिकारः । भा. ६।१।६।२८.

● स्त्रीमात्रकर्तृकाणां आज्यावेक्षणादीनां पदार्थानां ज्ञानं तद्विधिनिराक्रियते । मीन्या.

● स्त्रीलिङ्गस्य पौंस्नः टाबादयः । भा ३।८।४।१३ पृ. ९२१.

● स्त्रीलिङ्गता गुणवचनस्यापि भवति । यथा– फलया बुद्धिरिति, तथा अरुणा इति । भा ३।१।६।१२ पृ ६८५.

● स्त्रीवास.परिधानरूपात् पापात् लक्ष्मीहानिर्भवति । बाल. पृ. ६५.

● न चैक एव प्रकारो मुग्धयोषायाः. संस्थानं रमणीयता लावण्यं चेति । स्त्रीविपर्यं हीनत् । विरूपा पुनः पद्मकमण्डलधारि मुखं शोभते । बा. १।२।२।१५.

● प्रातिपदिकविशेषणं स्त्रीशब्दः, स्त्रियां यत् प्रातिपदिकं वर्तते तत्स्त्राबादयः इति । भा ९।१।९।१३.

● स्त्रीसद्वितीयस्य एकस्यैव पुरुषस्य आधानेऽधिकारः । ६।१।५।२२–२३. मीको. पृ. २२०९ 'आधानाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● स्त्रीसंभोगाभावः अग्निचिद्व्रतं शयनोत्तरम् । वि. ५।३।१०.

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् । ६।१।१३।५१॥

'रौद्रं वास्तुमयं चरुं निर्वपेत्' इति रौद्री इष्टिर्विहिता । वास्तुमयो नाम वास्तुकाख्यशाकविशेषप्रकृतिकः इति कुतूहलम् । वास्तुशाकबीजप्रकृतिकः इति सोमनाथः । 'रौद्रं वास्तुमयम्' इति भाष्यादौ पाठ. । 'ऐन्द्रं वास्तुमयम्' इति तु पाठः शास्त्रदीपिकायाम् । एतामिष्टिं निरूप्य 'एतया निषादस्थपतिं याजयेत्' इत्युक्तम् । तत्र कोऽयं निषादस्थपतिः इति विचार्यते । निषादा ये आरण्यकाः तेषां स्थपतिः श्रेष्ठ. त्रैवर्णिकेषु अन्यतमः इति पूर्वपक्षः । सिद्धान्तस्तु अयं स्थपतिः जातितः निषाद एव स्यात् न त्रैवर्णिकः । षष्ठीतत्पुरुषापेक्षया समानाधिकरण. कर्मधारयः समासो बलवान्, शब्दयोः स्वार्थवृत्तित्वात् । षष्ठ्यर्थकल्पनाया तु लक्षणाप्रसङ्गः । तस्मात् स्थपतिः निषाद एव स्यात् ।

लिङ्गदर्शनाच्च । ५२ ॥

'एतया निषादस्थपतिं याजयेत्' इति रौद्र्यामिष्टौ यजमानत्वेन उक्त. स्थपति. जात्या निषाद एव स्यात्, न त्रैवर्णिकः । निषादश्चासौ स्थपतिश्च इति कर्मधारयः, न तु षष्ठीतत्पुरुषः इति उक्ते सिद्धान्ते लिङ्गदर्शनं हेत्वन्तरमाह । 'कूटं दक्षिणा' इति पशुपक्षिणां मन्थनार्थः कर्मविशेषः कूटो नाम दक्षिणात्वेन उक्तः । स च निषादस्यैव संभवति न त्रैवर्णिकस्य । तदेतत् लिङ्गं स्थपतेर्निषादत्वे दृश्यते । तस्मात् स्थपतिर्निषाद एवेति सिद्धान्तः । चकारो हेतुसमुच्चयार्थ. । के.

● स्थपत्यधिकरणन्यायः । तस्य स्वरूपमित्थम्, अत्रैवर्णिकेन निषादेन कृतमपि आधानं आहवनीय-

संस्काराधायक न भवति । तस्य आधाने विशेषवचनाभावात् । इति ( ६।८।३।२०–२१ ) । परिमल ३।४।१२।४१–४२ द्रष्टृ.

☒ स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत् तादर्थ्याच्चापवृज्येत । ६।८।३।२०॥

रौद्रीमिष्टिं विधाय ' एतया निषादस्थपतिं याजयेत् ' इति विहितम् । इयं स्थपतीष्टिः निषादस्थपतेः इष्टिः अग्न्याधेयं प्रयोजयेत् । स्थपति इष्ट्यर्थं अग्न्याधेयं कृत्वा तत्संस्कृतेषु अग्निषु इष्टिं कुर्यात् । नहि अग्न्याधेयं विना संस्कृतानामग्नीनां लाभः संभवति । प्रयाजवत् यथा प्रयाजान् चोदकात् प्रयोजयति तथा अग्न्याधेयं प्रयोजयेत् । तादर्थ्याच्च अग्न्याधेयस्य इष्ट्यर्थमेव प्रयुक्तत्वात् इष्ट्यपवर्गे आधानमपि अपवृज्येत समाप्तं स्यात् । अग्नीनाधाय इष्टिं कृत्वा अग्नयो विसर्जनीयाः स्थपतिना इत्यर्थः । तस्मात् स्थपतीष्टिः संस्कृतेषु अग्निषु इति पूर्वः पक्षः ।

अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ।२१॥

निषादस्थपतीष्टिः आधानसंस्कृतेषु अग्निषु भवेत् इति पूर्वपक्षसूत्रेण प्राप्तं अपिवाशब्देन निरस्य सिद्धान्तमाह । स्थपतीष्टिः लौकिके अग्नौ स्यात् न संस्कृते । आधानस्य असर्वशेषत्वात् सर्वपुरुषकर्तृकयज्ञाङ्गत्वाभावात् आधानोत्पत्तिवाक्ये त्रैवर्णिककर्तृकत्वश्रवणेन त्रैवर्णिकयज्ञाङ्गत्वात् । निषादस्थपतेश्च अत्रैवर्णिकत्वेन आधानाधिकाराभावात् लौकिकेष्वग्निषु एव स्थपतीष्टिः इति सिद्धान्तः । के.

● स्थपतीष्टेः लौकिकाग्निषु अनुष्ठानम् । ६।८।३।२०–२१. मीको पृ २३८९ ' निषादस्थपतीष्टिः लौकिकेष्वग्निषु० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

☒ स्थविरलगुडन्यायः । वृद्धहस्तगतिलगुडस्य यथा यथास्थानं न पतनमेवं लक्ष्यस्थानेऽपतनं यत्र तत्रास्य प्रवृत्तिरिति । माद्गसी. ५१२.

☒ स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत । १०।१।६।१०॥

' स्थाणौ स्थाण्वाहुतिं जुहोति ' इति यूपे श्रुतम् । स्थाणुः यूपे छिन्ने अवशिष्टो वृक्षभागः । तत्र आज्याहुतिः स्थाण्वाहुतिः । स्थाणुरयं देशमात्रं होमस्य आधारमात्रमुक्तम् । एवं च देशमात्रत्वात् स्थाणौ आहुतेः अनिवृत्तिः प्रतीयेत । न निवृत्तिः । किंतु साद्यस्के खलेवाल्या यूपे सति स्थाण्वाहुतिः यत्र कश्चित् स्थाणौ कर्तव्या । आरादुपकारकमिदं कर्म । इति पूर्वः पक्षः ।

अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत । ११ ॥

साद्यस्के स्थाणौ स्थाण्वाहुतिः कर्तव्या न वा, स्थाण्वाहुतिः आरादुपकारिका वा यूपसंस्कारो वा इति विचारे आरादुपकारिका स्थाण्वाहुतिः, सा च अग्नीषोमीये पशौ इव साद्यस्केऽपि कर्तव्या इति पूर्वपक्षं निराकर्तुं अपि वा इति शब्दः । स्थाण्वाहुतिः अग्नीषोमीये पशौ तावत् तत्संस्कारः यूपस्य संस्कारः प्रतीयेत, शेषभूतत्वात् स्थाणोः यूपशेषभूतत्वात् । स्थाणोः आहुत्याधारत्वात् यूपसंस्कारत्वम् । तस्मात् संस्कारः स्थाण्वाहुतिः । साद्यस्के च तस्य सर्वस्याभावात् स्थाण्वाहुतेर्लोपः इति सिद्धान्तः ।

समाख्यानं च तद्वत् । १२ ॥

तद्वत् यूपवाक्यप्रकरणवत् स्थाण्वाहुतिः इति समाख्यानं आहुतेः यूपसंस्कारार्थत्वं बोधयति । ततश्च स्थाण्वाहुतिः स्थाणुद्वारा यूपसंस्कारः । साद्यस्के च खलेवाल्या यूपत्वेन तत्ताभावात् स्थाण्वाहुतेर्लोपः इति सिद्धान्तः ।

मन्त्रवर्णश्च तद्वत् । १३ ॥

' अतस्त्वं देव वनस्पते शतवल्शो विरोह ' इति यस्त्वं मया वृक्णः सः अतः आव्रश्चनात् बहुप्रकारो विरोह इति यूप इव स्थाणुरादिश्यते । सोऽयं मन्त्रवर्णः तद्वत् समाख्यानवत् स्थाण्वाहुतेः संस्कारकर्मत्वं बोधयति । तस्मात् तत् साद्यस्के खलेवाल्या यूपे न कर्तव्य इति सिद्धान्तः । के.

● ' स्थाणौ तु देशमात्रत्वात् ० ' ( १०।१।६।१०–१३ ) इत्यत्र खलेवाल्या स्थाण्वाहुतिः कर्तव्या

विनियुक्तयूपसंबन्धत्वेन अविनियुक्तस्थाणुसंबन्धत्वेन वा आरादुपकारित्वादिति पूर्वपक्षयित्वा सिद्धान्तितं न कर्तव्या यूपीयो ध्रियमाणश्चनस्थाणु इति तत्संस्कारद्वारा यूपसंस्कारार्थत्वादिति । बाल. पृ. ८३.

● स्थाण्वाहुतिः अग्नीषोमीये पशौ । भा. १०।१।६।१०. ● स्थाण्वाहुतिः । यूपे वृक्णे सति भवशिष्ट वृक्षमूलं स्थाणुः तत्राहुतिः स्थाण्वाहुतिः । 'वनस्पते शत वल्शो विरोहेत्याग्नेयने जुहोति' । वि. १०।१।६, ● स्थाण्वाहुतिर्यूपसंस्कारार्था । १०।१।६.

※ स्थाण्वाहुतिन्यायः । सायन्के स्थाण्वाहुतिर्नानुष्ठेया ॥

स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत । १०।१।६।१०॥

भाष्यम्— तस्मिन्नेवाग्नीषोमीये पशौ श्रूयते 'स्थाणौ स्थाण्वाहुतिं जुहोति' इति । तत्र सायस्के अयमर्थः सांशयिको भवति किं सायस्के स्थाण्वाहुतिः कर्तव्या नेति । तदेतत् तावत् परीक्ष्य किमारादुपकारकं कर्म स्थाण्वाहुतिः उत यूपसंस्कार इति । यदि आरादुपकारकं कर्म तदा कर्तव्या, अथ यूपसंस्कारः निवर्तेतेति । कथमारादुपकारकं कर्म स्यात्, कथं वा यूपसंस्कार इति ? यद्येवमभिसंबन्धः क्रियते यूपम् छेत्स्यता स्थाण्वाहुतिः कर्तव्येति ततो यूपसंस्कारः । अथ यूपमच्छेत्स्यतेति प्रकृतेन न संबध्येत तदा आरादुपकारकं कर्मेति । किं तावत् प्राप्तम् ? आरादुपकारकं कर्मेति । एतद्विशत कर्मणा प्रयोजनम् । भूतं हि तावत् भव्यार्थमिति । अपि च निवृत्तप्रयोजनेन स्थाणुना संबध्यमाना आहुतिः किमिव यूपस्योपकरिष्यति ? संनद्धे हि क्रियमाणं छेदनं तत्र उपकुर्यात् । व्यावृत्तो हि यूपात् स्थाणुः । अपि च तन्त्रमेकादशिन्या यूपाहुतिर्भविष्यति, यदि आरादुपकारकं कर्म स्यात्, तथाहि नाभ्युदयः कल्पयिष्यते । अपि च अविशिष्टेन वाक्येन स्थाणौ स्थाण्वाहुतिः श्रूयते । सा च प्रकरणेन यूपच्छेदनस्थाणुविशेषे बध्येत । तस्मादारादुपकारकं कर्म स्थाण्वाहुतिः, सायस्के च कर्तव्या चोदकानुग्रहायेति ।

अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत । ११ ॥

भाष्यम्— एवं प्राप्ते, ब्रूमः । अपि वेति पक्षव्यावृत्तिः । यूपसंस्कारः प्रतीयेत । कुतः ? प्रकरणविशेषात् यूपमच्छेत्स्यतः स्थाण्वाहुतिः विधीयते इति गम्यते । यो हि मन्यते अविशिष्टेन वाक्येन स्थाणुदेशमात्रे विधीयते इति, फलं तस्य कल्पनीयं भवति । योऽपि मन्यते प्रकरणात् आरादुपकारकम् अग्नीषोमीयस्य भवतीति, तस्यापि प्रकरणसामान्यं प्रकरणविशेषेण बाध्येत । कर्मशेषभूतश्च यूपः, प्रयोजनान्तरात् तेन संबध्यमाना अदृष्टार्थाऽपि आरादुपकारिका सती कल्प्यप्रयोजना स्यात् । अतः प्रसिद्धिन्यायेन बाध्येत । यथा अश्वकर्णं इति । निवृत्तप्रयोजनं चापि स्थाणौ, यूपात् व्यावृत्ते च यूपीयोऽसौ इति कृत्वा तत्र क्रियमाणा यूपाहुतिः यूपस्य कृता भवति इति तत्सान्निध्ये क्रियते । यथा शिरसा धारितायाः स्रजः शिरसोऽपनीतायाः, वैश्वदेवीयाऽसौ इति कृत्वा शुचिदेशनिधानादिः संस्कारः प्रयितव्यो भवति । एवं स्थाण्वाहुतिरपि । एकादशिन्या च अग्निश्वदेशस्य अविवक्षितत्वात् तन्त्रं यूपाहुतिर्भविष्यत्येव । तस्मात् संस्कारपक्ष एव ज्यायान् ।

समाख्यानं च तद्वत् । १२ ॥

भाष्यम्— स्थाण्वाहुतिरिति च समाख्यानं स्थाणुप्रधानाया इवाहुतेर्भवतीति । कथम् ? षष्ठीसमासोऽयम् । कर्मणि षष्ठी । ईप्सिततमं च कर्म । सप्तमीसमासो लक्षणायेत इति कृत्वा नादर्तव्यो भवति ।

टुप्— 'स्थाण्वाहुतिः' इति षष्ठीसमासोऽयम्, सप्तमीसमासानुपपत्तेः । कथम् ? सप्तम्यन्तस्य शौण्डादिभिः सह समासः ('सप्तमी शौण्डैः.' पा० २।१।४०) । ननु 'संज्ञायाम्' (पा० २।१।४४) इति समासो भविष्यति । उच्यते । तत्र अलुक् प्राप्नोति, यथा अरण्येतिलकाः इति । नैतदेवम् । हलदन्तात् स उच्यते । अकारान्तं चेदम् । तस्मात् लुगेव । एवं तर्हि अन्यथा नियम । अर्थप्रयुक्तो हि समासः । सप्तमीसमासे अधिकरणप्रधानो निर्देशः । तत्राहुतिः आरादुपकारिका ।

षष्ठीसमासे संबन्धः प्रधानम्। तत्र आहुति संस्कारिका। आरादुपकारकाच्च सामवायिकं गरीयः। ननु उभयथाऽपि अदृष्टार्थो, किमत्र गरीयस्त्वम् ? उच्यते। सत्यमदृष्टार्थो, किंतु समवायसंबन्धः बलवान्। आरादुपकारकत्वे कल्प्यः संबन्धः। तत्र प्रकरणेन एकवाक्यता।

मन्त्रवर्णश्च तद्वत्। १३॥

भाष्यम्— इतश्च पश्यामः संस्कारकर्मेति, यतो मन्त्रवर्णोऽपि तद्वद् भवति 'अतस्त्वं देव वनस्पते शतवल्शो विरोह' इति। यस्त्वं मया वृक्णः सोऽतः आव्रश्चनात् बहुप्रकारो विरोह इति यूपमिव आद्रियमाणो मन्त्रवर्णो भवति। तस्मादपि संस्कारकर्म ग्लेष्वाल्या न कर्तव्यमिति।

शा— स्थाण्वाहुतिः ग्लेष्वाल्या न कर्तव्या।

सोम— यूपाहुतेर्दृष्टार्थत्वेन निवृत्तावपि स्थाण्वाहुतिः अदृष्टार्थत्वात् कर्तव्या इत्युदितत्वे संगतिः। सूत्रार्थस्तु— दैशमात्रत्वात्स्थाणोः सप्तम्या आधारमात्रत्वात् होमार्थतया होमसंस्कार्यत्वाभावात् अनिवृत्तिः। स्थाण्वाहुतेः ग्लेष्वाल्यामिति।

नि— 'तस्या (ग्लेष्वाल्या) स्थाण्वाहुतिः कार्या न वा, स्थाणौ विधानतः। कर्तव्योपकारोत्सारात् पशौ सा प्रकृताविव ॥, यूपीयानश्चनस्थाणुद्वाराऽसौ यूपसंस्कृतिः। स्रग्वत् तत्प्रभरात् सेयमयूपाद् विनिवर्तते ॥' ग्लेष्वाल्याः निवर्तते।

भाट्ट— तत्रैव (ग्लेष्वाल्या) स्थाणौ 'स्थाण्वाहुतिं जुहोति' इति प्रकृतौ विहिता स्थाण्वाहुतिः कार्या न वेति चिन्तायाम्, स्थाण्वाहुतेर्यूपत्वोत्पादकत्वे प्रमाणाभावात् आरादुपकारकत्वेन पशुयागाङ्गत्वावगतेः कर्तव्यैव सा। न चात्र 'यूपमच्छेत्यनया' इत्यस्य तृतीयान्तस्य करणव्याने अनुषङ्गेण यूपत्वोत्पादकत्वकल्पना संभवति, छेदनादिना व्यवायाच्च गुरुतरम्। न च स्थाणुसंस्कारद्वारा यूपत्वोत्पादकत्वकल्पना, स्थाणोः सप्तम्या गुणत्वावगमेन संस्कार्यत्वानुपपत्तेः। होमेन तस्य प्रतिपत्त्यवनेन प्रयाजशेषन्यायासंभवाच्च (४।१।१४)। न च यूपवियुक्तस्थाणोः कश्चिदुपयोगः, येन संस्कार्यत्वमाशङ्क्येत। अत एव यस्य कस्यचिदेव स्थाणोः अधिकरणत्वेन प्राप्तत्वात् स्थाण्वाहुतिः इत्यपि सप्तमीसमासेनैव नामधेयम्। न च आहुतिशब्दस्य शौण्डादिगणपाठाभावात् सप्तमीसमासानुपपत्तिः, तथात्वेऽपि संज्ञायामपि सप्तमीसमासविधानेन तदुपपत्तेः। न च तदानीं अरण्येतिलकाः इतिवत् अलुक् प्रसङ्गः, हलदन्ते एव तद्विधानेन उकारान्ते तदप्रसक्तेः। अत एव कर्तृप्रवृत्तिनिमित्तेन सप्तमीसमासोपपत्तौ न कर्मषष्ठीमङ्गीकृत्य षष्ठीसमासाङ्गीकारेण संस्कारकर्मत्वकल्पना। इतरथा आघारस्यापि प्रयाजीयचतुर्गृहीतसंस्कारकत्वापत्तेः। अतो यस्मिन् कस्मिंश्चित् स्थाणौ ग्लेष्वाल्यादावपि पश्वङ्गभूता स्थाण्वाहुतिः कार्यैव। इति प्राप्ते, सप्तम्या अधिकरणत्वेन स्थाणोर्गुणत्वेऽपि प्रयोजनाकाङ्क्षायां वैमृधन्यायेन (४।३।११) पदान्तरकल्पनया यूपोपयुक्तस्थाणुसंस्कार्यत्वावगतेः तद्-द्वारा यूपत्वोत्पादिकैवेषा। दृश्यते च गुरुधृताया अपि स्रजः पूजादिना संस्कारः शिष्यैः। अत एव होमजन्य स्थाणुनिष्ठमेव अदृष्टं स्वजन्यवृत्तित्वसंबन्धेन यूपत्वोत्पादकम्। अत एव यूपानुनिष्पन्नस्थाणौ एवायं होमः, न तु स्थाणुमात्रप्रयोजकः। एवं प्रोक्षणादिवत् अदृष्टविषयाऽपि संनिपत्योपकारकत्वलाभेन न आरादुपकारकत्वकल्पना युक्ता, प्रकरणकल्प्यश्रुतिकल्पनाया गौरवात्। आघारे [illegible] आरादुपकारकत्वेऽपि परप्रयुक्तद्रव्योपजीवित्वलाभात् न तत्संस्कारकत्वकल्पना। वस्तुतस्तु प्रकरणकल्प्यश्रुतिकल्पनागौरवभिया तत्रापि 'चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य' इत्यत्र तस्य इति कर्मषष्ठ्यङ्गीकारेण सुतरां संस्कारकर्मत्वाङ्गीकारः इति न्यायसुधोक्तमेव सम्यक्। परन्तु 'अग्नीद् वा एतद्यज्ञस्य यदाघारो वर्म प्रयाजाः' इति यज्ञाङ्गत्वश्रुतेः प्रयाजाङ्गत्वानङ्गीकारः। अतो यूपानुनिष्पन्नस्थाणोः ग्लेष्वाल्यादौ अभावात् उत्पाद्ययूपत्वाभावाच्च न स्थाण्वाहुतिः। यूपाहुतेस्तत्र अनन्यपि संस्कारकर्मत्वे 'यूपमच्छैत्यनया' इति वचनेन साक्षादेव यूपत्वोत्पादकतया विहितत्वात् अकरणमिति विशेषः।

मण्डन— ' स्थाण्वाहुतिश्चापि न तत्र कार्या । '
शंकर— ' तत्र स्थाण्वाहुतिर्न च । '

● स्थानं अन्यतराकाङ्क्षा । मीन्या. ● स्थानम्- इतिकर्तव्यतात्वेन अयोग्यसंबन्धयोः वाक्यार्थयोः संनिधि इति स्थानलक्षणम् । भाट्ट ३।६।७. ● स्थानमेव विनियोजकम् । कर्मगोचरे अल्पस्य कर्मणः परिमाणसामान्येन फलगोचरे अल्पमेवोपतिष्ठते मध्यमस्य मध्यम महतो महत् इति स्थानमेव विनियोजकम् । वा १।२।२।१७. ● स्थानं क्रमः देशसामान्य इत्येकोऽर्थः । मीन्या. ● स्थानं क्रमबोधकं प्रमाणम् । मणि. पृ. १३. ● स्थानं द्विविधं पाठसादेश्यं अनुष्ठानसादेश्यं चेति । मीन्या. ● स्थानं धर्माङ्गताबोधकं प्रमाणम् । मणि. पृ. १३. ● स्थानं नाम क्रमे प्रमाणम् । याज्ञ. पृ. ८.

● स्थानं निरूप्यते । सादेश्यं ( समानदेशत्वं ) स्थानम् । तच्च द्विविधं अनुष्ठानसादेश्यं पाठसादेश्यं चेति । पाठसादेश्यं द्विविधं यथाक्रमपाठः संनिधिपाठश्चेति । पशुधर्माणां अग्नीषोमीयपश्वङ्गत्वं अनुष्ठानसादेश्यात् । तथाहि, ' यो दीक्षितो यदग्नीषोमीयं पशुमालभेत ' इति क्रयसंनिधौ आम्नातस्य अग्नीषोमीयपशोः ' स एष द्विदेवत्यः पशुरौपवसथ्येऽहनि आलब्धव्यः ' इति वचनात् औपवसथ्ये अहनि अनुष्ठानम् । तद्दिने एव च पशुधर्माः श्रूयन्ते । अतस्ते अनुष्ठानसादेश्यात् पश्वङ्गम् । ज्योतिष्टोममहाप्रकरणे पाठेऽपि पशुधर्माणां सोमक्रयवत् ज्योतिष्टोमाङ्गत्वायोग्यत्वात् तदनङ्गत्वम् । अत एव आनर्थक्यतदङ्गन्यायेन ज्योतिष्टोमाङ्गपर्यवसानत्व प्रसक्तावपि स्थानेन उपसंहारन्यायेन ( ३।१।१९ ) अग्नीषोमीयमात्राङ्गत्वं पश्वन्तरे तु अतिदेशादेव तेषां प्राप्तिः इति सिद्धान्तः । ' इन्द्राग्नी रोचना दिवः ' इत्यादीनां क्रमाम्नातानां याज्यानुवाक्यानां ' ऐन्द्राग्नमेकादशकपालं निर्वपेत् ' ' वैश्वानरं द्वादशकपालं निर्वपेत् ' इति क्रमाम्नातेषु अङ्गत्वं यथाक्रमपाठात् । नक्षत्रेष्टिसंनिधिपठितोपहोमानां नक्षत्रेष्ट्यङ्गत्वं संनिधिपाठात्, नक्षत्रेष्टेः साङ्गत्वाङ्गनिराकाङ्क्षत्वेन प्रकरणात् अङ्गत्वायोगात् इति प्राचीनप्रवादः । स्व-स्वबोधकवाक्यान्तरसमानदेशीयत्वसंबन्धेन विधित्सितपदार्थविशिष्टत्वं स्थानं इति निष्कर्षः । उक्तसंबन्धेन तत्पदार्थविशिष्टत्वं तद्विनियोजकत्वम् इति यावत् । एतेन देशसमानत्वं प्राथम्यादिरूपसादृश्यं इत्युक्तौ यथाक्रमपाठप्रदेशेऽपि अभिन्नदेशतायाः उपहोमाङ्गताप्रमाणभूतायाम् अव्याप्तिः । ' अभिन्न ' इत्युक्तौ तु सदृशदेशभूतायां यथाक्रमपाठरूपायाम् अव्याप्तिः इति निरस्तम् । अन्यतमत्वादिना सम्बन्धानुगमसंभवेन संबन्धाननुगमस्य अदोषतया उक्तनिरुक्तौ अव्याप्त्यसंभवात् । यथाक्रमपाठस्थले याज्यामन्त्राणां ऐन्द्राग्नादिषु, सान्नाय्यसंनिधिपठितस्य ' शुन्धध्वं दैव्याय कर्मणे ' इति मन्त्रस्य सान्नाय्ये च स्वबोधकवाक्यसमानदेशीयत्वसंबन्धेन वैशिष्ट्याभावात् अव्याप्तिः, अतः स्वेति । उपहोमबोधकवाक्यसमानदेशीयत्वसंबन्धेन उपहोमवैशिष्ट्यस्य वारणाय स्वबोधकवाक्येति । न च विकृत्युपहोमयोः एकदेशानुष्ठेयत्वेन स्वसमानदेशीयत्वसंबन्धेन उपहोमवैशिष्ट्यस्य विकृतौ सत्त्वोपपत्तौ स्वबोधकवाक्यसमानदेशीयत्वस्य अप्रवेशेऽपि अदोषः इति वाच्यम् । विकृत्युपहोमयोः अङ्गाङ्गिभावानवगतौ उपहोमानां विश्वजिन्न्यायेन फलार्थत्वापत्त्या भिन्नदेशानुष्ठेयत्वापत्तेः, तयोरेकदेशानुष्ठेयत्वस्य अङ्गताबोधोत्तरकालीनत्वेन अङ्गत्वप्रमाणत्वानुपपत्तेः । उपहोमबोधकवाक्यसमानदेशीयत्वस्यैव अङ्गत्वप्रमाणत्वावश्यकत्वेन समग्रत्वात् । उक्तदेशीयत्वं च उक्तदेशवृत्तित्वम् । तच्च अनुष्ठेयत्वपठितत्वान्यतरसंबन्धेन । तेन पशुधर्मबोधकवाक्यसमानदेशानुष्ठेयत्वस्य, उपहोमबोधकवाक्यसमानदेशपठितत्वस्य च संग्रहः । एतत्संबन्धेन समिदादिवैशिष्ट्यस्य न तथात्वादौ सत्त्वेऽपि यथामाणरीत्या प्रकरणप्राबल्यात् दर्शपूर्णमासाङ्गत्वस्यैव अवगतेः न समिदादेः तदङ्गत्वम् ।

नव्यास्तु इतिकर्तव्यतात्वेन अयोग्यसंबन्धयोः वाक्यार्थयोः संनिधिः क्रमः । इतिकर्तव्यतात्वेन अयोग्यत्वं च द्वेधा । क्वचित् तदाकाङ्क्षाविरहात् यथा विकृतौ, क्वचिद्व्यापारात्मकत्वात् यथा अनुमन्त्रणजपादि-

मन्त्रादौ । एकवाक्योपात्तव्रीहियागादिसंनिधेरपि क्रमत्वापत्तेः वाक्यार्थेत्युक्तम् । प्रयाजाद्यङ्गवाक्यप्रधानवाक्यार्थयोः संनिधौ स्थानत्वापत्तिनिरासाय आद्यं विशेषणम् । वाक्यार्थसंनिधेरुत्तरत्वात् नानुष्ठानसादेश्यसंग्रह इत्याहुः ( भाट्ट. ३।३।५ ) । अत्र उपहोमवाक्यार्थस्य व्यापाररूपत्वेन इतिकर्तव्यतात्वेन अन्वययोग्यत्वात्, अन्यथा उत्पत्त्येतिकर्तव्यताऽऽकाङ्क्षयाऽपि तदन्वयानापत्तेः तत्संनिधौ अन्वाते , संनिधिपाठयथाक्रमपाठस्थलीयसंनिधित्वानिवृत्तेः , व्रीहियागसंनिधेः प्रयाजादिवाक्यप्रधानवाक्यार्थसंनिधेश्च सत्त्वेऽपि ' प्रधानेन व्यपदेशा भवन्ति ' इति न्यायेन तदङ्गाङ्गिभावस्य श्रौतप्राकरणिकत्वव्यवहारोपपत्तेः तद्वारकविशेषणद्वयवैयर्थ्यापातश्च एतदुपेक्षितम् । केचित्तु देशसामान्य इत्यस्य प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वमित्यर्थः । अतः सामान्यपदेन प्राथम्यादिसादृश्यविवक्षाया अभिन्नदेशत्वासंग्रहः , अभेदविवक्षायां सदृशदेशत्वासंग्रहः इति दूषणमनवकाश इत्याहुः ( भाट्टालंकारः पृ. ११९ ) । तन्न, देशे प्रधानविपरिवृत्तिवैशिष्ट्यानिवृत्तेः , उपहोमदेशे दर्शपूर्णमासविपरिवृत्तेरपि स्मृत्याद्यात्मिकायाः कदाचित् सत्त्वात् उपहोमानां तदङ्गत्वापत्तेश्च । न च शास्त्रीयत्वं विपरिवृत्तौ विशेषणं अतो नोक्तदोष , दर्शपूर्णमासशास्त्रस्मृतिजन्यायाः शास्त्रीयदर्शपूर्णमासविपरिवृत्तेरपि तत्र सत्त्वात् । न च प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वं स्वविनियोजकत्वम् । दर्शपूर्णमासयोः उपहोमप्रधानत्वाभावात् न दोषः इति वाच्यम् । अङ्गत्वज्ञानजनकप्रमाशरीरे अङ्गतानिरूपकत्वरूपप्राधान्यनिवेशे अन्योन्याश्रयप्रसङ्गात् । अतः अस्मदुक्त एव सादेश्यनिष्कर्षो गरीयान् ।

अयं च द्विविधोऽपि क्रमः प्रत्येकं उभयाकाङ्क्षया अन्यतराकाङ्क्षया च विनियोजक , इत्यतः षड्विधः । तत्र प्रधानस्य विकृतित्वे अनुष्ठानसादेश्यस्य अन्यतराकाङ्क्षया विनियोजकत्वं यथा उत्पत्त्युधर्मस्थलीयानुष्ठानसादेश्यस्य कर्मोपकारप्राकृताङ्गनिराकाङ्क्षतया प्रधानस्य आकाङ्क्षाऽभावात् । प्रधानस्य प्रकृत्यनिरूपकदर्विहोमादिरूपत्वे तु अनुष्ठानसादेश्यस्य उभयाकाङ्क्षया विनियोजकत्वम् , एवं ऐन्द्राग्नादिविकृतिक्रमपठितमन्त्राणां अन्यतराकाङ्क्षासहकृतयथाक्रमपाठात् तदङ्गत्वम् । यद्यपि याज्याऽनुवाक्यामन्त्राणां लिङ्गविनियोज्यत्वेन यथाक्रमपाठस्य तत्र अपूर्वविशेषसाधनत्वबोधकत्वमेव, न तद्विनियोजकत्वम् , तथापि विकृतिक्रमपठितलिङ्गाविनियोज्यजपादिमन्त्राणां यथापाठक्रम एव अन्यतराकाङ्क्षासहकारेण विनियोजकः अन्वेषणीय । अत एव दर्विहोमाद्यङ्गभूतजपादिमन्त्राणां यथाक्रमपाठ एव उभयाकाङ्क्षया विनियोजकोदाहरणम् । एवं उपहोमीयविकृतिसंनिधिपाठः अन्यतराकाङ्क्षासहकृत तदुदाहरणम् । शुन्धनमन्त्रस्य सान्नाय्यपात्रप्रोक्षणे लिङ्गादेव विनियोगात् तस्य सान्नाय्यसंनिधिपाठः साक्षाद्विनियोजकोऽपि अपूर्वविशेषसाधनत्वोपस्थापकत्वेन विनियोगप्रयोजकत्वात् उभयाकाङ्क्षासहकृतसंनिध्युदाहरणम् । नहि अन्यदत्र उदाहरणं संभवति । प्रकृतित्वानिरूपकप्रधानसंनिधिपठितारादुपकारकस्य प्रकरणविनियोज्यत्वात् । अत्र अन्यतराकाङ्क्षासहकृतक्रमस्य इतिकर्तव्यताऽऽकाङ्क्षोत्थापकतया प्रकरणात् दुर्बलत्वं स्पष्टम् । उभयाकाङ्क्षासहकृतयथाक्रमपाठानुष्ठानसादेश्ययोः विधिसंनिधिघटितप्रकरणात् दुर्बलत्वमपि । एवं विनियोजकप्रकरणसहकृतपाठसंनिधेस्तु स्वतः अविनियोजकत्वादपि दुर्बलत्वम् । प्रकरणापेक्षया क्रमस्य दुर्बलत्वादेव च इष्टिपशुसोमयागात्मकराजसूयान्तर्गताभिषेचनीयसंनिधिसमाम्नातदेवनादीनां अन्यतराकाङ्क्षासहकृतसंनिधिपाठात् अभिषेचनीयमात्राङ्गत्वप्रसक्तौ राजसूयमहाप्रकरणात् राजसूयाङ्गत्वं इत्युक्तं बलाबलाधिकरणे । न च राजसूयस्यापि विकृतिसमुदायात्मकत्वेन प्राकृताङ्गैरेव निराकाङ्क्षत्वात् प्रकरणासंभव , प्रत्येकजन्यपरमापूर्वाणां प्राकृताङ्गैः नैराकाङ्क्ष्येऽपि सर्वयागजन्यपरमापूर्वस्य साकाङ्क्षत्वेन तदनुकूलप्रत्येकपरमापूर्वनिष्ठयोग्यताजनकत्वेन प्रकरणप्राप्त्युपपत्तेः । न च सर्वयागजन्यैकपरमापूर्वे मानाभावः, दर्शपूर्णमासयोः समुदितसाधनताश्रवणस्य समुदायापूर्वं

● स्थानापत्तिः षष्ठे प्रमाणम्। मपि पृ. ९३.

● स्थानापत्त्यतिदेशः आनुमानिकवचनातिदेश भेदः। बाल. पृ ११७-११९.

● स्थानापत्तिप्रमाणपञ्चकं भट्टसोमेश्वरेण नामे उक्तं 'प्रत्यक्षविधिना भावे विकारेण विधानतः। स्वधर्मार्थ निषेधानुवादात् तत्कार्यकारिता॥' इति। बाल. पृ. १२६.

स्थानिधर्माणामूह' प्रतिनिधौ॥

धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात्। ९।२।१२।३९॥

भाष्यम्— वाजपेये श्रूयते 'बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति' इति। अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणम्। तत् नीवारेषु भवति न वेति संशयः। तथा 'उद्गीथा वा एतर्हि यज्ञभवन्ति यर्हि पुरुष पदहः उतिष्ठते, न बहु वदेत्, नास्य पृच्छेत्, नास्मै ब्रूयात्। सहिष्णते पदहे मध्यादायेत्, स्तुत वा'—इति मध्यदने पृष्ठदने च पदहधर्मा भवन्ति वा, न भवन्तीति संशयः। तथा राजसूये श्रूयते 'नैर्ऋतं चरुं नखनिभिन्नानां परिस्थुन्ये गृहे' इति। अस्ति प्रकृतावुलूखलमुसलयोः प्रोक्षणम्। प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति। तत्खेषु भवति, न भवतीति संशयः। तथा चातुर्मास्येषु श्रूयते 'परिधौ पशुं नियुञ्जीत' इति। परिधौ यूपधर्मा कर्तव्या न कर्तव्या इति संशयः। तथा 'न गिरा गिरेति ब्रूयाद्यदि गिरा गिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेदिरं कृत्वोद्गेयम्' इति। इरापदे गिरापदधर्मा भवन्ति, न भवन्तीति संशयः। किं तावत् प्राप्तम्? व्रीह्यादिषूक्ता धर्मा, न नीवारादिषु। तस्मात्तेषु न भवेयुरिति। एवं प्राप्ते, ब्रूमः। नीवारादिषु चोदनानुबन्धः स्यात्। भवन्ति हि तेषु स प्रकृतौ धर्मः। प्रकृतौ तावत् अपूर्वप्रयुक्तोऽसौ, न व्रीह्यादिप्रयुक्तः। येनापूर्वस्य निर्वृत्तिः साधनविशेषमात्रेण धर्मो न व्रीह्यादावेव समधिगमितम्। नीवारादयश्च व्रीह्यादिकार्यकारिण इत्यवगम्यते। नीवारस्य तत्र चोदना 'नैवारश्चरुर्भवति' इति। न च नान्येन प्रकारेण नीवारो यागस्योपकरोति यावदिवा तण्डुलनिर्वृत्तिम्। स प्रयोजनार्थतया व्रीह्यर्थे वर्तते इति। तस्मात् व्रीहिधर्मा नीवारे भवेयुरिति।

एव 'पदहेनोपासीत' इति चोदनाया सत्या यदा पदह उत्तिष्ठते, न पदहेनोपास्यते इत्यर्थः। मधुपृष्ठाभ्यामनेनोपासीतेति गम्यते। यस्य भावे यस्य निवृत्तिस्तस्य स्थानेऽवगम्यते। पदहनिवृत्तौ मध्यदनं कुर्वन् पदहार्थं प्रवर्ततीति गम्यते। तस्मात् पदहधर्मो स नियमो वा मध्यदने भवतीति। यागाभावात् तन्निमित्ता ग्रहा न प्रवर्तन्ते। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति ग्रहचमसाभावात्स्तोत्राभावः। स्तुतमनुशंसतीति स्तोत्राभावाच्छस्त्राभावः। सवनाभावात्सवनीया न प्रवर्तन्ते, इत्येवमादि न प्रवर्तते। यानि नियमार्थ प्रवर्तन्ते इति। यज्ञाभ्युदयार्थमित्यम्, नरकपतनाभिति। नान्यथा नरकपतिता भवन्ति। यदि न तैस्तुला विपूयन्ते, तस्मात् सुखविमोचने नता ध्रुवा इति गम्यते। अतश्चोदनानुबन्धधर्म संभवन्ते इति।

तथा 'परिधिर्यूपकार्ये वर्तते' इति विस्पष्टमेव वचनं 'परिधौ पशुं नियुञ्जीत' इति। तस्मात्तद्धर्मकं परिधिं स्यादिति। तथा 'न गिरा गिरेति ब्रूयादेरं कृत्वोद्गेयम्' इति नैतौ द्वावपि विधी वर्ते— प्रतिषेध इरापदं च। तथाहि वाक्यं भिद्येत। न चेरापदमप्रशस्तत्वाद्दूयते। प्रतिषेधे त्वनुवाद संभवति। यदा इरापदं तदा स्थक्तं गिरापदं न भवतीति। एकवाक्यस्य च गम्यते। यस्माद्गिरापदस्याय दोषस्तस्मादिरापदं ब्रूयादिति। भिन्नवाक्यत्वे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात्। 'न आत्मानं गिरेत्' इति दोषो विधीयते। शरीरं गिरितुमसमर्थः। परमात्मप्रदोषः। वाक्यभेदस्तु स्थित एव। तस्माद्गिरापदोच्चारणमिरापदस्य तत्कार्यापत्तिप्रदर्शनार्थं 'न गिरा गिरेति कृत्वोद्गायेत्' इति। तस्माद्गिरापदधर्मा इरापदे भवेयुरिति। सर्वत्र पर्यवसितम्। परिधावनन्तरं कथा वर्णयिष्यते।

पत्तिस्तु कथमवगम्यते इद अस्य प्राकृतस्य कार्ये यतते इत्यवस्यति । तत्प्रदर्शनार्थमिदमधिकरणम् ।

**सोम— सूत्रार्थं** – द्रव्ये नीवारादौ गुणे मध्वशनादौ विकारे च नखावपातादौ व्यतिक्रमे यूपव्यतिक्रम्य नियोजनसाधनतया श्रुते परिध्यादौ प्रतिषेधे गिरापद प्रतिषिध्य विहितेरापदादौ चोदनानुबन्ध चोद्यमानप्रोक्षणादिधर्मसम्बन्ध धर्मस्यार्थकृतत्वात् प्रोक्षणादेः कार्यार्थत्वात् तत्कार्यस्य च नीवारादौ समवायादिति ।

वि–– 'न स्युः स्युर्वाऽत्र नीवारा व्रीहिस्थानेऽमितैर्नहि । विकारतद्धितान्तः स्युः, प्रोक्षणादिरतो भवेत् ॥ मध्वाद्यशनापूतत्वपरिधीरापदेष्वपि । ये धर्माः पडहादीनां ते कार्याः स्थानपातत ॥'

**भाट्ट**— तदेव त्रिविधस्यापि ऊहस्य प्राकृतदेवतादिस्थानापन्न एव वैकृतदेवतादौ प्रसक्तेः स्थानापत्तिरिदानीं निरूप्यते । तत्र मूले तत्कार्यकारित्वरूपा स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्वमुक्तम् । यद्यपि च सर्वत्र विधिरेव स्थानापत्तौ चोक्तम्, तथाऽपि तत्सहकाराणि पञ्चेति पञ्चविधत्वम् । प्रत्यक्षादनुमानात् श्रुतस्वशब्दात् प्रतिषेधानुमितस्वशब्दात् अभावे विध्यनुमितप्रतिनिधिकल्पितस्वशब्दादिति ।

तेषां चोदाहरणानि 'नैवारश्चरु' इति नीवाराणां व्रीहिकार्यकारित्वं प्रत्यक्षात् । न च नैवार इति विकारार्थतद्धितरूपस्वशब्दादेव तदिति शङ्क्यम्, तस्य सम्बन्धसामान्यवाचित्वेनाप्युपपत्तौ चरौ नीवारविकृतित्वस्य प्रत्यक्षाधीनत्वात् । तथा 'नखावपूतश्चरुर्भवति' इत्यत्र नखानामुलूखलमुसलस्थानापन्नत्वमनुमानात्–– नखानां हि आवपनमेव प्रत्यक्षेण कार्यमवधार्यते उलूखलमुसलयोश्चावघात । आवपनावघातयोश्चैकवितुषीभावकार्यत्वात् तत्साधनयोरप्येकवितुषीभावप्रयोजनकत्वमनुमेयमेव । तथा पाशुकचातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति श्रुतस्य परिधेः यूपकार्यकारित्वं श्रुतस्वशब्दादेव । न पशुमात्रनियोजनार्थतयाऽपि, विशिष्टनियोजनार्थत्वात् । तथा 'न गिरागिरा' इति गिरेत्यनुवादमन्त्रगत् गिरापदकार्यकारित्वस्वशब्दानुमानेनेरापदस्य गिरापदस्थानापन्नत्वम् । तथा 'संस्थिते पडहे मध्वाशयेत् घृतं वा' इत्यत्र पडहाभावे मध्वशनादिविधिना पडहप्रतिषेधमनुमाय तेन पडहकार्यकारित्वस्वशब्दानुमानेन पडहस्थानापन्नत्वं मध्वशनादेः । इदं न भाष्यकारोक्तमपि कृत्वा चिन्तयोदाहृतमिति मन्तव्यम्, पडहसमाप्त्युत्तरं तदङ्गत्वेनात्र मध्वशनविधानेन पडहाभावे मध्वशनविधौ प्रमाणाभावात् । स्थिरोदाहरणान्तरं मृग्यमित्युक्तम् ।

अत्र प्रतिभाति— न तावत् तत्कार्यकारित्वं तत्स्थानापन्नत्वम् अग्न्याधेयादिकस्य सौर्यादिकरणस्य च स्वर्गाग्न्यादिकार्यकारित्वाभावेन स्थानापत्त्यनापत्तेः । न चेष्टापत्तिः, 'अग्न मुरुः' इत्यादौ यागानुमन्त्रणादौ चोहानापत्तेः । 'सूर्यस्याहं देवयज्यया' इत्यादियागानुमन्त्रणे यज्ञपदे पदान्तरप्रक्षेपरूपभाक्तोहाभावेऽपि यागान्तरपरत्वेन अन्वयाभावात्मकस्य मुख्यस्योहस्य तादवस्थ्यात् । चरुनीवारनखादीनामवान्तरकार्यभेदेन स्थानापत्त्यनापत्तेश्च ।

तथोदाहरणान्यप्ययुक्तानि । तथाहि नीवाराणां चरुविशेषजनकत्वस्यान्वयव्यतिरेकाभ्यामनुमेयत्वेन प्रत्यक्षाविषयत्वात् । न हि साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादिरूपप्रत्यक्षायोग्यपदार्थघटितव्याप्तिघटितजनकत्वस्य लौकिकप्रत्यक्षं संभवति । अलौकिकप्रत्यक्षं तु नखादावपि तुल्यम् । किञ्चैवं नखेष्वप्युलूखलमुसलप्रयोज्यवितुषीभावप्रयोजकत्वस्य प्रत्यक्षत्वापत्तिः । तृतीयोदाहरणेऽपि यद्यपि परिधेः पशुनियोजनसाधनत्वं श्रुतम्, तथाऽपि नियोजनस्य यूपीयत्वं न श्रुतमिति न यूपकार्यकारित्वस्य श्रुतस्वशब्दगम्यता । चतुर्थे तु गिरापदस्याग्निष्टोमस्तोत्रसाधनत्वाभावेन तत्कार्यस्यैवाप्रसिद्धेरर्थाभिधानमात्ररूपकार्यस्य च गीत्यादिधर्मग्राहित्वाभावात् सत्यपि तन्निवर्तकत्वे इरापदस्य नैव तत्कार्यापत्तिरित्युक्तमेव । पञ्चमेऽपि सत्यामपि पडहादिकार्यापत्तौ अभावे विधिनैराकाङ्क्ष्यादिना तदकरणे स्वशब्दमात्रकल्पनया तत्कार्ये मध्वशनादिविध्युपपत्तेः प्रतिषेधानुमानवैयर्थ्यम् ।

* स्थालीपुलाकवत् अग्निष्ठास्वपि इष्टिषु दार्शपौर्णमासिकविध्यन्तस्य सिद्धिः । भा ८।१।४।११

* स्थालीपाकः दर्विहोमो लौकिकः । वि ८।४।१

* स्थालीपाकादीनां स्मार्तानां वैदिकस्य च वास्तुहोमस्य नामधेयं दर्विहोमशब्दः । भा ८।४।१।२-३ मीको पृ २०१८ ' दर्विहोमशब्दः स्मार्तानां० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

ऋ स्थावरजङ्गमविषन्यायः । यथा रजतादिज्ञान तद्बाधज्ञानयोः सर्पज्ञानमादिरूपजङ्गमस्थावरविषयोः क्षेत्रेण पूर्वबाधः प्रसिद्धः, तथा प्रकृतेऽपि । साहस्री २२६

* स्थितिसिद्धान्तापरपर्याया प्रक्रिया मान्या नाम् । सु पृ १३१

ऋ स्थूणानिखननन्यायः । ' स्थूणा स्तम्भेऽपि वेश्मन ' इत्यमरः । अपि च०लोहप्रतिमायामपि । स्थूणा यथाऽसकृत्संचाल्य निखनने क्रियमाणे दृढा भवति तथोत्तरग्रन्थेन प्राग्ग्रन्थादितात्पर्यदार्ढ्यं भवतीत्यर्थः । साहस्री १२

* स्थूणानिखननन्यायः । 'आरभ्य चैव तदर्थवत्' (३।३।८।१३) इत्यनेनोक्तस्य समारम्भकृत्वस्य विनियोगस्य स्थूणानिखननन्यायेन दृढीकरणार्थं पूर्वपक्षं रचयति । सु ३।७ पृ ४०.

* स्थूणानिखननवत् । यदि स एव निर्णयः किमयं आक्षेपः । दाढ्यार्थ, स्थूणानिखननवत् । भा ७।२।१।१ * स्थूणानिखननवत् फलद्वारेण आक्षेपसमाधाने क्रियते दाढ्याय । शाभा ३।४।१।२ अस्. * इहेव (७।२।१) अतिदेशविषयनिर्णयार्थं तत्र (२।१।११।३६) अथ द्रुतमंत्र गीतिवचनत्वं न्यायेन स्थूणानिखननवत् दर्शयिष्यते । सोम ७।२।१.

ऋ स्थूलात्सूक्ष्मं ज्ञायं इति न्यायः । यदा तु महापातकस्य स्थितिरूपसूक्ष्मकालज्ञानं स्यात्तदा स्थूलात् सूक्ष्मं ज्ञायं इति न्यायेन स एव पातमध्यकाले विवाहादिमङ्गलकृत्येषु त्याज्यः, अन्यथा गणितप्रयेषु पातस्थितिकालनयननैयर्थ्यप्रसङ्ग इति निष्कृष्टोऽर्थः इत्युक्तम् । साहस्री ५६०

ऋ स्थूलारुन्धतीन्यायः । स्थूलारुन्धतीनिदर्शनन्यायः । अविद्योपाधिकजीवस्य अहंकारस्तोकि स्थूलारुन्धतीन्यायेन । अद्वैत पृ ५९८ । अत्र लघुचन्द्रिका— यथा अरुन्धतीनिकटस्था स्थूला तारा अरुन्धती इय इत्युच्यते प्रदर्श्यते, सूक्ष्मत्वेन अरुन्धत्या प्रथमतो दर्शनाक्षमत्वात् । पश्चात् नेयं अरुन्धती किंतु इयं निकटस्था सूक्ष्मतारा इत्युक्त्वा अरुन्धतीप्रदर्शनात् पूर्ववाक्यस्य अरुन्धतीज्ञाने तात्पर्यनिश्चयात् प्रदर्शित तारयोः भेदपर्यवसानं तथा इति । * स्थूलारुन्धतीन्यायः । गौस्तिष्ठति, देवदत्तः पचति, इत्यादयः (शब्दाः) शुक्लादिकथा तावत् महद्धेणापि बोधयितुं बोद्धुं चाशक्याः, आनन्त्यात् । अतः प्रकृतिप्रत्ययविभागकल्पनारूपो लघुभूत उपायः समाश्रीयते न्यायवत् । आरोपित एव च तत्र संबन्धः । प्रसिद्धो हि स्थूलारुन्धती–शाखाचन्द्रादिन्यायो लोके, पञ्चकोशात्मकरणन्यायश्चोत्तरमीमांसायाम् । शब्दकौस्तुभ स्फोट * स्थूलारुन्धतीन्यायः । यथा अरुन्धतीनिदर्शने बह्वीष्वपि तारासु अमुख्यासु अरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैव अरुन्धती भवति इति । शाभा १।१।१२ अस्.

* स्नातकः । ' गुरुगेहादनावृत्तः स्नातको हि न कथ्यते । ' श्रोवा १।१।१।१०४

* स्नाति इति स्नानस्य ' मेध्य एव मेधमुपैति ' इति फलश्रुतिः फलार्थवादः न तु फलविधिः ज्योतिष्टोमे । भा ४।३।१।१-३

* ' स्नात्वा उप्त्वा कक्षश्मश्रूणि अरणी समारोप्य निर्मथ्योदवसाय ' । अनेन पशोः संवत्सरकालत्वमुक्तम् । सर्वपं ३।२।२७

* स्नानं ' अस्नाताशी मलं भुङ्क्ते ' इति भोजनादिपूर्वभावि नियतम् । सु पृ १४६४ * स्नानं ज्योतिष्टोमे यजमानसंस्कारः । भा ३।८।२।१-८, * स्नानं ज्योतिष्टोमे संस्कारः न फलप्रयुक्तं, तत्र

फलश्रुतिरर्थवादः । तच्च क्रत्वर्थं यजमानार्थम् । भा. ४।३।१।१–४. ❀ स्नानं मलापकर्षणार्थम् । वा ३।४।५।१४. ❀ स्नानस्य मलापकर्षणाख्यपुरुषोपकारसामर्थ्यात्मकेन लिङ्गेन पुरुषार्थत्वम् । सु. पृ. १४६४.

❀ स्नानीयम् । यथा स्नानार्थं यत् तत् स्नानीयम्, तथा यत् दीक्षार्थं तत् दीक्षणीयम् । भा. ५।३।११।३१.

❀ स्निग्धस्नेहनम । न हि स्निग्धस्य स्नेहनं शक्यं कर्तुं पिष्टस्य वा पेषणम् । भा.९।२।२।३.

⌛ स्नेहदीपन्यायः । स्नेहाऽभावे जाते दीपनिवृत्तिः । साहस्री. ३७७.

❀ स्पर्शः । शीतोष्णस्पर्शौ आप्यतैजसावेव न वायवीयौ । ऋजु पृ. २५३. ❀ स्पर्शे लौकिके यूपस्य पुरुषार्थं प्रायश्चित्तम् । भा.९।३।३।९.

❀ स्पर्शमात्रविधिः 'वत्समालभेत' इति अग्निहोत्रे दोहाधिकारे । वि. २।२।६.

❀ स्पर्शवतां परस्परदेशप्रतिबन्धात् देशान्तरव्याप्त्या विकासो घटते । वा. २।१।२।५ पृ ४०३.

❀ मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनं च अनाचारः उदीच्यानां दाक्षिणात्यानां च । वा. १।३।३।७.

❀ स्फटिकः उपरागोपधानेन पद्मरागविशेषात् सौगन्धिकात् भेदेन न गृह्यते, उपरागापगमे तु गृह्यते । ऋजु. पृ. २०६.

⌛ स्फटिकलौहित्यन्यायः । यथा स्फटिके जपापुष्पादिसन्निधिकृतलौहित्यस्य तन्निवृत्तौ निवृत्तिः, तथाऽऽत्मेत्युपाधिनाशस्य जीवस्य तद्भावापत्तिश्च इति । साहस्री. ३५१.

⌛ स्फुलिङ्गन्यायः । मन्थनानन्तरं जातस्याग्नेः अभिमन्त्रणात् पूर्वमनुगमने स्फुलिङ्गन्यायेन वमनादत्य पुनर्मन्थनम् । ( स्फुलिङ्गमात्रस्य नाशे यथा न किंचिद्विचार्यते तद्वत् ) । के. ( हिरण्यकेशिप्रायश्चित्तविवरणम्–गणेशसोमयाजी ) ।

❀ 'स्फोटगोशब्दताद्भावप्रभृतौ पदकल्पना । गकारादिपदव्याख्याद्वारेणैव निराकृता ॥' वा. १।३।८।२४ पृ. २७२ । 'स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते । असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥ वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः । नामाख्यातादिसंस्कार्यं तेषां शशविषाणवत् ॥' पृ. २७३.

❀ स्फोटवादः । भा– अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः । श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः । ते च श्रोत्रग्रहणाः । यद्येवं अर्थप्रत्ययो नोपपद्यते । कथम् ? एकैकाक्षरविज्ञाने अर्थो नोपलभ्यते । न च अक्षरव्यतिरिक्तः अन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्तिः स्यात् । यदा गकारो न तदा औकारविसर्जनीयौ, यदा औकारविसर्जनीयौ न तदा गकारः । अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात् । अन्तर्हिते शब्दे स्मरणात् अर्थप्रतिपत्तिश्चेत्, न, स्मृतेरपि क्षणिकत्वात् अक्षरैस्तुल्यता । ( सिद्धान्तमाह– ) पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इत्यदोषः ।

नन्वेवं शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनं अनुपपन्नं स्यात् । उच्यते । यदि नोपपद्यते, अनुपपन्नं नाम । नहि लौकिकं वचनं अनुपपन्नं इत्येतावता प्रत्यक्षादिभिः अनवगम्यमानोऽर्थः शक्नोति उपगन्तुम् । लौकिकानि वचनानि उपपन्नार्थानि अनुपपन्नार्थानि च दृश्यन्ते । यथा 'देवदत्त गामभ्याज' इत्येवमादीनि, 'दश दाडिमानि, षडपूपाः' इत्येवमादीनि च । ननु च शास्त्रकारा अप्येवमाहुः 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचति इति उपक्रमप्रभृति अपवर्गपर्यन्तं' ( नि. १।१ ) इति यथा । न शास्त्रकारवचनमपि अलं इमं अर्थं अप्रमाणकं उपपादयितुम् । अपि च नैव एतदनुपपन्नार्थम्, अक्षरेभ्यः संस्काराः, संस्कारात् अर्थप्रतिपत्तिः इति समवानि अर्थप्रतिपत्तौ अक्षराणि निमित्तम् । ( ननु– ) गौण एव अर्थप्रतिपत्तौ शब्द इति चेत्, न गौणः अक्षरेषु निक्षिपमाणः, तद्भावे

● स्मृत्यपेक्षया श्रुतिः प्रबला। १।३।२।३-४ मीको पृ ३९५४ 'विरोधाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

■ स्मृत्याचारयोर्बलाबलम् ॥ (वार्तिककारमतेन)।

[ तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात्। १।३।४।८ ॥ शास्त्रस्था वा तन्निमित्तत्वात्। ९ ॥ ]

अथवा स्मृत्याचारविरोधविषयम् एतदधिकरणम्। अत्र पूर्वाधिकरणेऽभिसंधिः। यथा हि मन्वादिस्मृतीनां श्रुतिमूलत्वं तथा सदाचाराणामपि श्रुतिमूलत्वं निरूपितमेव। तत्र स्मृतिविरुद्धानामपि अदृश्यमानलोभादिमूलानां वेदव्यवहारिभिरेव आचर्यमाणत्वेन सदाचारत्वाविशेषात् 'असति ह्यनुमानं स्यात्' (१।३।१।२) इत्यनेन न्यायेन स्मृतिविरोधेऽपि वेदविरोधाभावेन विप्रतिपत्तेः समत्वात् सदाचारस्य वेदमूलत्वमेव। अथवा आचारस्यैव बलीयस्त्वम्। स हि श्रुत्यनुमाने लिङ्गभूतः प्रत्यक्षेणैवावगम्यते। स्मृतिः पुनः मनुवचनादनुमिता श्रुतिमनुमापयति इति विप्रकर्षात् दुर्बला। येषामपि मनुवचनमेव श्रुत्यनुमाने लिङ्गम्, तेषामपि वक्तृज्ञानानुमानद्वारेण श्रुत्यनुमानम् इति विप्रकृष्टत्वमेव स्मृतेः, आचारात् इति। तदुक्तं 'यावद् विस्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते। तावद् बुध्यात्मकं पूर्वमाचारः प्रतितिष्ठति ॥ प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम्। तेनाचारबलीयस्त्वमस्मरेह युज्यते ॥' इति। ('यावद्धि स्मरणं दृष्ट्वा' इति वार्तिकमूले पाठः। स एव च युक्तः। वा पृ २२०)। एवं प्राप्ते, अभिधीयते। सत्यमेव यदि स्मृत्याचारयोः तुल्यरूपता भवेत्। किंतु स्मृतिः प्रत्यक्षश्रुतानन्तरमन्वादिस्मर्तृणां लोपनिरपेक्षा च अनपभ्रंशिता वेदमेव मूलभूतं कल्पयति इति युक्तम्। आचारस्य ■ वेदव्यवहारिभिः प्रमत्तया प्रयुक्तस्यापि बाल्यविरोधात् न्यायाभासादिमूलतया च व्यभिचाराद्व्याख्यया न स्मृतिविरोधे प्रामाण्यम्। दृश्यन्ते च अद्यत्वेऽपि वेदव्यवहारिणामेव धर्मबाधे अनाचाराः स्मृतिविरुद्धाः। यथा दाक्षिणात्यब्राह्मणीनाम् अनुमरणम्। तथा च स्मरन्ति- 'मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्। इतरेषां तु वर्णानां स्त्रीधर्मोऽयं व्यवस्थितः ॥' इति। न च स्मृतेः मनुवचनानुमितायाः अनन्यथात्वेन आचारस्यैव बलवत्त्वम् इति वक्तव्यम्। यतः स्मृतेः साक्षादेव श्रुत्यनुमानम्। आचारस्य तु अस्मर्यमाणस्य अनाचरणीयत्वात् तद्विषयं तावत् आचरितृस्मरणम्। ततश्च अपरापरपूर्वपूर्वभाविनानाविधाचरितृस्मृत्यनुमानपरंपरया मन्वादिस्मृत्यनुमानम्, ततश्च श्रुत्यनुमानम् इति बहुतरविप्रकर्षात् न तुल्यबलत्वं नतरां आचारबलीयस्त्वमिति। तदुक्तं- 'आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पना। तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ॥' इति (वा पृ २२०। 'श्रुतिर्निश्चायते ततः' इति द्वितीयचरणपाठः आनन्दाश्रमीये)। न च मन्वादिस्मृतेरिव आचरितृस्मृतेरपि साक्षादेव श्रुतिमूलत्वम्, मन्वादयो हि महर्षयः प्रकृष्टज्ञानतया विप्रकीर्णनानाशाखागतां तत्तदाचारमूलभूतां श्रुतिमनुसृत्य स्मृत्वा स्वनिबन्धने प्रतिपादयन्ति इति युक्तम्, न ■ आचरितारः सर्वे नानादेशशाखाऽनुसरणक्षमाः। किंतु मन्वादिमहर्षिसंकलितमर्थं पूर्वपूर्वाचरितृपरंपराऽवधानमवगम्य स्मृत्वा आचरन्ति इति संभवति। तेन यत् पूर्वाधिकरणे शिष्टाचारस्य श्रुतिमूलत्वेन प्रामाण्यमभिहितम्, तत् मन्वादिस्मृत्यविरुद्धस्यैव इति एतदधिकरणतात्पर्यम्। तेन न वक्तव्यं 'व्यभिचाराददृष्टाचारस्य क्वचिदपि न प्रामाण्यम्' इति, एवंभूताचारस्य अव्यभिचारादिति। प्रयोजनं- पूर्वपक्षे स्मृतिविरोधेऽपि यथाचारमनुष्ठानं कर्तव्यम्। सिद्धान्ते तु न कर्तव्यमिति। सूत्रं तु- शास्त्रस्था ये मन्वादयः तेषामेव स्मरणं बलवत् तन्निमित्तत्वादेव शिष्टाचारस्येति। तौभा १।३।५

प्रणीता हि स्मृतिः सोपनिबन्धना । तस्मात्तेन बलीयस्त्वमाचारान्निर्निबन्धनात् ॥' ( निबन्धन-शून्यतो विप्रकीर्णत्वं - परम्परागतत्व-सिद्धत्वविदेश-कल्पत्वादिना विरोधित्वात् विधीनुपसंहृत्य तदनिपात्य कर्मणां कर्मत्वकल्पनम् । सोम ) । प्रत्ययितरा हि मन्वादयः स्मर्तारः । तस्मात्तत्र गुणवत्तरकर्तृकत्वात् इतरजनचारिभ्यः विस्रम्भणीयतरम् । इति न्याय्यमेतत् । अपि च आचरितृणां जनानां स्वपतितमतो विप्रकीर्णं परम्परागतादिगतश्रुत्युद्धरणेन अर्थं प्रतिपत्तुमसामर्थ्यात् अवश्यमेते महर्षिभिरेव ज्ञाता स्मृता समर्पितमर्थं अनुतिष्ठन्ति इत्यङ्गीकार्यम् । अतश्च आचारस्य स्मृतिकल्पनेन श्रुतिकल्पनस्य इति व्यवहितप्रामाण्यात् दुर्बलत्वम् । अपि च आचारेषु कर्मस्वरूपमात्रमेव प्रत्यक्षम्, कर्तव्यता तु विमर्शपूर्वकं अर्थमुखादिहेत्वन्तराभावनिरूपणेन पारिशेष्यात् कल्पयितव्या । सा च कल्पिता पश्चात् मूलकल्पना इति विप्रकर्षः । सनिबन्धनासु तु स्मृतिषु प्रागेव प्रथमं कर्तव्यता गम्यते, मूलमात्रं तु कल्प्यं इति संनिकर्षः । सर्वेषां च स्मृतिविरुद्धाचाराणां मातुलदुहितृपरिणयनादिविषयाणां क्षमादिहेत्वन्तरं स्पष्टमेव दृश्यते इति न कथंचिदपि श्रुतिमूलत्वं समाश्वनीयम् । न चात्र विकल्पाभ्युपगमेन उभयोरपि प्रामाण्यं संभवति, वस्तुनि विकल्पासंभवात् । न हि मातुलदुहितृपरिणयनात् प्रत्यवायश्चो त्पत्तिरनुत्पत्तिश्च संभवति इत्यवश्यं अन्यतरस्याप्रामाण्यमाश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्य आचारस्य अप्रामाण्यं इति सिद्धं पयत्रादीयकानां दुराचारत्वम् । १।३।४ पृ ३३-३४

वि— ' या मातुलविवाहादौ शिष्टाचारः स मा न वा ।, इतराचारतमात्त्र - प्रमात्वं स्मार्तबाधनात् ॥ स्मृतिमूलो हि सर्वत्र शिष्टाचारस्तथोऽत्र च । अनुमेया स्मृतिः, स्मृत्या बाध्या प्रत्यक्षया तु सा ॥ '

भाट्ट— यत्र मातुलदुहितृपरिणयादौ स्मृत्याचारयो विरोध स्तोऽपयोरपि श्रुतिमूलत्वात् तुल्यत्वम् । इति प्राप्ते, स्मृतीनां प्रत्यक्षश्रुतिमूलत्वात् स्मृतीनां कर्तव्यताविषयविधिप्रत्ययश्रवणाच्च बलीयस्त्वम् । आचारेषु तु आचरितृणां जनानां मन्वाद्यपेक्षया तथा प्रत्ययितत्वाभावात् इतस्ततो विप्रकीर्णशाखाध्ययनादिगतश्रुत्यवगमस्याशक्यत्वात्, परकीयाचारमात्रदर्शनेन कर्तव्यताविधिप्रत्ययस्य अवश्यकल्पनीयत्वाच्च दौर्बल्यम् । अत एव इदानींतनाचारदर्शनेन श्रुतिवत् स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा स्मृतिकल्पनम्, स्मृतीनां तु साक्षादेव इति विशेषः । अतश्च स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शनं स्मृतिदर्शनं वा अननुष्ठानम् ।

मण्डन— कुमारिलमतेन अत्राधिकरणे स्मृतिसदाचारयोः प्रामाण्यतारतम्यं विचारितम् । उभयोरपि वेदमूलत्वात् तुल्यमेव प्रामाण्यमिति पूर्वपक्षे, स्मृतेः साक्षात् वेदमूलत्वात् सदाचारस्य च स्मृतिद्वारैव वेदमूलत्वकल्पनासंभवात् स्मृतेरेव बलवत्तरं प्रामाण्यमिति सिद्धान्तः ।

शबर— ' स्मृत्याऽऽचारस्य बाधः स्यात् ।'

● स्मृत्यादिकल्पस्य प्रतिषेधः द्विविधः, क्रत्वर्थः पुरुषार्थश्च । क्रत्वर्थोऽपि द्विविधः, पुरुषार्थमात्रविषयकः क्रतुमात्रविषयकश्चेति । बाल पृ ११, ● स्मृत्यादिकल्पस्य प्रतिषेधः पुनर्द्विविधः, अदृष्टार्थः दृष्टार्थश्चेति । पृ ३१

● स्मृतिकल्पस्य प्रतिषेधो यथा- सगोत्रा न परिणेया । बाल पृ २९

● स्मृतिग्रन्थेऽपि आम्नायशब्दप्रयोगः । वा १।३।३।७ पृ २११

● स्मृतिज्ञानं बाह्यं वस्तु न गृह्णाति, असदुपाख्यमासितत्वात्, बाह्यस्य च स्फुटत्वाभावात् । न च ग्राहकसामग्रीभेदेन स्फुटास्फुटाभासभेदः, वह्निभेदवत् । अतो बाह्यभासाभावेऽपि तद्व्यवसायिना उपजायमानं तदालम्बनमिव भाति स्मृतिज्ञानम् । इति बौद्धाः । ऋजु पृ ४१

● स्मृतित श्रुतेर्नीचत्वम् । भा १२।१।७।१३

● स्मृतित्वं ज्ञातविषयकज्ञानत्वम्, संस्कारजन्यज्ञानत्वं वा। मणि. पृ. १२.

● स्मृतित्वानुभवत्वयोः विरुद्धयोः एकज्ञानवृत्तित्वं न संभवति। मणि. पृ. ३०.

● स्मृतिपादः प्रथमाध्यायस्य तृतीयः, आचारोऽपि अत्रैव। 'विपर्ययवादस्मृतयो नाम चेति चतुर्विधम्। प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्॥' वि. प्रस्तावना श्लोकः १२. ● स्मृतिपादे (१।३) स्मृतिमूलविचारः प्रकरणार्थः। तथाहि, 'स्मृतीनां श्रुतिमूलत्वं, विरोधे भ्रान्तिमूलता। उक्तोपनीतस्मृत्यादावविरोधं निरूप्य च॥ आर्यैर्विरोधे म्लेच्छानां शब्दार्थविषयस्मृतेः। भ्रान्तिर्मूलमथान्येऽत्र विवादो लोकमूलता॥ मूलापेक्ष च कल्पादेरप्यनस्थितगोचरम्। होलाकादिस्मृतेर्मूलमुक्तं शब्दस्मृतेरपि॥' इति। सु. पृ. २७०.

● स्मृतिप्रणेतॄणां त्रैवर्णिकत्वं कल्प्यते वैदिकपदार्थकर्तृभिस्त्रैवर्णिकैः, स्मार्तानां पदार्थानां क्रियमाणत्वात् तेषां च अत्रैवर्णिकोक्तपदार्थानुष्ठातृत्वस्याभावदर्शनात्। सु. पृ. १९५.

● स्मृतिप्रामाण्यं तर्कैर्न्नूहितशिष्टत्रैवर्णिकदृढपरिग्रहान्यथानुपपत्तिप्रसूतया अर्थापत्त्या वेदमूलत्वकल्पनेन साधितम्। सु. पृ. १२४, ● स्मृतिप्रामाण्ये विचिकित्सा न कार्या 'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥' इति निषिद्धत्वात्। पृ. १३६.

● स्मृतिप्रामाण्यहेतुः शिष्टत्रैवर्णिकपरिग्रहादरः। सु. पृ. १७०.

● स्मृतिवचनेन न श्रुतिवचनं युक्तं बाधितुम्। भा. ६।१।४।१७. ● स्मृतिवचनेन बन्यत्वपदार्थाश्रयेण, दुर्बलत्वाश्रयं वेदवाक्यं बाध्यते 'क्षुते आचामेत्' 'वेदं कृत्वा वेदिं करोति' इति। बाल. पृ. १४०.

● स्मृतिविरुद्धानां मातुलसुतापरिणयादीनामननुष्ठानप्रतिपादनम्। भाट्ट. १।३।८ वर्णके २.

● स्मृतिविहितेषु नियमादिषु उपनीतस्याधिकारो नानुपनीतस्य। वि. ६।२।६.

● स्मृतिशब्दस्य धर्मशास्त्रेष्वेव प्रसिद्धिः। सु. पृ. १२१.

● स्मृतिहेतोः संस्कारस्य सर्वनानुच्छेदः। वा. ३।१।७।१४ पृ. ८९९.

卐 स्याच्छ्रुतिलक्षणे नियतत्वात्। ६।३।१५।३३॥

'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति यत्र प्रतिनिधिः श्रुतः, तत्र प्रतिनिधेरपचारे प्रतिनिधिसदृशस्य उपादानं कर्तव्यं इति पूर्वपक्षी आह। श्रुतिलक्षणे श्रुतिर्लक्षणं प्रमाणं यस्य तादृशे पूतीकद्रव्ये विनष्टे सति प्रतिनिधेः प्रतिनिधिः स्यात्। नियतत्वात् पूतीकानां तत्सदृशमेव द्रव्यमुपादेयं स्यात् न सोमसदृशम्। तस्मात् अत्र प्रतिनिधौ प्रतिनिधिः इति पूर्वः पक्षः।

'स्याच्छ्रुतिलक्षणे' इत्येतावदेव सूत्रं कुतूहले। अनुवृत्त्या तु अर्थपूरणं भवति।

न तदीप्सा हि। ३४॥

सोमापचारे श्रुतिविहिताः पूतीका ग्राह्याः। अथ पूतीकापचारे पूतीकसदृशः प्रतिनिधिः नोपादेयः। हि यस्मात् पूतीकविधिनाऽपि तदीप्सा सोमावयवानामेव कतिपयानामपि ईप्सा आप्तुमिच्छा प्रदर्शिता। तथा च पूतीकापचारे पुनः सोमसदृशमेव पूतीकभिन्नं द्रव्यमपेक्षणीयम्। इति सिद्धान्तः। के.

卐 स्युर्वा होतृकामाः। १०।२।२२।५६॥

होतृकामाः पठिताः प्रश्ने 'यं कामयेतापशुमान् स्यादिति पराचीं तस्येडामुपह्वयेत, अपशुमानेव भवति' 'यं कामयेत वर्षीयान् स्यादिति उत्तरेणास्य पाऽव्याया वषट् कुर्यात्' इत्यादयः। एते होतृकामाः अस्थियज्ञे स्युर्न वा इति विचारे 'स्युः होतृकामाः'

पशुव्याधुमांसेषु नित्य एव संमार्गः पूर्वपक्षे, सिद्धान्ते तु सर्वोः, संस्कारस्य प्रतिप्रधानावर्तित्वात् । वा. २।१।४।१२ पृ ४१९.

● स्रुवः अव्यभिचरितक्रतुसम्बन्धम्। वि. ३।६।१. ● स्रुवः खादिरः, अत्र फलश्रुतिः अर्थवादः न फलप्रयुक्तता, क्रत्वर्थः सः । भा. ४।३।१।१-४. ● स्रुवः खादिरः अनारभ्यविहितः प्रकृतौ निविशते, विकृतौ तु चोदकात्। वि. ४।३।१,● स्रुवः द्रव्यदानधारणे करणम्, सामर्थ्यात् । ३।४।२०. ● 'स्रुवेणावद्यति, स्रुवेणाधारमाघारयति, स्रुवेण पार्वणौ जुहोति'। वा. ३।६।१।१. ● 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति । अत्र आज्य-मांस-पुरोडाशेषु हविःषु स्रुवादयः अवदानहेतवो नियताः । शबिरद्य नियामिका । 'अञ्जलिना सक्तून् प्रदाव्ये जुहुयात्' अत्राञ्जलि, न नमस्कारकालिक इव भाव, अथकेः किंतु सक्तुग्रहणसाधनतया प्रवृत्तोऽञ्जलिर्माह्य. । वि. १।४।२०. ● 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति श्रूयते । तत्र संदेहः किं स्रुवेणावदानं सर्वस्य द्रवस्य संहतस्य मांसस्य च । तथा स्वधितिना, हस्तेन च उत सर्वेषामर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेनेति । तत्र अर्थतो व्यवस्था इति सिद्धान्तः । भा. १।४।१८।२५. ● स्रुवेण दीक्षाहुतयो हूयन्ते । वि. १०।३।४.

● स्रुवाधिकरणम् ( स्रुवादिरत्वविधिः प्रकृतिगामी ) । ३।६।१।१-८. मीको. पृ. ३७३ 'अनारभ्याधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । ● स्रुवाधिकरणे ( ३।६।१।१-८ ) वाक्यदोषवत् सामर्थ्यस्यापि संदिग्धनिर्णायकत्वेन धर्मप्रमोपयोगो व्युत्पादितः । सु पृ ३९८.

● स्रुवादिशब्दानां आकृतिवचनत्वम्। वा. ३।६।५।२५.

● स्रुवधर्मैः स्वधितिः स्रुवधर्मा भवति । भा. ६।३।१०।२६.

● सेनपर्णशब्दस्याभिपुषेषणवस्य पालननोदरणप्रकाशकत्वम् । भा. ९।४।५।२५-२७.

■ स्वं महिमानमावह इति गार्हपत्यवादः ॥

'स्वं महिमानमावह' इत्यत्र स्वशब्दस्य आत्मीयपरत्वेन सम्बोधनीयाहवनीयपरत्वावश्यम्भावात् तन्निष्ठस्य होतृत्वयष्टृत्वादिधर्मनिरस्यैव महिमरूपतया तद्धर्मविशिष्टो भवत्वेतदर्थकोऽयं निगद आहवनीयपर एव । इति प्राप्ते, अथ 'यस्त्वं महिमानमावाहयति वायुं तदावाहयति वायुर्वा अग्नेः स्वो महिमा' इति श्रौतीनके भगवद्वायुशब्दस्य च 'वायोरग्निः' इत्यादिश्रुत्या जनकत्वेनाहवनीयजनकगार्हपत्यपर एवायं निगदः । होतृत्वादिधर्माश्च देवतानां दूतत्वेनाहवनीय इव हव्यवोढृत्वेन गार्हपत्येऽपि संभवन्तीति न ते आहवनीयासाधारणाः । 'अग्ने यद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा' इति लिङ्गस्यापि प्रयोगात् । तस्मादेकस्यैव गार्हपत्यस्य हव्यवोढृत्वेनाहवनीयजनकत्वेन चावाहनम् । आवाहनावच्छेदकभेदाद्वावह इत्यावृत्ति । तेन पितृमेधे वाक्यद्वयस्यापि स्थाने 'अग्निं च यावहनमावह' इत्येक एव निगदः । संकर्ष. ४।२।१२.

■ स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायः । स्तुदः । साहस्री. ३६०.

■ 'स्वाङ्गुष्ठमपि चुम्बन्तीं भिक्षुकं कमयाचत' इति न्यायः । यत्र भौतसार्वभौमादिधर्मानभिज्ञवर्णाश्रमभ्रष्टा मूर्खा जनाः स्वस्वप्रीतिगोचरेभ्यः स्वाभिलषितार्थतृष्णाग्रस्तेभ्यः आचार्याभासेभ्यो निजाभीष्टार्थान् याचन्ते तत्रायं चरितार्थ इति । साहस्री. ८०.

● 'स्वाधीने शब्दप्रयोगे किमिति अवाचकं पदं प्रयोक्ष्यामहे' 'अदितिः पाशा०' 'अदितिः पाशान्०' इति । प्रकृतौ यथा श्रुता एकस्योपस्थितिः न तथा विकृतौ द्विशोपस्थितिः इति प्राकृतवृत्तिबाधात् तदुद्धारकस्य बहुवचनस्यापि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन शब्दद्विवचनप्रक्षेपावश्यम्भावः । 'स्वाधीने० प्रयोक्ष्यामहे' इति न्यायात् । भाट्ट. ९।३।४, ■ 'प्रवृत्ता बाह्' इत्यत्र विद्या ते 'स्वाधीने शब्दप्रयोगे०' इति न्यायेन प्रवृत्तान् बाहून् इत्यूहः, पूर्वपक्षे च प्रवृत्तेः इति द्रष्टव्यम् । ९।४।४.

● स्वार्थं अनुमान परामर्शेन स्वस्यैव (अनुमातुः) साध्यज्ञानजनकम् । मनि. पृ ३९. ● स्वार्थं सामान्यतोदृष्टमनुमानम् । स्वार्थं विशेषतोदृष्टमनुमानम् । बाल. पृ. ८. ● स्वार्थं प्रवर्तते जन्तुः । को हि परार्थं प्रवत्स्यमानस्तिष्ठेत् । पुरुषः स्वार्थेन करोति । भा. ११।१।१।१ पृ. २०९९, ● स्वार्थे हि सर्वं क्रियते, न परविशेषणार्थेन । भा. ९।४।६।२८.

● ' स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' (२।८।११।२८ सूत्रे वार्तिकं पृ. ३६६) । पदार्थानां परस्परान्वयाकाङ्क्षापर्यवसानेऽपि वाक्यार्थानां परस्परापेक्षया अन्वयो न विरुद्धः इत्याशयः । भाष्यप्रणयेन संबन्धाभिधानात् अङ्गस्य अङ्गिसंबन्धापेक्षया आग्नेयाद्यङ्गकल्पनेक्षया आग्नेयादिप्रधानानामेकफलसंबन्धापेक्षया अङ्गानां च एककर्त्रीयकारकसंबन्धापेक्षया स्वार्थपर्यवसायिनामपि वाक्यानां संहत्य एकमहावाक्यार्थप्रतिपादनेन एकवाक्यत्वं भवतीत्यर्थः । अङ्गप्रधानवाक्यैः स्वार्थप्रतिपादना वैयर्थ्याभिधानेन दूषितमेतत् । सु. पृ. ५२५, ● 'सुग यातु या' इत्येतावतो वाक्यमात्रेण अथाऽऽरभ्यात् तद्विशेषायोगेऽपि 'लिङ्गः कर्मणि च' इत्येतावत. ' स्वार्थबोधे समाप्तानां० ' इत्यनेन न्यायेन वाक्यान्तरैकवाक्यत्वेऽपि वाक्यत्वमवगमात् तद्विशेषावगमोऽप्राप्तैव (यनातुरा) प्रवृत्तिः । पृ. १४२९.

● स्वात्मानं नित्यं कृत्वा धर्मानुष्ठाने यजमानो धर्मादेव भेदो लभते । ऋजु. पृ १९७. ● स्वात्मनि क्रियाविरोध. । वा. २।२।५।१४.

स्वकरकृपणन्यायः । यथा स्वकरेण स्वकुचयोर्मर्दने युवती सुखं न सुखं लभते, तथा शिष्यमुखेन स्वत्वविचारेण ज्ञानमुत्पद्यते, किन्तु आचार्यद्वारा तत्करणे स्यादेति ' आचार्यवान् पुरुषो वेद ' इति श्रुतेरिति । मादर्शी. ३४९.

● स्वगताद्गुणतो गौण. । इतीन्धनमनुसृत्यापि स्वयं बहुधा वा न इन्धनदीपनम् । सत्याभो. ८।८।२७ स्वोप्सा.

स्वकाले स्यादविप्रतिषेधात् । ५।४।५।१५॥

अन्तरागर्भिणीरूपस्य अधिकरणस्य पूर्वपक्षसूत्रम् । ' यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत न नक्षत्रम् ' इति किं आधानकालस्य निषेधः उत सोमकालस्येति विचारे पूर्वपक्षमाह । ' उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् ' ( ५।४।४।१० ) इति सूत्रात् सोमः इति पदं अनुवर्तते । सोमः स्वकाले स्यात् । आधानकालस्य तु बाधः स्यात् अविप्रतिषेधात् अङ्गकालबाधे विरोधाभावात् । प्रधानकालबाधे तु विप्रतिषेधः स्यात् ।

अपनयो वाऽऽधानस्य सर्वकालत्वात् । १६ ॥

सिद्धान्तसूत्रम् । सोमपूर्वाधानपक्षे सोमकालस्यैव ' नर्तुं प्रतीक्षेत न नक्षत्रम् ' इत्यनेन अपनयः बाधः स्यात् । आधानस्य सर्वकालत्वात् ' यदहरेवैनं श्रद्धोपनमेत् तदहरादधीत ' इत्युक्तत्वेन आधानकालस्य अप्राप्तत्वात् प्रतिषेधो न कर्तव्यः । सर्वस्मिन् काले आधानं कर्तव्यम् । वा-शब्दः पूर्वपक्षनिरासार्थः । तस्मात् सोमकालस्यैव बाधः । के.

● ' स्वकाले स्यादविप्रतिषेधात् ' (५।४।५।१५) इत्यधिकरणे तन्त्ररत्ने ' यदा कदाचन कदाचनोपनमेदथादधीत अथ यजेत ' इति शतपथवाक्यस्य ज्योतिष्टोमे कालान्तरविधित्वोक्तेः तच्छेषस्य ' अपहतपाप्मानो वा ऋतवः ' इत्यस्य कालविधित्वकल्पनं अयुक्तम् । बाल. पृ. ५६.

स्वजातिर्दुरतिक्रमेति न्यायः । अत्र गाथाऽस्ति । यथा– गङ्गातटे कस्यचिन्मुनेरञ्जलौ श्येनमुखात् परिभ्रष्टा मूषिका पतिता, मुनिश्च तां दृष्ट्वा दयार्द्रहृदयो निजतपोयोगबलेन मानवीं कन्यां कृत्वाऽनपत्याये स्वभार्यायै दत्तवान् । सा तया पालिता युवती यदा जाता । तदा तस्याः विवाहाय वरदित्सुः सूर्यवरुणमारुतगिरीनाहूय मुनिः स्वकन्यामुवाच– पुत्रि, एतेष्वन्यतमं वरय । सा तान् सर्वानतिदहनात्मक–पृथ्वीकम्पनात्मक–अतिचञ्चलात्मक–कठिनस्वभावात्मकान् निरस्यानुरोधयामास । ततः स मुनिर्मूषकमाहूय कन्यां प्राह– पुत्रि, एनं वरय । ततः सा मूषकं दृष्ट्वा प्रसन्ना सती मुनि-

मुवाच— भगवन् मा पूर्ववन्मूषिकां कृत्वा मूषकाय देहि । मुनिना तथैव कृतम् । उक्तं च– 'सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् । स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥' इति । साहस्री. ८०८.

■ 'स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता' इति न्यायः । अयं श्रीहर्षोक्तिरूपः । अस्यार्थः– हि यतो यस्मात् सतां साधूनां परार्थता परोपकारित्वं स्वत एव स्वभावत एव भवतीति शेषः । यथा– ग्रहणानां ज्ञानानां स्वतः यथार्थता प्रामाण्यम् । ज्ञानानां स्वतः प्रामाण्यं न तु परत इति मीमांसकाः । यद्वा गृह्यन्ते ज्ञायन्ते अर्थाः एभिरिति ग्रहणानि इन्द्रियाणि, तेषां यथार्थता– अर्थाननतिक्रम्य वर्तिता, स्वस्वार्थग्राहकतेत्यर्थः । यथा श्रवणादीनीन्द्रियाणि संनिकृष्टशब्दाद्यर्थमन्यमनपेक्ष्यैव प्रत्यक्षयन्ति, तथा साधवः परस्य प्रेरणमनपेक्ष्यैवोपकुर्वन्तीति भावः । साहस्री. ९०२.

● स्वतस्त्वं प्रामाण्यस्य कारणगुणसत्ताद्यर्थक्रियाज्ञानानधीनत्वम् । याथार्थ्यघटितप्रामाण्यस्य स्वतस्त्वम् । कु. १।१।१।५ पृ. ७.

● स्वतःप्रामाण्यं नाम कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । बाल. पृ. ५–६. ● स्वतःप्रामाण्यं विधेः अबोधकत्व–सापेक्षत्वयोरप्रामाण्यकारणयोरभावात् । वि. १।१।५, ● स्वतःप्रमाण्यं विधेर्धर्मे । १।१।५.

● स्वतःप्रामाण्याभ्युपगमाद् विधिवाक्यानाम्, क्वचित् फलादौ प्रमाणान्तरापेक्षा नास्ति । वि. १।१।५.

● स्वतःप्रामाण्यवादिनां मते प्रमाणस्य सापेक्षता नास्ति । वि. १।२।१.

● स्वत्वम् । न च त्यागमात्रेण देवतास्वत्वं भवति । परिग्रहणेन हि स्वस्वामिसंबन्ध आपद्यते । शा. ३।१।१५।४४, ● स्वत्वं यथेष्टविनियोगयोग्यत्वलक्षणम् । सु. पृ. १५३४.

● स्वत्वोपायः अनन्यपरिगृहीततृणादिवत् परिग्राह्यम् । सु पृ. १५२८.

● स्वत्वपरित्याग–परस्वत्वापादनरूपो विक्रयेऽपि । या. ३।४।१०।२८ पृ. ९६१.

■ स्वदाने सर्वमविशेषात् । ६।७।१।१॥

विश्वजिति यागे श्रूयते 'सर्वस्वं ददाति' इति । तेन यदा स्वस्य स्वीयस्य दानं कर्तव्यं तदा धनं, माता, पिता, भूमिः इत्यादपि यावत्–किंचित् स्वीयम्, तत् सर्वं दातव्यम् । अविशेषात् । इदं देयं इदं ■ देयं इति विशेषोक्तेरभावात् । इति पूर्वः पक्षः ।

यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् । २ ॥

विश्वजिति यागे सर्वस्वदाने पित्राद्यपि स्वीयत्वात् देयं इति पूर्वपक्ष सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न पित्रादि देयम् । किंतु यजमानः यस्य स्वीयस्य प्रभुः स्यात् तदेव देयम् । इतरस्य पित्रादेः प्रभुत्वं तस्य दातुं अशक्यत्वात् न देयता । न च पुत्रः पितुः प्रभुः । तस्मात् पित्रादि न देयम् । अत्र 'यस्य वा प्रभुरनितरस्याशक्यत्वात्' इति कुतूहलपाठोऽपि साधीयान् । के.

● स्वपरिज्ञानबुद्धिर्हि निःश्रेयसे । बृहती. पृ. १६७.

■ स्वप्रकाशाश्रयन्यायः । यथा स्वेतरादीपत्वप्रभारूपद्रव्यस्य च सत्यपि भेदे तैजसत्वरूपसाजात्येनाऽभेदव्यपदेशः प्रवृत्तेऽपि । साहस्री. १५८.

■ स्ववतोस्तु वचनादैककर्म्यं स्यात् । ६।१।४।१७ ॥

अन्तरायामित्यधिकरणे सिद्धान्तसूत्रम् । दंपती उभावपि स्ववन्तौ द्रव्यवन्तौ । तयोः स्ववतोरपि सतोः ऐककर्म्यं स्यात् । उभौ संभूय यजेयातां न पृथक् पृथक् । 'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मृतिवचनात् । तस्मादुभयोः सहाधिकारः ।

लिङ्गदर्शनाच्च । १८ ॥

अन्तरायामित्यधिकरणस्य सूत्र 'दंपत्यो कर्मणि सहाधिकारः' इति सिद्धान्ते लिङ्गोपक्रमम् । चकारो हेत्वन्तरसमुच्चयार्थः । 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं मिथुनत्वाय' इत्यत्र मिथुनत्वेन संस्तुतिः कृता । तदिदं दंपत्यो. सहाधिकारे लिङ्गं दृश्यते तस्मात् दंपत्यो. सहाधिकारः सिद्धान्तः । के.

यज्ञाङ्गे क्रतूपकारो नियमः, मूलकारकप्रकाशयायुरादिकं स्वन्वाचयफलम्, तद्वदिति। भाष्ये तु क्रतौ क्रतुकाम कामयेत यज्ञाङ्गादौ तु यज्ञाङ्गकाममित्यादिकल्पसूत्रकार-व्यवहारात् यज्ञाङ्गशब्दो गोदोहनादिपरतया व्याख्यातः।

वि— 'श्रुताश्रुते श्रुतं चैकं सौत्रं सर्वप्रयुक्तये। भावो मैव श्रुतेनैव फलाकाङ्क्षानिवर्तनात्॥'

भाट्ट— यत्र श्रुतब्रह्मवर्चसादिफलकेऽपि शास्त्रस्य महाविषयत्वलाभार्थं स्वर्गकल्पना, ब्रह्मवर्चसादिकं तु आयुरादिवदानुषङ्गिकम्, तत्र किं वाच्यं रात्रिसत्रे इति शङ्का मन्दधियन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम्। फलाकाङ्क्षायाः श्रुतफलेनैव शान्तेरुद्देश्यानेकत्वनिमित्त-वाक्यभेदप्रसङ्गाच्च न स्वर्गकल्पना। महाविषयत्वाभा-वस्तु विशेषश्रवणे न दोषः। आयुरादौ प्रमाणद्वयसत्त्वा-दानुषङ्गिकत्वेऽपि प्रकृते तदनुपपत्तेश्च।

मण्डन— 'तत्तत् श्रुत फल काम्ये।'

शंकर— 'न स्वर्गस्तु फले श्रुते।'

● 'स्वव्यापारे हि विधिना पुरुषो विनि युज्यते।' इति न्यायात् विधिः पुरुषव्यापाररूपां भावनामाक्षिपति। को. ११४।३।२ पृ. १७९.

● स्वशब्दः अयं आत्मीयवचनशर्तीना प्रत्येकं वाचको न समुदायस्य। भा. ६।७।१।२. ● स्वशब्दः नाम कार्योपत्तिप्रमाणम्। बाल. पृ ८. ● स्वशब्दात् कार्योपत्तिः। 'परिधौ पशुं नियुञ्जीत' इति स्वशब्दे-नैव यूपकार्ये परिधिर्निवर्तते। टुप्. ९।२।१२।४०.

● स्वशास्त्राविहितेन परशास्त्राविहित बाध्यते, अभ्यासनाधः। भा. ३।३।७।१४ पृ. ८६०. ● स्व-शास्त्रविहितेन परशास्त्राविहितं बाध्यते। यथा उदित-होमादि अनुदितहोमादिना। बाल. पृ. १४१.

● स्वशास्त्राविहितदानस्य स्वाध्यायाध्ययनजनि तस्य कर्माङ्गत्वात् तत्सम्भवे इतरस्याशक्तेः। बाल. पृ. ९१.

● स्वसामर्थ्यप्रवृत्तैस्तु ब्राह्मणपदैः शक्त्या शक्त्य-नपेक्ष अङ्गत्वं अभिधीयते। शा. ३।१।७।१४ पृ. ८२५.

सू. स्वस्थानात्तु विवर्धेरन्, कृतानुपूर्व्यत्वात्। ५।३।२।३॥

अग्निष्टोमे तिस्र उपसदः। अग्निचयने तु षडु-पसदः। तत्र किं तिसृणां दण्डकलितवदावृत्तिः, एकदा क्रमेण तिस्रः, पुनस्ता एव क्रमेण तिस्र इति उत स्वस्थानविवृद्धिः, प्रथमा द्विवारं मध्यमा द्विवारं तृतीया च द्विवारं इति। इति विचारे दण्डकलितवत् आवृत्तिः इति पूर्वपक्षे उत्सूत्रे प्राप्ते, सिद्धान्तमाह। तु-शब्दः पक्षं व्यावृत्तिमाह। उपसदः स्वस्थानात् स्वस्व-स्थानात् विवर्धेरन् निवर्धितुमर्हन्ति। कृतानुपूर्व्यत्वात् प्रकृतौ कृतं क्लृप्तं आनुपूर्व्यं क्रमो यासां तादृशत्वात् चयनेऽपि स्वस्थानविवृद्ध्या अनुष्ठाने एव तदनुसरण-सम्भवात्। दण्डकलितवदावृत्तौ तु क्लृप्तं आनुपूर्व्यं बाध्येत तृतीयाया अनन्तरं प्रथमायाः करणप्रसङ्गात्। के.

● स्वस्थानविवृद्धिः प्रपाठकाध्ययनवत्। एकं भागमनेकवारमावर्त्य, द्वितीयो भागोऽनेकवारमावर्तनीयः, एवं तृतीयो भाग. इति। वि ५।३।२, १०।५।२५. ● स्वस्थानविवृद्ध्या अभ्यासो गवामयने ध्वनीकायाः। १०।५।२५।८३–८७. मीको. पृ. १९७९ 'ध्वनीका विकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। ● स्वस्थान-विवृद्ध्या उपसदभ्यासोपपत्तिः न तु दण्डकलितवत्। भा. ५।३।२।३. ● स्वस्थानविवृद्ध्या प्रयोगो द्वादशाहे दीक्षाणामुपसदां च। टुप्. ११।४।५।१८.

न्या. 'स्वशिभमपि चुम्बन्तमिक्षुदण्डमयाचत' इति न्यायः। तादृशात् मूर्खात् इक्षुदण्डप्राप्ति. स्वाभि-लषितप्राप्तिरित्यर्थः, न स्यादेवेति। न्यासं.

● स्वतन्त्रे महाव्रते तार्प्यादिभिरहतवाससः समुच्चयः। १०।४।७।१३–१५. मीको. पृ. ११३१ 'महाव्रते तार्प्यादिभिः' इत्यत्र अधिकरणं द्रष्टव्यम्।

● स्वतन्त्रार्थवादकल्प्यः प्रतिषेधो द्विविध.— दोषार्थवादकल्प्य· सिद्धवत्कीर्तनार्थवादकल्प्यश्चेति। बाल. पृ. १०. ● स्वतन्त्रार्थवादकल्प्य. विधि. (प्रमाण) त्रिविध —फलार्थवादकल्प्यः, सिद्धवत्कीर्तनार्थवादकल्प्यः, उपाख्यानार्थवादकल्प्यश्च। पृ. १२.

● स्वतन्त्रकामनायामेव पश्वुद्देशेन विहितं पशु प्रयोज्य गोदोहनं कर्तव्यम्। भाट्ट. ४।१।२ वर्णके १.

(दीक्षण-स्वर्दृग्शब्दया) प्रयोजनप्रयुक्त इति गृह्यते एव दृष्टविशेषः । भा १०।६।२।३ पृ १९८७ ● 'स्वर्दृश प्रति वीक्षेत' इति स्वर्दृक्शब्द-वीक्षणयोः सयोग कारणम् । स्वर्दृक्शब्दोच्चारण काले उद्गाता चक्षुरुन्मीलयेत्, यत् प्रस्तवकाले संमीलितम् । १०।६।२।१

● स्वर्दृक्-शब्देन वीक्षणस्य कालायता । वि १०।६।२

● स्वर्दृकशब्दोच्चारणस्य मीलनकालावधितानीत कथम् । भाट्ट १०।६।२

● स्वर्लोके तैजसप्राया देहा शुद्धप्रभान्विता । आप्यायन्ते विरंचीन भानवीयेन तेजसा ॥' वा ३।१।७।१३ पृ ७०२

● स्वर । अनमृत्याम्निसाम्ना अनुच त्यादिसाम्ना च स्वरूपत प्राप्तो यथावदमेव स्वरो युक्त । सु पृ ११८३ ● स्वर । आधानसाम्ना याजुर्वेदिकप्रधान विधिविहितत्वात् उपांशुत्वम् । वा ३।३।२।९ प ८१३ ● स्वर उपांशु उच्चैस्तु स चोपदपूर्वप्रयुक्तो न ज्योतिष्टोमपरमापूर्वप्रयुक्त । भा ९।१।२।३ वर्णक २, ● स्वर ऋग्वेदस्य उच्च, यजुर्वेदस्य उपांशु, साम वेदस्य उच्चै । ३।३।१।१ ● स्वर । ऋग्वेदसाम वेदयोः यत् किंचित् काम्य नैमित्तिक वा चोद्यते तत् सवमुच्चै कर्तव्यम् । एव याजुर्वेदिकमपि उपांशु व मुदाहर्तव्यम् । वा ३।३।२।० पृ ८१३, ● स्वर । फ पुनरिदानीं नानावेदस्वरव्यवस्थाया १ उच्यते । स्वाध्यायस्वराद्वेदुकार्या विद्वनो वेदा तदीयमपूर्वमत्र त्याज्य इति । या विद्वतिरस्मिन् वदे भवन्ति तस्या दोषश्चेत्तु यथाप्रकृति प्रसक्तु यस्मिन्न वदेऽङ्गतरम पूर्वे चोद्यते स विषय इति । प्रधान विषय । ३।३।२।१९ पृ ८१३ ● स्वर जपादिम तु ■ प्रसमाम्नायसिद्धो मान्त्र । १२।३।८।२०–२२ मीको पृ ३०५७ 'भाषास्वराधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । ● स्वर ज्योतिष्टोम उपांशु, याजुर्वेदत्वात् । 'ज्योति ष्टोमेन स्वर्गकामो यजेत' इतिवाक्यस्य यजु सामवेदयो

राम्नातत्वे-पि सोमद्रव्यस्य, वाय्वादिदेवतानाम्, अङ्ग बाहुल्यस्य च यजुर्वेदे श्रवणात् सामवेदे गुणविधा नार्थानुवादात् । वि ३।३।३, ● स्वर ज्योतिष्टोमे दीक्षणीयाया अवान्तरापूर्वप्रयुक्त एव न परमापूर्व-प्रयुक्त । ९।१।२ वर्णक २, ● स्वर ज्योतिष्टोमे दीक्ष णीयादौ अग्नीषोमीयात् प्राक् उपांशु । स चाङ्गविषय, न प्रधानविषय । ९।१।६, ● स्वर । ज्योतिष्टोम यजु र्वेदोक्तत्वा ऋचोऽपि उपांश्वेव पठनीया । 'उपांशु यजुषा' । यजुषा यजुर्वेदेनेत्यर्थ । ३।३।१, ● स्वर ज्योतिष्टोमे 'यावत्या वाचा कामयेत तावत्या दीक्षणीयाया मनुब्रूयात्, मन्द्र प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु, उच्चैरग्नीषोमीये' इति । ९।१।२ वर्णक २ ● स्वर । ज्योतिष्टोम वाचनिकसवनविभागविहितमन्द्र मध्यमोत्तमोच्चारणावधारणम्, दीक्षणीयादिप्रधानमात्र तु 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनु ब्रूयात्, मन्द्र प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु' इति । अग्नीषोमीये तु सवनविभाग स्वरेणैव 'मन्द्रयाऽऽज्यभागात्' इत्यादिप्राकृतस्वर प्रतिप्रसव । सवनविभागतुल्य वा । वा ३।३।२।९ पृ ८१२, ● स्वर । दर्विहोमेषु सर्वेषु 'उपांशु यजुषा' इत्यवगत् । ३।३।२।९ ● स्वर । दर्शपूर्णमासयो: मन्द्रया आज्यभागात परं मध्यमया उत्तमया अनु याजादि' इति । ३।३।२।९ पृ ८११ ● स्वर । दीक्षणीयादिपरिसमाप्तेषु 'प्राचीनमग्नीषोमीयात्' इत्यने नोपांशुत्वम् । ३।३।२।९ ● स्वर मन्द्र प्रायणीयाया स च प्रायणीयापूर्वप्रयुक्तो न परमापूर्वप्रयुक्त । भा ९।१।२।३ वर्णक २ ● स्वर – 'मन्द्र प्रात सवने चरति' इत्यादिसाम्नां सवनाना आधारत्वप्रतीते, कर्ममध्ये अनुष्ठानादेव च कर्मणामाधारत्वप्रतीते, कर्मकाले च अनुष्ठान विना अनुष्ठानस्य कर्ममध्यत्वा सिद्ध, सवनकाले यत् प्रयुज्यते तत्र सर्वत्र मन्द्रादि विध्यवगमात् सवनीयादिष्वपि यथासवनमेव स्वरा भवति । सु पृ ११८० ● स्वर मन्द्रतर आतिथ्यायां स चातिथ्यापूर्वप्रयुक्तो न ज्योतिष्टोमपरमा

पूर्वप्रयुक्तः । भा. ५।१।२।३ वर्णकं २, ● स्वरः 'यावत्या वाचा कामयीत' इत्यादिना विहितः मन्त्रपूर्वप्रयुक्त एव न परतापूर्वप्रयुक्तः । ५।१।२।३ वर्णकं २. ● स्वरः । येषां प्राकृतानामङ्गानां प्राकृतः स्वरः, तदन्या विकृतौ चोदकेन प्रयोगवचनबाधात्, प्रयोगवचनं च विना प्रधानधर्माप्राप्तेः अपूर्वे अङ्गे स्वरोत्पत्तिः । सु. पृ. ११८१. ● स्वरः लोके नास्ति । 'न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः ।' वा. १।३।८।२४ पृ. २६७. ● स्वरः वाङ्नियमः । 'उच्चैः ऋचा क्रियते' इति करणविभक्तिनिर्देशात् साङ्गस्योच्चैष्ट्वम् । टुप्. ५।१।६।२९. ● स्वरः वाङ्नियमः । 'यावत्या वाचा कामयेत' इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते । स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते नाङ्गेषु, तस्मादुपांशुत्वमङ्गेषु, प्रधानेषु 'यावत्या वाचा' । टुप्. ५।१।६।२५ । ( यावत्या वाचा इति— ) स धर्मः प्रधानेषु भविष्यति, दीक्षणीयादिषु प्रधानशब्दोपबन्धनात् । तस्मात्तत्र प्रधानवर्जितेषु अङ्गेषु निवेक्ष्यते । भा. ५।१।६।२५. ● स्वरः । विकृतिषु अहीनादिषु नानावेदस्वरस्य अपूर्वमात्र विषयः । सु पृ. ११८१, ● स्वरः वैदिकेषु पदेषु नियतः, लौकिकेषु अनियतः । पृ ३३३, ● स्वरः । यज्ञेषु एकाहाहीनसत्रेषु ज्योतिष्टोमिकस्वरन्यायः । पृ. ११८०–८१, ● स्वरः वचनान्तरगते श्रवणीयादौ सोमादौ च यथावचनम् । पृ ११८०. ● स्वरः । गुणोपसंहारानि यान्यङ्गानि तेषु तत्र ग्रहणाभावात् यथावेदमेव स्वरः इति आश्वयुजादीनामपि उच्चैस्त्वसिद्धिः । वा ३।३।२।९. ● 'स्वराः सितासितेतरश्च' शिक्षावाक्यम् । संकर्ष. ४।१।४. ● स्वरस्य, आग्नीध्रीयात् शौष्कपविनाप्यनन्तरा प्राचीने दीक्षणीयादौ उपगुरुतमेव । वि. ५।१।६. ● स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वम् । भा. ५।१।२।३ वर्णकं २. ● स्वरस्य भाषिकस्य नियमः शतपथब्राह्मणोच्चारणेषु । १२।३।१०।२३–२४. मीको. पृ. १४९७ 'शतपथे ब्राह्मणे स्वराः भाषिकाः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● स्वराभावात् नैतत्सम्प्रदायनिबन्धनम् ( कल्पसूत्राणि ) । भा. १।३।६।१२.

● स्वरोच्चारणे दोषाः । 'ग्रस्तं निरस्तं निहतमवलम्बितं अम्बूकृतं ध्मातमथो विकम्पितम् । संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः ॥' इति स्मृत्यन्तरगतप्रमादादिदोषवर्जित–नियतस्वरादिकालाभिव्यङ्ग्यवर्णात्मकशब्देषु धर्मेषु अभियुक्तानां साधुशब्दप्रयोगात्, तद्विपरीतेषु च असाधुशब्दप्रयोगात् अवश्यं तदालम्बनं किंचित् व्यवस्थितं वक्तव्यम् । सु. पृ. ३०६ । ( 'ग्रस्त' इत्यादेरर्थस्तु— ग्रस्तं जिह्वामूले निगृहीतम् । निरस्तं निष्ठुरम् । निहतं रूक्षम् । निर्हतं इति महाभाष्ये कैयटे च पाठः । अवलम्बितं वर्णान्तरसंभिन्नम् । अम्बूकृतं यो व्यक्तोऽपि अन्तर्मुख इव श्रूयते । ध्मातं श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । विकम्पितं कम्पयुक्तम् । संदष्टं वर्धितमिव । एणीकृतं अविशिष्ट विमय ओकारः अथ औकार इति यत्र संदेहः । अर्धकं दीर्घमपि ह्रस्वमिव । द्रुतं झटिति उच्चारितम् । विकीर्णं वर्णान्तरे प्रसृतम् । एकोऽपि अनेकनिर्भासि इत्यपरे । इद कैयटोक्तम् ॥ अत्र केचित् स्वमतार्थं अन्यथा व्याख्यायते । ग्रस्तं यदक्षर निगीर्णमिव भाति । निरस्तं यत् मुखादनतिः पतितमिव भाति । निहतं बाधितम् । अम्बूकृत सनिष्ठीवं इत्यमरः । संदष्टं दन्तैः कुट्टितमिव । कै. ) । अन्येऽपि केचिद्दोषा महाभाष्ये उक्ताः । यथा संवृतः कलः ध्मातः. उपगीतः क्ष्विण्णः रोमशः इति । तत्र एकारादीनां संवृततरं दोषः । कलः स्थानान्तरनिष्पन्नः, काकलीत्वेन ( गानशास्त्रे ) प्रसिद्धः ( यथा चतुर्थश्रुतिस्थः अपि षड्जः तृतीयश्रुतिस्थत्वेन गीयमानः ) । ध्मातः श्वासवदुच्चारितः । उपगीतः समीपवर्णान्तरगीतानुरक्तः । क्ष्विण्णः कम्पमान इव । रोमशः गम्भीरः । इति कैयटः । एतौ भाष्यकैयटौ परत्रास्थौ ॥ पुनरत्र मुखाग्रन्तं अविभक्तिशोच्चारणम् । निरस्त विशेषितमुखोक्तम् । अवधृतं सनिष्ठीवम् । संवृतकलध्मातोपगीतक्ष्विण्णरोमशादीनां आदिशब्देन ( वार्तिकस्थेन ) ग्रहणं इति । सु. पृ. ३१८.

* स्वरचर्चा । 'उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना ' । मि. ३।३।१ । उत्पादकवेदस्वरात् विनियोजकवेदस्वर. प्रबलः । ३।३।२ । उपांशुत्व याज्येष्टिषु प्रधाने एव, अङ्गेषु तु तत्तद्वेदानुसारेण ध्वनिः । ३।८।२० । ऋचोऽपि यजुर्वेदगता उपांशु पठनीयाः । ३।३।१. * स्वरचर्चा । पा— पृ. ८११–८१३ । ननु याजुर्वेदिकज्योतिष्टोमाङ्गानां स्तोत्रशस्त्रादीनामपि अनेनैव न्यायेन उपांशुत्वं प्राप्नोति । सत्यं प्राप्नोति, वचनात्तु सर्वत्र स्वरान्तरलाभः । कथम् ? दर्शपूर्णमासयोस्तावत् वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधानधर्म. उपांशुत्वं प्राप्नोति, ततो वाचनिकः स्वरो भवति ' मन्द्रया आज्यभागान्तं ', 'परं मध्यमया ', ' उत्तमया अनुयाजादि ' इति । तथा विकृतीनां इष्टिपशुसोमादीनां एतस्मिन्नेव प्राकृते स्वरत्रये प्राप्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ ' तद्ग्रहणाद्वा स्वधर्मः स्यात् ' इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षित्वेन दुर्बलत्वात् चोदकप्रापितस्वरग्रहणमेवेष्टम् । एवं ज्योतिष्टोमाङ्गानामपि दीक्षणीयादीनां प्राकृते स्वरे प्राप्ते प्रत्यक्षोपदेशवशेन बाध्यमाने चोदकस्यैवोपदेशेन पुनरुज्जीविते ज्योतिष्टोमस्य याजुर्वेदिकत्वात् कर्त्रौपकारप्राकृतधर्माग्रहणाच्च गुणमुख्यव्यतिक्रमन्यायेनैव तदङ्गोपांशुत्वधर्मप्रसङ्गे सति ' याचन्त्या वाचा कामयेत तावता दीक्षणीयायामनुब्रूयात् ' इत्येते स्वरा गुणमुख्यव्यतिक्रमन्यायबाधेनैव अङ्गानां प्राप्ताः । तत्र ज्योतिष्टोमस्य वाचनिकसवनविभागविहितमन्द्रमध्यमोत्तमोच्चारणापवादत्वात्, तदङ्गानामपि सर्वेषां प्राकृततुल्यमन्द्रमध्यमोत्तमोच्चारणान्येव प्रधानद्वारेण प्राप्तानि । ततो ' यत्किंचित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्ति ' इत्युपांशुत्वे अङ्गानां दीक्षणीयादीनां प्राप्ते प्रधानमात्रगतविधेः दीक्षणीयादिवाक्योद्देशेन विहिताः प्रधानमात्रेषु एते स्वरविशेषा भवन्ति ' याचन्त्या वाचा कामयेत तावता दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु ' इति । तत्र उपांशुत्वस्य पूर्वेणैव सर्वव्यापिना उपांशुत्वविधिना प्राप्तत्वात् दीक्षणीयादिस्वरप्रसङ्गार्थः नित्यानुवाद एव । अग्नीषोमीये तु सवनविभागस्वरेणैव ' मन्द्रया आज्यभागान्तम् ' इत्यादिप्राकृतस्वरप्रतिप्रसवः । सवनविभागतुल्यं वा साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्यमोत्तमोच्चारणमपादनं कार्यम् । एतेन अनूबन्ध्या–अवभृथ–उदयनीया–उदवसानीयास्वपि उच्चारणविशेषा व्याख्याताः । सुत्याकालवर्तनीयादीनामपि एव स्वरे प्राप्ते प्रातःसवनाद्यन्तर्गतत्वात् यथासवनमेव स्वरा भवन्ति । ननु सवनशब्दानां सोमयागावयववचनत्वात् दीक्षणीयाद्यङ्गानाम् तदीयत्वप्रसङ्ग इति चेत्, न, सप्तमीनिर्देशेन तत्कालप्रयुज्यमानत्वमात्राश्रयणात् । ' यदि षष्ठी भवेदत्र सवनेभ्यः परा ततः । तदङ्गमन्त्रमात्रेषु मन्द्रत्वादिविधिर्भवेत् ।। सप्तम्या तु तदाधारो यावान्मन्त्रः प्रयुज्यते । तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः ।। केचिदाहुर्यथाधारमात्रत्वं सवनेष्विह । तदा तेषां न मन्द्रादिः स्यादनाधेयताश्रुतेः ।। आधारे सवने भिन्नं यद्वाधेयतया श्रुतम् । सवनीयादि तस्यैव मन्द्राद्युच्चारणं भवेत् ।। स्तोत्रशस्त्रानुवाक्यादिशेषस्तु सवनस्य यः । षष्ठ्यभावान्न तस्यैते युक्ता मन्द्रादयः स्वराः ।। इत्युक्ते नैष दोषोऽस्ति यतः षष्ठ्या विनाऽप्ययम् । षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः ।। यथा हि शकुनिर्वृक्षे पुष्पाद्यपि तथेष्यते । तत्राधेयधर्मोऽर्थः स वृक्षेऽपि विधीयते ।। यद्वा स्तोत्रशस्त्रादि कृत्स्नं सुत्याङ्गमेव नः । आधार एव तस्यापि सवनानीतराङ्गवत् ।। नानावेदस्वरस्तस्मात् स्तोत्रादेः प्राप्त आदितः । प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः ।। ततो वाचनिकेनैव यथासवनभाविना । मन्द्रादिना समस्तानि सुत्याङ्गानि प्रयुञ्ज्महे ।। ' एतेन सर्वे ज्योतिष्टोमविकाराः ( एकाहाहीनसत्राणि ) व्याख्याताः ।

क्व पुनरिदानीं नानावेदस्वरस्यावकाशो भविष्यति ? उच्यते । 'तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्याद्ग्रन्थः शेषे' इतिवत् कल्पनीयः । यत् प्राकृतस्वराद्गुणत्वाया विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यते इति । ननु तथापि गुणमुख्यव्यतिक्रमन्यायेन प्रधानधर्मभाव एव । (पक्षान्तरं शङ्कते–) एवं तर्हि या विकृतिः यस्मिन् वेदे भवति तस्याः शेषेष्वङ्गेषु यथाप्रकृति प्राप्तेषु यत् तस्मिन्नेव वेदे अङ्गान्तरमपूर्वं चोद्यते स विषय इति । (शङ्कते–) सोऽपि प्रधानद्वारेणैव सम्बन्धात् । (पक्षान्तरं शङ्कते–) तदेव तर्हि प्रधानं विषय इति, न, तस्यापि प्राकृतावरुद्धत्वात् ।

न तर्हि प्रधानद्वारेण अपूर्वस्याङ्गस्य प्राप्तिः इति तदेव विषय इति । नैवमपि य. प्रधानस्य धर्मः तस्यैव तथापि भावात् ।

अपि च नैवा निमित्तेषु पवमानधर्मे च स्वरे स्थिते यदपूर्वमपि तद्भागमाति भवति तस्य न पूर्वाभ्युदाहरणबर्हिस्तुत्वस्य इति भवितव्यमेव प्राकृतेन धर्मेण । तस्मादपि नास्ति विषयः । ग्रैरस्याम्नानं च अत्यन्तमेवानर्थकं स्यात् । (शङ्काद्वयमपि परिहरति–) अत्र समाधिः । 'उपांशु यजुषा' इति तावत् सर्वदर्विहोमेषु अर्थवत् । ऋक्सामवेदयोरपि काम्यनैमित्तिकेष्वङ्गेषु अर्थवत्ता । 'मन्द्रं प्रातःसवने' इत्यादि हि निर्देशात् अविशेषेण काम्यनैमित्तिकैः अभ्यस्यमानं नियोग्द्विषयमेव भवति । तेन यत् ऋग्वेदसामवेदाभ्यां किञ्चित् काम्यं नैमित्तिकं वा चोद्यते तत् तौ उभौ कर्तव्यम् । तथा 'तं भिषमभिमृशेत् यदा विद्मिश्रिव' इत्यादि । एवं याजुर्वैदिकमपि उपांशुत्वमुदाहार्यम् । तथा यानि सन्योत्तरकाण्डानि अङ्गानि तेषु गानमध्ययनाभावात् यथावेदमेव स्वर इति ब्रह्मभूयगमादीनामपि उपांशुत्वसिद्धिः । अन्यथा हि यथेष्टं प्रयोगः स्यात् । दीक्षणीयादिपरिमाणस्तु 'प्राचीनमग्नीषोमीयम्' इत्यनेन उपांशुत्वम् । प्रवर्ग्यसाम्नां पुनः 'उच्चैः प्रार्चन्ति' इतीदं उच्चैस्त्वम् । आधानगाने ■ याजुर्वैदिकप्रधानविधिविहितत्वादेव उपांशुत्वम् । 'य एवं विद्वान् सामवेदेन गायति' इत्यादीनि यजुर्वेदवाक्यान्येव । शा. ३।३।२।९ पृ. ८११–८१३.

● स्वरनियमः 'यावत्या वाचा कामयीत तावत्या वाचा दीक्षणीयाया०' इति, न ज्योतिष्टोमापूर्वार्थः किन्तु दीक्षणीयापूर्वार्थ एव । बाल. पृ. १४२.

● स्वरविशेषेण उदात्तादिना बहुव्रीहि– तत्पुरुषसमासादिनिश्चये अर्थविशेषोऽवबोद्धुं शक्यते । वि. ९।२।८ वर्णकं १.

● स्वरशब्दस्य 'मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्' (पाणिनीयशिक्षा श्लो. ७) इत्यादिदर्शनात् वायवीयसंयोगविभागजनितनादस्य ध्वन्यपरपर्यायघोषात्मकशब्दपरत्वं अवगम्यते । मु. पृ. ८६२.

● स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेन अन्वितौ भवतः (स्याता इति याज्ञिके मूलपाठः) । भा. १०।४। १७।३४.

● स्वरसामा प्रथमः आग्रयणाग्र, द्वितीयः ऐन्द्रवायवाग्र., तृतीयः शुक्राग्रः । टुप् . १०।५।२५।८५.

● स्वरसामानः त्रयः दिवाकीर्त्यसमितः गवामयने, अष्टरात्रे पृष्ठ्यः षडहः द्वौ स्वरसामानौ । तौ च द्वौ तेषां स्थाने धर्माणां ग्राहकौ । भा. ७।३।१०।२६.

## स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् । ७।३।१०।२७॥

स्वरसामा च एककपालश्च आमिक्षा च तेषां समाहारः स्वरसामैककपालामिक्षम् । एते शब्दाः धर्मातिदेशकाः । गवामयने 'अभितो दिवाकीर्त्यमहः त्रयः स्वरसामानो भवन्ति' इति । संवत्सरसत्रस्य मध्यमं अहः विषुवान् नाम । तच्च दिवाकीर्त्यम् । तत्सम्बन्धात् दिवैव पठनीयत्वात् । तस्य दिवाकीर्त्यस्य अह्नः अभितः पुरस्तादुपरिष्टाच्च त्रयस्त्रयः स्वरसामानो नाम सोमयागविशेषा भवन्ति इति । तेषां 'सप्तदशा भवन्ति' इत्यादयो धर्मा विहिताः । सप्तदशत्वं सप्तदशस्तोमकत्वम् । अन्यत्र च 'पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति अष्टरात्रे श्रुतम् । तस्य च वाक्यशेषे 'यत् तृतीय सप्तमाद्महः तत् त्रयस्त्रिंशस्य

स्तनमभिरथाहरन्ति, स उत्तरेषां स्तोमानां अन्य वायाय, अयाणां च सप्तदशानां अनूचीनतायै ' इति श्रुतम् । अस्यार्थः- कुतूहले— पृष्ठ्ये षडहे त्रिवृत्-पञ्चदश-सप्तदश-एकविंश-त्रिणव- त्रयस्त्रिंशस्तोमयुक्तानि क्रमेण षट् अहानि भवन्ति । अष्टाहे च यत् तृतीय सप्तदशमहः तत् त्रयस्त्रिंशात्पूर्वं उत्कृष्यम् । तथा सति पञ्चदश-षोडशानां त्रयाणां स्तोमानां त्रिवृत्-(९) पञ्चदश- एकविंशानां अयनार्थो भवति । तथा सप्तदशस्य त्रयस्त्रिंशात्पूर्वं उत्कर्षे इदमेकं सप्तदशम्, स्वरसामानौ च द्वौ सप्तदशावेव इति त्रयाणां सप्तदशानां नैरन्तर्यं च भवति इति ।

अत्र अष्टाहगत स्वरसामशब्दः गवामयनगतस्वरसामधर्माणां अतिदेशक ग्राहक स्यात् । उत्तरवाक्य शेषे लिङ्गस्य दर्शनात् । अष्टाहगतौ स्वरसाम्नौ सप्तदशत्वे एव त्रयाणां सप्तदशानां अनूचीनता नैरन्तर्यं भवति नान्यथेति । एतस्मात् लिङ्गदर्शनात् स्वरसाम शब्दः धर्मग्राहकः । तथा वैश्वदेवपर्वणि ' द्यावापृथिव्य एककपाल ' श्रुत । तस्य धर्माश्च ' सर्वहुतं जुहोति ', ' अपरावर्तयन् जुहोति ' इति । आग्रयणे च द्यावापृथिव्यैककपाल विधाय ' यत् सर्वहुतं करोति सा स्वेका परिक्रमा (होम), हुतोऽहुत पर्यावर्तते सा द्वितीया, आग्नेय द्यावापृथिव्यौ यन्ति ' इति आग्रयणविधिवरे वाक्ये ' सर्वहुत अपर्यावृत्ति च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति । एतस्मात् लिङ्गदर्शनात् आग्रयणगत एककपालशब्दः वैश्वदेवपर्वगतैककपालधर्माणां ग्राहकः ।

तथा वैश्वदेवपर्वणि वैश्वदेवी आमिक्षा । तत्र वाजिन प्रचारो भवति । वरुणप्रघासेषु मैत्रावरुणी आमिक्षा । तत्र च ' न वाजिनेन प्रचरन्ति ' इति वाजिनप्रचारो निषिद्धः । एतस्मात् लिङ्गदर्शनात् मैत्रावरुणामिक्षाशब्दः वैश्वदेव्यामिक्षाधर्मग्राहकः इति ज्ञायते । एवं स्वरसामशब्दः एककपालशब्दः आमिक्षाशब्दश्च धर्मग्राहकाः इति सिद्धान्तः ।

( चोदनासामान्याद्वा । २८ ॥ सूत्रम् )

उक्त लिङ्ग च चोदनासामान्यानुगृहीतम् । चोदनासामान्य च स्वरसामत्वसामान्यस्य एककपालत्वसामान्यस्य आमिक्षासामान्यस्य च । के.

**८. स्वरसामैककपालामिक्षाधिकरणम् ।** अतिदेश. कर्मान्तरगतस्वरसामैककपालामिक्षं गवामयनादिगतस्वरसामैककपालामिक्षधर्माणाम् ॥

स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् । ७।३।१०।२७ ॥

भाष्यम्— गवामयने श्रूयते 'अभितो विषुवन्तं स्वरसामानो भवन्ति ' इति । तेषां विशेषधर्मा आम्नाताः, यथा ' सप्तदशा भवन्ति, सप्तदशा अनिरुक्ताः गृह्यन्ते ' इत्येवमादयः । पुनरन्यत्र श्रूयते ' पृष्ठ्यः षडहो द्वौ स्वरसामानौ ' इति । तथा वैश्वदेवे श्रूयते ' द्यावापृथिव्य एककपालः ' इति । तत्र आम्नाता विशेषधर्माः ' सर्वहुतं जुहोति, अपर्यावर्तयन् जुहोति ' इति । पुनरपरत्र ' काय एककपालः ' इति । तथा तत्रैव श्रूयते ' वैश्वदेव्यामिक्षा ' इति । तस्यापि विशेषधर्माः केचिदाम्नाताः । पुनरन्यत्र ' मैत्रावरुण्यामिक्षा ' इति । तत्र सन्देहः, किं स्वरसामशब्दः अन्यत्र श्रूयमाणः गवामयनिकेभ्यः स्वरसामभ्यः धर्माणां ग्राहकः उत नेति । एवं एककपालामिक्षाशब्दौ अपि । तत्र 'गुणविधिस्तु न गृह्णीयात् समत्वात्' ( ७।३।६।१७ ) इति अग्रहणे प्राप्ते, इदमुच्यते । स्वरसामैककपालामिक्ष च धर्माणां ग्राहकम् । किं कारणम् । लिङ्गदर्शनात् । लिङ्गं तत्र तादृशं दृश्यते, येन ज्ञायते एते धर्माणां ग्राहका इति । स्वरसामसु तावत् ' पृष्ठ्यः षडहो द्वौ स्वरसामानौ ' इत्युक्त्वा आह ' तत्र यत् तृतीयं सप्तदशमहः तत् त्रयस्त्रिंशस्य स्थाने अभिपर्याहरन्ति, स उत्तरेषां स्तोमानामव्यवायाय, त्रयाणां च सप्तदशानामनूचीनतायै ' इति । यदि एतौ स्वरसामानौ गावामयनिकानां धर्माणां ग्राहकौ तत एतावपि सप्तदशौ । तथा अत्र त्रयः सप्तदशा अनूचीना भवन्ति । तत्र एतद्वचनं युज्यते 'त्रयाणां सप्तदशानामनूचीनतायै ' इति । तथा आग्रयणे द्यावा

पृथिव्यं एककपालं विधाय आह, 'यत् सर्वहुतं करोति सा त्वेषा परिचक्षा, हुतोऽहुतः पर्यग्निर्ने सा द्वितीया, आज्यस्यैव द्यावापृथिव्यो यजेत' इति आग्रयणविधिपरे वाक्ये सर्वहोमपर्यग्निकृति च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति। तथा वैश्वदेवकवाजामिक्षाया 'न वाजिनेन प्रचरन्ति' इति वाजिनेज्या वैश्वदेविकं धर्मं प्रतिषेधत् ततो धर्मप्राप्तिं दर्शयति। एतेभ्यो लिङ्गेभ्यः एतत् ज्ञायते यथास्वं धर्मास्ता आहर्ता इति। प्रतिषत्वर्थकर्म वाजिनेज्या, किंप्रकृतिकत्वं मत्वा एतदुक्तम्। आह। लिङ्गमपदिष्टम्। कुतः प्राप्तिरिति। उच्यते। अन्यथा प्राप्तिः, लिङ्गात्तु लक्षणापरिग्रहः।

( चोदनासामान्याद्वा। २८ ॥ )

[ अत्र 'स्वरसामैक०' सूत्रोत्तरं 'चोदनासामान्याद्वा' इति सूत्रं मु-पुस्तकयोर्नास्ति। इदमत्र तु सर्वत्र विद्यते एव। माध्येऽपि आनन्दाश्रमीये तत्सूत्रं सदीपभाष्यरेन च निर्णयसिन्धुप्रत्योऽपि मुद्रितः। एवमेव म-पुस्तकयोरपि। परन्तु एतत्सूत्रीयभाष्यत्वेन मुद्रितो ग्रन्थो न कथञ्चिदपि सूत्रार्थेन सम्बध्यते। 'लिङ्गात्तु लक्षणापरिग्रहः स्वरसामसामान्यात्' इत्यादिरेकः सन् ग्रन्थः संशोधकैर्मध्ये पृथक् च्छेदितः। तदिदं सर्वमनवधानमूलकमिति मन्यामहे। नेदं सूत्रं भाष्येण व्याख्यातमिति च। शू- मु-ग्रन्थौ चात्रानुकूलौ। तथापि 'यस्य लिङ्गमर्थसंयोगात्' इत्यत्र (८।१।१।२) वर्तमानेन 'चोदकमाख्यमनुमापकमा लिङ्गेन' इति शिक्षारूपेण 'का पुनश्चोदना लिङ्गनिमित्तस्यातिदेशस्य आश्रमिकस्य नामधेयस्याश्रयगतिः' इति सम्भारतेन च स्वरसामसूत्रार्थस्यैवतस्यता ज्ञापकेन 'चोदनासामान्याद्वा' इति सूत्र सार्थकमिति शङ्का सम्भवतीति। तेनैव भाष्यरहितः स्यादिति स्वीकार्यम्। के. ]

स्वरसामत्वसामान्यात् एककपालत्वसामान्यात् आमिक्षासामान्याद्वा। 'यस्य लिङ्गमर्थसंयोगात्' (८।१।२।२) इत्यनेन प्राप्तिरिति।

टुप्— अन्वादायच्चमत्र इहमारभ्यते। नामधेयेन अतिदेशः। स्वराणि सामानि अस्येति। यथैव गवामयने गुणविधिः तथा इतरत्रापि 'पृष्ठ्यः षडहो द्वौ स्वरसामानौ' इति। आमिक्षैककपालावपि द्रव्यविधित्वात् गुणविधी। एवं गुणविधित्वात् अतिदेशाभावे प्राप्ते 'यस्य लिङ्गमर्थसंयोगात्' (८।१।२।२) इत्यनेन अतिदेशः प्राप्यते।

भा— अनन्यपरेभ्यो लिङ्गेभ्यः स्वरसामत्वादिचोदनाशब्दोपबृंहितेभ्यः तद्विकारत्वम्।

सोम— चोदनालिङ्गात् विशेषातिदेशस्य आष्टमिकत्वापि नामधेयापवादप्रसङ्गात् अत्र संगतिः। गुणविधित्वात् स्वरसामादिशब्दानां अतिदेशकत्वाभावेऽपि चोदनालिङ्गात् अतिदेशमाश्रित्य गवामयनिकादिविकारत्वं युक्तं इति सिद्धान्तः। अत्र माधवीये (विस्तरे) 'अवभृथस्य स्थानमभिव्याहरन्ति' इति पश्चाद्विधिरित्युक्तम्। तत्रापि सनदशस्योत्कर्षविधावेव तात्पर्यम्, न विनियोगे इति द्रष्टव्यम्। अत्र वाजिनयागस्य प्रधानतया अङ्गत्वाभावेनानतिदेशात् वाजिनयागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तं इति कुचोद्यान्वयेदं इति केचिदाहुः, तदयुक्तम्। वाजिनयागस्य वाजिनापचारे द्रव्यप्रतिनिधानाशक्तया अनित्यस्य नित्यत्वाभिप्रायगताविधिः सद्धाधिकारविधिविषयत्वाभावेन वाजिनस्य प्रतिपत्त्यर्थतया स्विष्टकृदादिवत् अङ्गत्वस्यैव युक्तत्वात्। सूत्रार्थस्तु— स्वरसामैककपालामिक्षं च प्रयुक्तलिङ्गदर्शनात् गवामयनिकवैश्वदेविकधर्मग्राहकमिति।

वि— 'न विकारा विकारा वा स्वरसामादयो, न हि। वैश्वदेव्यादयो, नैवमन्यगतिलिङ्गतः ॥'

भाट्ट— पूर्वमुत्तरवेदिप्रतिषेधरूपेण लिङ्गेन सौमिकप्रापकातिदेशो निरस्तो अधुना लिङ्गादपि अतिदेशोऽस्तीत्येवं तदपवादः प्रस्तूयते। गवामयने 'त्रयः स्वरसामानः' इति सप्तदशसाम्नां स्तोमकरणादिधर्मैश्च युक्ताः समाम्नाताः। अन्यत्रापि 'द्वौ स्वरसामानौ' इति। तथा वैश्वदेवे पर्वणि 'वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः' इति सधर्मकौ यागौ। अन्यत्रापि 'मैत्रावरुण्यामिक्षा वाय एककपालः' इत्यामिक्षैककपालद्रव्यका यागाः श्रुताः। ते किं स्वरसामानः गवामय-

र्थैक्यादिरूपेण व्यवहारस्तथैव नास्ति, तर्हि भिन्नो घट इत्यत्रापि मतेऽर्थैक्यात् भिन्नव्यवहारोऽप्यपि न भवेत्, अतः स्वरूपातिरेकेण भेदाङ्गीकारो न युक्तः ।

ननु स्वरूपस्य प्रतियोग्यपेक्षा वक्तव्या, तत्र विकल्पनीयम्— किं स्वरूपाद्भिन्नः प्रतियोगी, किंवा अभिन्न इति । न तावदभिन्नः, स्वयमेव स्वस्य प्रतियोगित्वप्रसङ्गात् । न च भिन्नः, भेदे सति प्रतियोगित्वसिद्धिः, प्रतियोगित्वसिद्धौ च भेदसिद्धिरितीतरेतराश्रयत्वम् । अथ भेदान्तरेण भिन्नः प्रतियोगी, तर्ह्यनवस्थाप्रसङ्ग इति । नैवम्, धर्मभेदवादिनोऽपि प्रतियोगित्वापेक्षत्वमस्त्येव तत्राप्येवं विकल्पो दोषश्च समानः, यस्तत्र परिहारः स एवात्रापि ।

ननु स्वरूपभेदवादः प्रतीतिविरुद्धः । तथाहि, 'पटाद्भिन्नो घटः' इति विशेषणत्वेन भेदः प्रतीयते, भवन्मते तु स्वरूपव्यतिरेकेण भेदाभावाद्विशेषणभूतोऽर्थो नास्त्येव, अतः 'भेदी घटः' इत्येव व्यवहारः स्यात्, न 'भिन्नो घटः' इति । नैवम्, भेदिनो भिन्नो भेदः इत्यत्र भेदव्यतिरेकेण विशेषणभूतो भेदो नास्त्येव, तथापि भिन्नो भेदः इति ।

अथ भेदस्य भेदान्तराभावेऽपि प्रतियोगित्वापेक्षस्वरूपं विशेषणम्, भेदमात्रं विशेष्यमिति, तर्हि 'भिन्नो घटः' इत्यत्रापि प्रतियोगित्वापेक्षस्वरूपस्यैव विशेषणत्वं स्वरूपमात्रस्य विशेष्यत्वमिति तुल्यचर्चं, पाचकादिशब्दवत् । यथा 'पाचको देवदत्तः' इत्यत्र पाचकव्यक्तिष्वनुगतमेकं सामान्यं गुणो वा नास्त्येव, तथापि तदुपलक्षितत्वेन विशेषलक्षितपाचकव्यक्तिषु पाचकशब्दो वर्तते । न हि पाचकशब्दस्य पचनक्रियार्थः । एवं प्रतियोग्युपलक्षितस्य विशेषणत्वाङ्गीकारादेव प्रतीतिविरोधोऽपि नास्त्येव ।

यदुक्तम्, भेदशब्दयोः पर्यायत्वप्रसङ्ग इति, तदपि भिन्नो भेदः इत्यत्रापि समानम् । तथाप्युच्यते, प्रतियोगित्वापेक्षस्वरूपस्य भेदशब्दप्रवृत्तिनिमित्तत्वात् न पर्यायतेति ।

अपरेऽप्येवम् । भेदस्य विदारणात्मकत्वात् स्वरूपस्यैव विदारणात्मकत्वे तदधीनस्यापि तथैव प्रसङ्गात् शून्यतापत्तिरिति, नैवम्, भेदस्य विदारणात्मकत्वेऽपि यस्मात्तस्य भेदव्यवहारः तस्य न तथैव विदारणात्मकत्वम्, न हि सर्वसत्त्वात् स्वस्य भेदव्यवहार इति न तत्र विदारणात्मकत्वम्, अतः उपेक्षणीयोऽयं पक्षः ।

यदप्येतदुक्तम्, भेदस्य भेदान्तराभ्युपगमेऽपि नानवस्थादोषः, मूलभेदव्यवहारस्य भेदान्तरापरिज्ञानेऽपि विरोधाभावादिति । तच्च नैवम्, भेदस्य ज्ञायमानतया व्यवहारहेतुत्वात्, यत्र सत्तया हेतुत्वं बीजाङ्कुरादौ, तत्र नानवस्थादोषः, अत्र त्वाश्रयप्रतियोगिभ्यां भिन्नत्वेन ज्ञातो भेदो भेदव्यवहारहेतुः, अन्यथा तयोर्भेदस्य च भेदान्तरानवेक्षणे वस्तुदर्शनमात्रेण स्वरूपभेदव्यवहारप्रसङ्गः । भेदिनो भेदस्य भेदज्ञाने आश्रयधर्मयोर्भेदज्ञानस्यावश्यंभावित्वात्, तस्याप्येवमित्यनवस्था दुर्निवारैव । यत्तु कैश्चिदुक्तम्— भेदस्य भेदान्तरापेक्षा नास्त्येव, परगतभिन्नव्यवहारहेतुत्वात्, यत् परगतकार्यकारि तत्तथाभूते कार्ये न परमपेक्षते, यथा रूपं रूपव्यवहारे परिमाणं वा मानव्यवहारे, अतो भेदस्य भेदान्तरापेक्षा नास्त्येवेति, तर्हि सिद्धो नः पक्षः । भिन्नव्यवहारः सर्वत्र भेदधर्मयोगित्व इति स्वपक्षं परित्यज्य भेदस्वरूपमेव स्वस्मिन् भिन्नव्यवहारहेतुरित्युक्तं भवताऽपि, तदेवास्माभिरपि साध्यम्, सर्वत्र स्वरूपं स्वस्मिन् व्यवहारहेतुरित्यभ्युपेयम्, लाघवात् ।

अथ रूपस्य व्यवच्छेदे रूपान्तरनिरपेक्षत्ववद्घटादयोऽपि स्वव्यवच्छेदं स्वयमेव कुर्वन्तीति रूपापलापप्रसङ्ग इति, नैवम्, यदि रूपव्यतिरेकेण रूपबुद्धिः स्यात्, तदा रूपापलापोऽपि भवेत्, न हि कदाचिद्रूपमन्तरेण रूपबुद्धिरस्ति, अत्र तु भेदमन्तरेणापि स्वरूपस्य कदाचित् ग्रहणमस्तीति भवतैवोक्तम्, अतो यो धर्मभेदवादिभिः आश्रयोऽङ्गीकृतः, प्रतियोगी वा, तस्मिन्नेवाऽऽश्रये तस्मात् भेदव्यवहारः प्रवर्तते इति किं प्रमाणशून्येन भेदधर्मेण ।

यत्तूक्तम्, स्वरूपभेदवादिभिरुक्तेन दूषणेन धर्मभेदवादो दूषितः, धर्मभेदवादिभिरुक्तेन दूषणेन स्वरूपभेदवादो दूषितः, अतो भेदस्य प्रमाण

तद्विष्णुत्वात् भ्रान्त एव । किञ्च, विवादाध्यासितो भेदो मिथ्या, भेदत्वात्, द्विचन्द्रादिभेदवत् । विवादाध्यासितो भेदो मिथ्या, दृश्यत्वात्, रज्जुसर्पवत् । 'नेह नानास्ति किंचन' इत्यागमाच्च प्रतीयमानस्य भेदस्य भ्रान्तत्वमवगम्यते, प्रमाणाभावाच्च, न हि प्रत्यक्षं भेदग्राहि, सन्मात्रविषयत्वात्तस्य, तन्मूलत्वादेव नानुमानादिकमपि भेदे प्रमाणं इति ।

अत्रोच्यते । 'घटाद्भिन्नः पटः' इति प्रतीतिव्यवहारौ सर्ववादिभिरङ्गीकर्तव्यौ, अतः प्रतीतिसिद्धो भेदः कथमपह्नोतुं शक्यते ? सत्यं प्रतीतिरस्ति, तथापि कारणाभावात् भ्रान्तत्वमिति चेत्, नैवम् । प्रतीतिरेव हि कार्यभूता यथायोग्यं कारणमुपस्थापयति, न हि कारणादर्शनमात्रेण प्रतीतेरपलापो युज्यते, शून्यवादप्रसङ्गात् । तदुक्तं प्रकरणपञ्चिकायाम्– 'कार्यं हि प्रतीयमानं कारणकल्पनायां प्रमाणम्, न पुनः स्फुटावधारितकार्यं कारणानिरूपणयाऽपह्नवमर्हति' इति ।

किंच एतदनङ्गीकारे सति सकलानुमानोच्छेदप्रसङ्गः । पर्वते धूमदर्शनमात्रेऽग्न्यदर्शनमात्रेण धूमप्रतीतेर्भ्रान्तत्वं न साधयितुं शक्यते, अतोऽनुमानोच्छेद एव । अथ धूमस्य अग्निव्याप्यत्वात् अग्नेरभावे सति कल्पहानिरेव स्यात्, अतः कल्पकल्पनमेव वरमिति पर्वतेऽग्निरस्तीति कल्प्येत, तर्हि कार्यमपि योग्येन कारणेन व्याप्तमिति भेदप्रतीतिकार्यदर्शनात् योग्यमेव कारणमनुमास्यामहे ।

ननु शुक्तिकारजतादौ अपि रजतज्ञानदर्शनात् तदनुगुण कारणमपि कल्प्यं इति सर्वत्र भ्रान्तिर्न स्यात्, नैवम्, तथापि कार्यदर्शनाद्योग्यमेव कारणमनुमीमहे एव, किन्तु अबाधितकार्यदर्शनात् कदाचित् पुष्कलमेव कारणमनुमीयते, कदाचित् बाधितकार्यदर्शनात् तद्योग्यस्य कारणदोषादेः परिकल्पनमिति सर्वत्र योग्यकारणानुमानमस्त्येव, अतो न भ्रान्त्यभ्रान्तिव्यवस्थाऽनुपपद्यते एव । तदुक्तम्, 'यस्य [illegible] दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः.' – इति । भेदस्य पदार्थस्य तु न साक्षात् बाधकमस्ति नायं भेदः इति । यौक्तिकमपि बाधकं नास्त्येव, कार्येण एव कारणस्य कल्प्यमानत्वात् ।

यत्तु पश्चादद्वैतज्ञानेन बाधो भविष्यतीत्युक्तम्, तदपि नास्ति, उपनिषदां कार्यशेषतया प्रामाण्यवर्णनात्, तस्मादद्वैतज्ञानजनकत्वासिद्धेः तथाविधबाधा न संभाव्यते । प्रमाणप्रमेयव्यवहारिणा सकलभेदस्य बाधादर्शनेन तात्त्विकत्वमुपपद्यते एव ।

यत्तु प्रत्यक्षं सन्मात्रग्राहि, न भेदग्राहीति, नैतदुपपद्यते । यदि सन्मात्रमेव गृह्यते, तर्हि 'सन् घटः' इति प्रतीतिर्न स्यात् । अथ सत्ता व्यतिरेकेण घटोऽपि नास्त्येव, तर्हि सन् इति प्रत्ययः स्यात्, न 'सन् घटः' इति, सन् घट इति पर्यायप्रसङ्गश्च ।

अथ घटाद्यनुवर्तमानं सत्त्वमेव, अतश्चानुवृत्तमेव प्रत्यक्षम्, व्यावर्तमानत्वात् घटादिरप्रत्यक्ष एवेति, केन प्रमाणेन अनुवर्तमानमेव प्रत्यक्षमिति ? यदिन्द्रियेण गृह्यते अनुवर्तमानं व्यावर्तमानं वा तत् प्रत्यक्षमिति सर्वजनसिद्धम् ।

यत्तु भेदो मिथ्येत्यनुमानम्, तत्र वक्तव्यम्– यद्यत्रामिथ्याभूतस्य द्वित्वस्य चन्द्रे मिथ्यात्वम्, तदा यत्र अमिथ्याभूतो भेदः तेनानैकान्तिको भेदत्वादिति हेतुः, यदि वा सर्वत्र मिथ्याभूतत्वमभिप्रेत्य चन्द्रेऽमिथ्यात्वम्, तर्हि साध्यविकलो दृष्टान्तः, अन्यत्र घटादौ अमिथ्याभूतस्यैव चन्द्रमात्रेऽमिथ्यात्वाभ्युपगमात्, अनुमानान्तरेऽपि तथैव दोषः ( अतो भ्रान्तिभेदवादोऽपि न युक्त इत्यलमतिप्रसङ्गेन ) । प्रनि. पृ. ७०–७५.

● स्वरूपयोग्यत्वरूपं कारणत्वं सहकार्यन्तरसमाधानवच्छिन्नजनकत्ववैशिष्ट्यम् । निमित्तस्य स्वरूपयोग्यस्य फलजनकत्वानियमः इति प्रसिद्धिः । मणि. पृ. ४५.

● स्वरूपव्याक्रियैव पराजिता इति न्यायः । कस्यचिद्विषयस्य स्वरूपे व्याकृते विवरणेन स्पष्टीकृते सति प्रतिवादिनः पराजिता निग्रहः तावतैव भवति । न तत्र स्वातन्त्र्यस्य युक्त्यादेरपेक्षा भवति । इति न्यायार्थः । के.

* स्वर्गादिफलं अपूर्वोत्पत्तेः तत्पालनस्य च प्रयोजकम्, उपादानं तु नास्त्येव इति तस्य अप्रयोजकत्वम्। बाल. पृ. १०७, * स्वर्गादिफलं यागोत्पत्तेः प्रयोजकम्, यागोपादानपालनयोस्तु अप्रयोजकम्। पृ. १०७. * स्वर्गादिफलं रागसिद्धत्वान्न विधेयम्। वि. ४।१।२ वर्णक २.

* स्वर्गादिफलसाधनता यागादिकर्मणाम्। भाट्ट. ६।१।१.

* 'स्वर्गकामः चातुर्मास्यैर्यजेत'। भा. १०।८। २५।५०, * स्वर्गकामः ज्योतिष्टोमेन यजेत। तत्र सवनत्रये ग्रहाः। ग्रहधर्माश्च सर्वार्थाः। ३।६।९।२०, * स्वर्गकाम. ज्योतिष्टोमे उक्थ्यानां ग्रहाणामग्नि सौमरं 'रू' इति निधनं कुर्यात्। २।२।१४।२८, * स्वर्गकामः दर्शपूर्णमासाभ्यां यजेत। ११।४।११२. * स्वर्गकामः पुरुषो यागफलं भजमानो यथा प्रधानभूत. तथा आचार्यः उपनयनफलमाचार्यत्वं भजमानः प्रधानभूत.। रत्न. ६।१।६।२४ वर्णकं २. * 'स्वर्गकामः यजेत' फलसंयोग एवायम्। यागात् स्वर्गो भवतीति। फलमुद्दिश्य यागो विधीयते स्वर्गं यागेन कुर्यादिति। भा. ११।१।१।१,२। याग एव फले विधीयते। भावना सर्वविशेषणविशिष्टा विधीयते। टुपटीका. * 'स्वर्गकाम. यजेत' स्वर्गकामो यागेन स्वर्गं भावयेत् इति वदेतदेयमापद्यते। भा.११।१।४।२४. * स्वर्गकामः। स्वर्गसाधनत्वाभिधानेन प्रार्थयमानः स्वर्गकामोऽभिधीयते। स स्वर्गमभिलषमाणः उपायमन्विष्यति। तस्मात् अनयोरविनाभावात् स्वर्गकाम शब्देन शक्यते तदुपायो लक्षयितुम्। अतः शास्त्रेण यागादयस्तदुपायत्वेन विधीयन्ते। टुप्. ६।१। १।३. * स्वर्गकामाः। सर्वे हि पुरुषाः स्वर्गकामाः। प्रीतिर्हि स्वर्गः। भा. ४।३।७।१५, * स्वर्गकामाय कर्मोपदिश्यते न तु स्वर्गकामः कर्मणे उपदिश्यते 'स्वर्गकामो यजेत' इति। ८।१।१२।२१, * स्वर्गकामस्य अनेक उपकार. चतुर्धाप्रावाद्यवाज्यादिलाभ.। १।१।१।२।१. *-स्वर्गकामस्य आयुरविरामः- कर्त्तायै। बाल. पृ. ३४, * स्वर्गकामस्य, स्वर्गकामेनेष्ट कर्तव्य इति याग्च्छृत तत् साकल्येन अकुर्वत. फलाभावः स्यात्। भा. ११।१।३।१२.

¶ स्वर्गकामाधिकरणम्। स्वर्गकामस्य ज्योतिष्टोमाद्यनुष्ठाने अधिकारः। अधिकारन्यायः। द्रव्यकर्मसंयोगन्यायः ॥

द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः। ६।१।१।१॥

भाष्यम्— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादि समाम्नायते। तत्र संदेहः किं स्वर्गो गुणतः कर्म प्रधानतः, उत कर्म गुणत. स्वर्गः प्रधानत. इति। कुत. संशयः? इह स्वर्गकामो निर्दिश्यते, यजेत इत्यपि। अत्र स्वर्गकामयागयोः सम्बन्धो गम्यते। तस्मिंश्च सम्बन्धे किं यागः साधनत्वेन सम्बध्यते उत साध्यत्वेन इति भवति विचारणा। तत्र यदि स्वर्गकामस्य पुरुषस्य यागः कर्तव्यतया चोद्यते स्वर्गकामेन यागः कर्तव्यः इति स्वर्गेच्छाविशिष्टस्य स सिध्यति इति गम्यते। स्वर्गेच्छा तत्र पुरुषस्य याग प्रति उपदिश्यते। येन तत्र स सिध्यति, नान्यस्येति। यः स्वर्गकामः स शक्नोति पुरुषो याग साधयितुम्। अथ स्वर्गकामस्य कामकर्तव्यतया चोद्यते, ततो यागविशिष्टा कर्तव्यता इति याग. साधकः अभ्युपगम्यते। स चायं उभयोऽप्यर्थः एकस्मात् उच्चरितात् वाक्यात् अवगम्यते। यागो वा कर्तव्यः, कामो वेति। न चैतद् यौगपद्येन सम्भवति। यदा कामो न तदा यागः, यदा याग. न तदा कामः। वचनव्यक्तिभेदात् उपपन्न. संशयः।

तथा इदमपर संदिग्धम्। किं प्रीतिः स्वर्गः उत द्रव्यमिति। यदि द्रव्य स्वर्गः ततः प्रधान कर्म, द्रव्यं गुणभूतम्। अथ प्रीतिः स्वर्गः ततो यागो गुणभूतः, स्वर्ग. प्रधानमिति। कुत. संशयः? नास्त्यत्र कामस्य गुणत्वेन प्राधान्येन वा श्रुतिः। सम्बन्धमात्रं तु अस्य यागेन गम्यते। द्रव्यस्य तु कर्मार्थता समाम्नात.। पुरुषप्रयत्नस्य च फलार्थता। किं तावत् प्राप्तम्?

स्वर्गो गुणतः, कर्म प्रधानतः इति। तत्र एके तावत् वर्णयन्ति। द्रव्यं स्वर्ग इति। कथमवगम्यते? सर्वेषामेव शब्दानां अर्थज्ञाने लौकिकः प्रयोगः अभ्युपायः। तस्मिंश्च लौकिके प्रयोगे द्रव्यवचनः स्वर्गशब्दो लक्ष्यते। कौशेयानि सूक्ष्माणि वासांसि स्वर्गः, चन्दनानि स्वर्गः, द्व्यष्टवर्षाः स्त्रियः स्वर्ग इति यत्तत् प्रीतिमत् द्रव्यं तत्तत् स्वर्गशब्देन उच्यते। तेन सामानाधिकरण्यात् प्रीतिमत् द्रव्यं स्वर्ग इति मन्यामहे। उपमानात् शब्दप्रवृत्तिः इति चेत्, न हि कस्मिंश्चित् अनुपमितो लोके प्रसिद्धः, यस्यैतत् उपमानं स्यात्। तस्मान्नोपमानम्। अतो द्रव्यं स्वर्गः इति। नेत्याह। प्रीतिः स्वर्ग इति। न द्रव्यम्। व्यभिचारात्। तदेव हि द्रव्यं कस्याञ्चिदवस्थायां न स्वर्गशब्दः अभिदधाति। प्रीतिं तु न कस्याञ्चिदवस्थायां नाभिदधाति। तस्मात् अन्वयव्यतिरेकाभ्यां एतदवगम्यते, प्रीतौ स्वर्गशब्दो वर्तते इति। नैतदस्ति प्रीतेरभिधायकः स्वर्गशब्द इति। कुतः? विशेषणत्वात् प्रीतेः। यद् विशेषणं न तत् शब्देनोच्यते। तद्यथा दण्डीति दण्डनिमित्तं पुरुषवचनं। दण्डोऽस्य निमित्तम्, नाभिधेयः। एवमेष न प्रीतिवचनः। प्रीतिसाधनवचनस्तु एष स्वर्गशब्द इति।

ननु स्वर्गशब्दो लोके प्रसिद्धो विशिष्टे देशे। यस्मिन्नोष्णम्, न शीतम्, न क्षुत्, न तृष्णा, नारतिः, न ग्लानिः। पुण्यकृत एव प्रेत्य तत्र गच्छन्ति, नान्ये। अत्रोच्यते। यदि तत्र केचित् अमृत्वा न गच्छन्ति, ततः आगच्छन्ति अशक्नुवन्तो वा, न तर्हि स प्रत्यक्षो देशः एवंजातीयकः। नापि अनुमानात् गम्यते। नान्येन। ननु च अन्ये सिद्धाः केचित् दृष्टवन्तः, ते च आख्यातवन्त इति चेत्, न तत्र प्रमाणमस्ति, सिद्धा एवंजातीयकाः सन्ति, ते च दृष्ट्वा आचक्षीरन् इति। तस्मादेवंजातीयको देश एव नास्ति। ननु च लोकात् आख्यानेभ्यो वेदाच्च अवगम्यते देश एवंजातीयकः स्वर्ग इति। तत्र। पुरुषाणां एवंविधेन देशेन असंबन्धात् अप्रमाणं वचः। आख्यानमपि पुरुषप्रणीतत्वात् अनादरणीयम्। वैदिकमपि स्वर्गाख्यानं विधिपरं नास्त्येव। भवति तु विध्यन्तरेण एकवाक्यभूतं स्तुतिपरम्। यद्यपि केवलगुणश्रवणार्थपरया तादृशो देशः स्यात्। तथापि अस्मत्पक्षस्य अविरोधः, प्रीतिसाधने स्वर्गशब्द इति। तेन देशेन व्यवहाराभावात् कुतस्तस्य अभिधायकः स्वर्गशब्दो भविष्यति।

यदा प्रीतिमत् द्रव्यं स्वर्गः तदा ब्रूमः। 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति (६।१।१।२ सू.)। यागोऽत्र कर्तव्य इति श्रूयते स्वर्गकामस्य। तत्र अवश्यं स्वर्गस्य यागस्य च संबन्धः। तत्र भूतं द्रव्यम्। भव्यं कर्म। भूतस्य च भव्यार्थता न्याय्या, दृष्टार्थत्वात्। न तु भव्यस्य भूतार्थता। तत्र दृष्ट उपकारस्त्यज्येत। कथं पुनरवगम्यते यागः कर्तव्यतया चोद्यते इति। यदा कामस्यापि कर्तव्यता अस्मात् वाक्यात् अवगम्यते। उच्यते। कामस्य कर्तव्यता वाक्यात्, यज्यर्थस्य कर्तव्यता श्रुतेः। श्रुतिश्च वाक्यात् बलीयसी। तस्मादयमर्थः स्वर्गकामो यागं कुर्यात् इति। स्वर्गकामस्य यागः कर्तव्य इति। कर्तव्यश्च सुखवान्। अकर्तव्यो दुःखवान्। कर्तव्य इति च एवं ब्रूते। तस्मात् सुखफलो यागो भविष्यति। स तु यस्येच्छा तस्य सिध्यति, नान्यस्य इति गम्यते। तेन स्वर्गेच्छा यागस्य गुणभूता। सर्वस्यापि कर्मणो द्रव्येच्छा भवति गुणभूता। तया द्रव्यमानेतुं यतते दृष्टेनैव द्वारेण। इह तु स्वर्गसंज्ञकद्रव्येच्छैव नियम्यते। यथैव सा गुणभूता प्राप्ता, तथैव सती नियम्यते। दृष्टेनैव द्वारेण, नादृष्टेनोपकारेण। तेन स्वर्गेच्छया गुणभूतया स्वर्गद्रव्यं प्रति यतिष्यते यागं साधयितुम्। अथापि अदृष्टेन तथापि न दोषः।

टुप्— औपोद्घातिकमेतत्। फलवत्त्वे अवगते कः एतैरभिक्रियते इति युक्तो विचारः। अफलवत्त्वे विचारानुपपत्तिः। यदि च एवं कामशब्दे फलम् अभिधीयते ततो भावार्थाधिकरणे (२।१।२) चिन्ता, किं भावशब्दाः फलसंबन्धिनः उत द्रव्यगुणशब्दा इति। तत्र अपूर्वचिन्ता। तत्र अतिदेशः। फल

सद्भावे च ( तद्विचारात् ) चोदनालक्षण इति विचारः । अयमेव प्रकृतः अध्यायस्य । कथम् ? भेदाभेद– शेषशेषि– प्रयोजकाप्रयोजक– एककर्तृकैः कर्मभि र्योऽधिक्रियते इति विचारस्य अयमेवावसर' । ' किं स्वर्गो गुणतः कर्म प्रधानतः ' इति ( भाष्य ) अयुक्तमिदम् । स्वर्गशब्दो यदि आख्यातेन सम्बध्यते, न कामपदेन । अथ कामपदेन, न आख्यातेन । कामपदेन स्वपदोपात्तेन श्रुत्या अस्य संबन्धः । आख्यातेन पदान्तरोपात्तत्वात् वाक्यम् । श्रुतिश्च वाक्यात् बलीयसी । तस्मात् स्वर्गशब्दः पुरुषविशेषणत्वेन उपक्षीणत्वात् नान्येन संबन्धुमर्हति । यथा राजजातिविशिष्ट. कर्ता राजसूयसाधनं निर्धीयते, राजसूयो वा तदर्थत्वेन । राजजातिर्न साध्या, नापि साधनम्, एव न स्वर्गः । तस्मात् स्वर्गेच्छाविशिष्टः कर्ता कर्मसम्बन्धी । एवं चेत् समाख्यानुपपत्तिः । किंच ' यजेत स्वर्गकाम. ' इति सामानाधिकरण्यात् यागे गुणभूत कर्ता निर्दिश्यते । यथा ' देवदत्त' पचति ' इत्यत्र न देवदत्तार्थः पाक', एवमिहापि अत्यन्तगुणभूत एव कर्ता प्रतीयते । उच्यते । नायमेकान्तो यत् प्रथमान्त गुणभूतम्, प्रधानमपि भवति क्रियायाम् । यथा ' मलिना स्नायात् ' इति । सम्बन्धोऽपि युक्त एव । पदेतरार्थ अवगते अवदार्थोऽवधार्यते, तदुत्तरकाल वाक्यार्थः । तत्र यदि स्वर्गशब्देन द्रव्यमभिधीयते, ततोऽसौ साधनत्वेन तत्कामयमानो यागे साधनांशेनैव संबध्यते । अथास्य प्रीतिरभिधेया, तत. आत्म संबन्धित्वेन कामयमानः स्वर्गकामशब्देन अभिधीयते । तदुत्तरकाल यागेन अभिसंबध्यमानः साध्यांशेनैव संबध्यते । यागस्तु गुणभूत. । एवं द्विप्रकारायां काम नायां स्वर्गो गुणभूत, अथ प्रधानभूत. इति उपपन्न संशय' । पदे पदेतरार्थवाक्यानि निर्णेतव्यानि । राजन्याऽपि सादृश्यम् । न हि कामयोगिनी जातिः । द्विप्रकारः पूर्वपक्ष' । स्वर्गेच्छाविशिष्टस्य यागे कर्तृता, अतद्विशिष्टेन यागो न कर्तव्यः । यथा राजजातिविशिष्टेन राजसूय. कार्य. न अतद्विशिष्टेन, तद्वदत्रापि । एवं चेत् यागस्य उपादेय प्रीतिमत् द्रव्यम् । तद्विषया तु इच्छा अदृष्टविषयद्वारेण उपकरिष्यति । ' यद्यपि अदृष्टेन, तथापि न दोष. ' ( प्रथमसूत्रान्ते भाष्यम् ) इत्यस्मात् ग्रन्थात् अयं द्वितीयः पक्ष अनुमीयते । शब्दानुगुण्या च पूर्वः पक्ष. ( श्रुतिलिङ्गाभ्या इत्यर्थः ) । कथम् ? यजेत इति प्रत्यय: यस्यैव परः श्रूयते तस्य श्रुत्या कर्तृतामाह । अपि च अनिष्पन्नत्वात् यागस्य भाव्यत्वम् । यत् भाव्यं तत् कर्तव्यता प्रतिपद्यते । यत् निष्पन्न तत् करणत्व प्रतिपत्तुं शक्नोति दानादि । अनेन प्रकारेण भाव्यमानो याग , न स्वर्ग. । किमुत यदा प्रीतिमद्द्रव्यवचन एव लोके स्वर्गशब्द', तत. तत्साधनांशेनैव काम्यते । ' यद्यत् प्रीतिमत् द्रव्य तत्तत् स्वर्गशब्देनोच्यते । तद्यथा दण्डी इत्यनेन ' अस्य ग्रन्थस्य सम्बन्धो व्यवहितस्यापि (तद्यथा दण्डी...स्वर्गशब्द इति, यद्यत् प्रीति... तत्तत्स्वर्गशब्देनोच्यते इति क्रमेण ) ।

अत्र ग्रन्थ. । ' यद्यपि केनचित्सुखभाग्यार्थविषयः तादृशो देशः स्यात् तथापि अस्मत्पक्षस्याविरोध' ' प्रीतिसाधनं स्वर्ग इति । ' तेन देशेन व्यवहाराभावात् सुखस्याभिधाता स्वर्गशब्दो भविष्यति ' इति । एकस्य ( सिद्धान्तिनः ) प्रीति. स्वर्गशब्दवाच्या, अपरस्य (पूर्वपक्षिण ) प्रीतिमद् द्रव्यम् । विशिष्टो देश. उभयोरपि अवाच्यः । किं कारणम् ? तस्य अप्रत्यक्षत्वेन व्यवहाराभावः । तेन व्यवहाराभावात् प्रयोगाभाव. । किंतु यस्य प्रीतिरभिधेया तत्साधन च यागः , तेन सा नानुभूयते इति अर्थापत्त्या वाच्योऽपि स कल्प्यते । यथा अपूर्वम् । ननु अस्मिन्नपि देशे शक्या प्रीतिरनुभवितुम् । चन्दनानुलेपनादिभि कृतैः अनन्तर प्रीतिरुपलभ्यते । येषा भोजनादिप्रीति. एषा क्षणिकी । कर्मणा तु अल्पमध्यममहता अल्पमध्यममहत्य एव प्रीतयः । तत्र या प्रीतिः निरतिशया अनुमीयते सा न शीतोष्णादिद्वन्द्वरहिते देशे शक्या अनुभवितुम् । अस्मिंश्च ( मर्त्यलोके ) देशे मुहूर्तशतभागोऽपि द्वन्द्वैर्न मुच्यते । तस्मात् निरतिशयप्रीत्यनुभवाय कल्प्यो

विशिष्टो देशः । चन्दनादिश्च या तु या प्रीतिः चन्दना दीन्येव तस्या उत्पादकानि न यागः । अस्मिंश्च देशे यावत् जङ्गमतिर्यगादि तत् सर्वं प्रीत्यप्रीती अनुभवति । न च वै कर्माणि कृतानि अस्मिन् देशे । अतो ये साधारणे प्रीत्यप्रीती ते स्वभावकृते । अथोच्येत अन्य स्मिन् जन्मनि तैः कृतानि कर्माणि, येन प्रीतिमनुभव- न्तीति । यथा अस्मिन् जन्मनि सर्वाणि न कुर्वन्ति, एव मन्यस्मिन् जन्मनि । अनुभवन्ति च सर्वाणि प्रीतिम् । अतो यदि इयं कर्मजा स्यात् कैश्चिदेवानुभूयेत । अक्रमत यतो न दोषः । तस्मात् स्वर्गशब्दस्य प्रीति रभिधेया । सा च अशक्या विशिष्टदेशादृते अनुभवि तुम् । इति विशिष्टदेशोऽनुमीयते । 'यद्यपि केवल सुखवचनार्थोऽस्या' इति अभ्युपेत्यवादेन अयं ग्रन्थः । यतः स्वर्गशब्देन द्रव्यमभिधीयते । भवता प्रीतिसाम र्थ्यात् विशिष्टो देशः कल्प्यते, तथापि प्रीतिमत् द्रव्य तस्य साधनम् । तस्य देशस्य तु व्यवहाराभावात् स्वर्ग शब्देन अवाच्यता भवतोऽपि । तस्मात् निष्प्रमाणको विप्रमाणोऽपि नास्मत्पक्षे विरुद्धः । यथा च स्वर्ग शब्दो द्रव्यवचन तथोक्तं लोकव्यवहारात् इति ।

'स्वर्गकामस्य यागः कर्तव्यः । कर्तव्यश्च सुखवान् अकर्तव्यो दुःखवान् । कर्तव्य इति वेद ब्रूते । तस्मात् सुखफलो यागो भविष्यति' इति । अयुक्तोऽयं ग्रन्थः । यदा यागो भाव्यः तदा अन्यत् भाव्यता न प्रतिपद्यते । कतरत् वा फलात् आख्यातं दृष्टम्, येन अत्रापि फलमनुमीयेत । अनुमीयमानमपि (फलम्) द्रव्यवचनता प्रतिपद्यते । तस्मात् अस्य कीदृशी वर्णना । यागस्तावत् वस्तुश्रुतिभ्यां (लिङ्श्रुतिभ्यां इत्यर्थ) कर्तव्यत्वं । यश्च कर्तव्यत्वं तस्य लोके कर्तव्योत्तर काल अभ्युदयो दृष्टः । इहापि कर्तव्यत्वात् भवितव्य मपि फलेन । तच्च निरीक्ष्यमाणं प्रमाणाभावात् न किंचिदवतिष्ठते । तस्मात् अनर्थकत्वात् स्वर्गशब्दस्य गेव ज्ञायते । ननु उपरिष्टादवशिष्ट पुरोडाशादि आनयन साधितुं निराकर्तुं वा । उच्यते । स्वर्गस्य लोकशब्द तेषु वर्तिष्यते स्वर्गशब्दवाच्यत्वात् ।

## असाधकं तु तादर्थ्यात् । २ ॥

भाष्यम्— तुशब्देन पक्षो व्यावर्त्यते । तत एतत्तावत् वर्णयन्ति प्रीतिः स्वर्ग इति । कुतः । एवमुक्तं भवता, प्रीतिविशिष्टे द्रव्ये स्वर्गशब्दो वर्तते इति । यद्येवं पूर्वं तर्हि प्रीतौ वर्तितुमर्हति । सा हि न न व्यभिचरति, व्यभिचरति पुनर्द्रव्यम् । यस्यैव प्रीति साधनस्य द्रव्यस्य वक्ता स्वर्गशब्दः तदेव यदा न प्रीति- साधनं भवति तदा न स्वर्गशब्देन अभिधीयते । तस्मात् प्रीतिवचनोऽयम् । यत्तूक्तं दण्डिशब्दवदिति, सोऽपि प्रतीते शब्दात् दण्डे दण्डिनि प्रत्ययमादधाति । अन्तर्गतस्तत्र दण्डशब्दः । स दण्डस्य वाचकः । इह पुनः स्वर्गशब्द एव प्रीतेरभिधाता । प्रीतिवचनश्चात् यागो गुणभूतः प्रीतिः प्रधानम् । कुतः । तादर्थ्यात् पुरुषप्रयत्नस्य । प्रीत्यर्थं हि पुरुषो यतते । तेन न प्रीतिर्यागसाधन इति विज्ञायते । द्रव्यं हि यागसाधनम् । न ऋते द्रव्यात् यागो भवति । यस्मात् द्रव्यदेवताक्रिये यजतिशब्दो वर्तते ।

असत्यामपि प्रीत्यां भवति यागः । यदि च यागो न प्रीत्यर्थो भवेत्, असाधकं कर्म भवेत्, साध यितारं नाधिगच्छेत् । यो हि प्रीत्यर्थं स साध्यते नान्यः । ननु कर्तव्यतया यागः श्रूयते । उच्यते । सत्यं कर्तव्यतया श्रूयते, कामोऽपि कर्तव्यतया अव गम्यते । आह, श्रुत्या यागस्य, वाक्येन कामस्य । न चोभयो, वाक्यभेदप्रसङ्गात् । उच्यते । यद्यपि यागः कर्तव्य श्रूयते तथापि न कर्तव्य । सुखदः कर्तव्यो भवति । दुःखदो यागः । तस्मात् प्रत्यक्षेण अकर्तव्य । प्रत्यक्षेण च दुःखदः । कर्तव्यतावचनात् अनुमानेन सुखदो भवतीति । उच्यते । अनुमानं च प्रत्यक्ष विरोधात् न प्रमाणम् । तस्मात् अकर्तव्यो यागः, यदि न प्रीत्यर्थः । अथ आनर्थक्यपरिहाराय कल्पितेन श्रवणेन फलवचनेन संभत्स्यते इति । उच्यते । तत संबध्यमानोऽपि अविधीयमानो न समीपवचनमात्रेण फलवान् विज्ञायते । तस्मात् अनर्थको मा भूत् इति स्वर्गस्य कर्तव्यता गम्यते । पुरुषप्रयत्नश्च यागविशिष्ट

प्रहरणे प्रस्तरः प्रधानम्, शाखा च प्रस्तरस्य गुणभूता तदा शाखाप्रस्तरयोरनुप्रवेशो न स्यात्। तस्मात् न प्रस्तरे द्वितीयार्थः स शाखायामपि। अतः शाखाऽपि प्रधानम्। अतः प्रस्तरप्रहरणमिव शाखाप्रहरणमपि प्रतिपत्तिरेव नार्थकर्म।

अर्थेऽपीति चेत्॥ १२॥

दर्शे 'सह शाखया प्रस्तरं प्रहरति' इति प्रस्तर-शाखायाः प्रहरणं प्रतिपत्तिः इति सिद्धान्तिना उक्तम्। पूर्वसूत्रे च 'प्रस्तरेण शाखा' इति विभक्तिव्यत्ययेन शाखाया द्वितीयान्तत्वेन प्राधान्यमुक्तम्, तत्र पूर्वपक्षिण आह। 'सक्तून् जुहोति' इति अर्थेऽपि वैपरीत्येऽपि गुणभावेऽपि द्वितीया भवेत् तथा च द्वितीययाऽपि प्राधान्यं न लभ्यते इति चेत्।

न, तस्यानधिकारादर्थस्य च कृतत्वात्॥ १३॥

दर्शपूर्णमासयो. 'सह शाखया प्रस्तरं प्रहरति' इति श्रुतम्। तत्र शाखाप्रहरणं प्रतिपत्तिः इति सिद्धान्तिना उक्तम्। शाखा प्रस्तरेण इति विभक्तिव्यत्ययं कृत्वा प्रस्तरस्य शाखाया द्वितीयान्तत्वेन प्राधान्यं सिद्धान्तिना उक्तम्। तत्र 'सक्तून् जुहोति' इत्यत्र गुणभावेऽपि द्वितीयाया दर्शनात् शाखाया. द्वितीयान्तत्वे स्वीकृतेऽपि गुणत्वमेव स्यात् न प्राधान्यं इति पूर्वपक्षिणः 'अर्थेऽपीति चेत्' इति शङ्किते सिद्धान्ती उत्तरयति। न एतत् सक्तुभिस्तुल्यम्। तस्य सक्त्वादे. अनधिकारात् अन्यत्र विनियोगाभावात् करणत्वेन सक्तवो विनियोक्तव्या भवन्ति इति द्वितीयान्तत्वेऽपि तेषां करणत्वं स्वीकर्तव्यम्। शाखायास्तु वत्सापाकरणादिरूपस्य अर्थस्य कृतत्वात् विहितत्वात् न करणत्वादि अत्र वक्तव्यम्। तस्मात् उपयुक्तायाः शाखायाः प्रहरणं प्रतिपत्तिरेव नार्थकर्म इति सिद्धान्तः। के.

• 'हरणे तु जुहोति०' (४।२।४।१०) इति (भाग एव) प्रक्षेपाभिधानात् होम इत्यापद्यते। था ३।२।५।१३ पृ. ७६३.

• हरणमन्त्रः बर्हिषः, आतिथ्याबर्हिषि संनह्या-ग्नीषोमीयदेशे नीयमाने पृथक् न प्रयोज्य। तन्त्र-देशात् संनद्ध हरणे हि न मन्त्रः। वि. १२।१।२१.
• हरणमन्त्रस्य नावृत्तिः आतिथ्याबर्हिषि संनद्ध अग्नीषोमीयदेशे हरणार्थमाह्रियमाणे। १२।१।२१। ४६–४७. मीको. पृ. ४१२७ 'संनद्धहरणमन्त्रा-धिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्।

• हरितपदस्य स्थाने रक्तपदस्य सौत्रे चरौ बर्हिःस्तरणमन्त्रे ऊहः। ९।३।७।१३ मीको. पृ. १२२६ 'ऊह रक्तादस्य हरितपदस्थाने०' इत्यत्र अधिकरणं द्रष्टव्यम्।

• हरियानिशब्दानां वर्णविशेषगन्धगुणलक्षणानि-मित्तानां अभिश्रुति नोहः। ९।१।१६।४२–४४. मीको. पृ. ६२ 'अभिश्रुति गुणलक्षणार्थाभिवादे०' इत्यत्र अधिकरणं द्रष्टव्यम्।

• हरिवासरे पारणानिषेध. आचारकल्पः प्रति-षेध.। बाल. पृ. २९

☞ हलन्तं महावर्चसमिति न्याय.। यथा– 'राज्यश्रीर्बलशालिन्ता हलन्ता महावर्चसम्। आशाये येषयमेतः कुम्भान्त स्त्रियमन्त.॥' इति। उक्तं च श्रीमद्भागवते तृतीयस्कन्धे नवमाध्याये– 'नाभिहृदा-दिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्त-शक्तेः। रूपं विचित्रमिदमस्य विवृण्वतो मे मा रीरिषीष्ट निगमस्य गिरां विसर्ग.॥' इति। अस्य श्लोकस्य टीका– अम्भसि सतो यस्य नाभिहृदादिहासम्, विज्ञाने शक्तिर्यस्य महत्तत्त्वात्मकस्य चित्तस्य तदभिमानी, अस्य रूपमिदं विस्तारयतो मे निगमस्य अव्यक्तभूतानां गिरा विसर्गं उच्चारणं मा रीरिषीष्ट 'हलन्त महावर्चसम्' इति न्यायेन मा लुप्यतामिति। साहस्री. ४१७.

• हविः अस्तु योग्यं भवति। वि. ४।१।१२.
• हवि. आज्य अनादेशे। सकर्ष. ३।७।२०. • हविः कर्मेण प्रधानम् (देवतापेक्षया)। भा ८।१।१७।३२.
• हवि.। न च यागसम्बन्धात् प्राक् पुरोडाशादीना

देशत्वात् । अपरेण 'गार्हपत्यं प्राचीनमनोऽवस्थितं भवति, तस्य दक्षिणं चक्रमारुह्य अनसोऽपि निर्वपति' इति वचनेन गार्हपत्यस्य पश्चिमदेशः निर्वापदेशत्वेन विहितः । निर्वापस्य हविर्धानशकटात् हविर्धानमण्डपस्थितात् अन्यदेशत्वात् सिद्धिर्न स्यात् । प्रधानवैगुण्यात् यदि हविर्धानशकटं गार्हपत्यस्य पश्चिमे देशे निर्वापार्थं नीयेत तथा सति प्रधानस्य सोमस्य महत् वैगुण्यमापद्येत । हविर्धाने हि समन्तकः सोमः स्थापितः । तादृशं च हविर्धानशकटं हविर्धानमण्डपे स्थापितम् । तदर्थं विगुणं स्यात् । अवैगुण्ये च सम्पादितव्ये प्रधानस्य प्रसङ्गः स्यात् । प्रधानस्य हि प्रसङ्गानुसारेण इतरत् सर्वं कर्तव्यम् । तस्मात् हविर्धानशकटे न निर्वापः इति सिद्धान्तः ।

अनसां च दर्शनात् । १६ ॥

सिद्धान्ते हेत्वन्तरमाह । नहि हविर्धानशकटे द्वे एव किंतु तत्र अनसां प्रथायाः दर्शनात् त्रीणि । तत्र द्वे हविर्धाने महावेद्यां प्रवर्तनीये तृतीयं तु निर्वापार्थं प्राचीनशाखाया प्रावहितात् पश्चिमे देशे प्रवर्तनीयम् । तस्मात्तत्रैव निर्वापः, न हविर्धानयोः इति सिद्धान्तः । के.

• हविर्धाने प्राचीनवंशाग्निसोमस्य प्रणयनं वैसर्जनहोमात्पूर्वं भवति वा । चि. ५।१।१४.

• हविर्धानग्रहणं सामिधेनीनां देशलक्षणार्थम् । भा. ३।७।७।१६.

• हविर्धानमण्डपे द्वे हविर्धानशकटे दक्षिणमुत्तरं च । तत्र दक्षिणशकटसमीपे सोमाभिषवः । उभयोरपि आहवनीयपश्चिमदेशत्वात् सामिधेन्यनुवचने चोदकेन प्राप्ते 'उप यत् सुवन्ति सामिधेनीस्तदन्वाहुः' इति वाक्येन दक्षिणशकटदेशो लक्ष्यते । चि. ३।३।७.

• हविर्धानमण्डपोपस्थानं प्रकृत्या वैष्णव्या ऋचा कर्तव्यम् । न तु वामनवीयस्य कस्यचित् । हिरण्यकेशिन. 'इदं विष्णुः०' अनया कुर्वन्ति, बौधायनास्तु 'दिवो वा विष्णो०' इत्यनया । चि. ३।२।८.

• हविर्धानशकटाभ्यां भिन्ने शकटे ज्योतिष्टोमे इष्ट्यादौ हविर्निर्वापः । १२।१।७।१८–१६. मीको. पृ. १७८६ 'ज्योतिष्टोमे इष्ट्यादौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । • हविर्धानशकटयोः अक्षे पद्रजसा संयुक्तं अञ्जनं प्रक्षिप्यते । पद्रजः– सोमक्रयणीगतपदस्थानीयं रजः । चि. ४।१।१०, • हविर्धानशकटे अवस्थितात् सोमात् द्वादशाहादौ अहर्गणे प्रत्यहं किंचित् सोमभागः उपावहर्तव्यः । तदर्थं पृथक्पृथक् वासः सम्पाद्यम् । तच्च वासःसम्पादनं न मानकाले किंतु उपावहरणकाले एव । उत्तमेऽहनि तु मानवाससैवोपावहरणम् । १०।६।२१–२२.

• हविःप्रत्यभिघारणं पशौ सौविष्टकृतस्याङ्गेषु च अस्त्येव, स्नेहार्थत्वात् । संकर्ष. २।२।१७.

• हविर्भोजो देवताः – 'आग्नेयोऽष्टाकपालः' इति । भा. १०।४।१२।२३.

• हविर्भोक्तृस्वरूपं देवतात्मकम् । सु. पृ. ७५२.

• हविर्भूतस्य मांसस्य पाके नियमः । नि. १०।७।२.

⊠ हविर्भेदात् कर्मणोऽभ्यासस्तस्मात् तेभ्योऽवदानं स्यात् । १०।७।२।३॥

पशौ प्रत्यङ्गं हविर्भेदः इत्यागतम् । हविर्भेदात् कर्मणः अवदानकर्मणः अभ्यासः स्यात् । तस्मात् तेभ्यः अवदाने संकीर्तितेभ्यः हृदयादिभ्यः अवशिष्टेभ्यश्च अवदाने असंकीर्तितेभ्यः अवदानं स्यात् । इति पूर्वपक्षः ।

आज्यभागवद्वा निर्देशात् परिसंख्या स्यात् । ४ ॥

वाशब्दः पूर्वपक्षं व्यावर्तयति । हृदयादिभ्य एकादशभ्य एव अङ्गेभ्योऽवदानस्य नावशिष्टात् । 'एकादश चैतानि पशोरवदानानि' इति हृदयादीनामेव निर्देशात् । 'एकादश चैतानि' इति तु न विधिः प्राप्तत्वात्, नानुवादः आनर्थक्यात्, किंतु एतावदन्यानां परिसंख्या आवृत्तिः स्यात् । तथा च इतराङ्गानां प्रतिषेधः । आज्यभागवत्, यथा गृहमेधीये 'आज्यभागौ यजति' इति आज्यभागव्यतिरिक्तानामङ्गानां परिसंख्या पञ्चमे पक्षे उक्तम् ।

• हविःशब्दः कर्मयुक्तत्या होमयोग्यं द्रव्यं ब्रूते। वि. १०।७।१.

• हवि.शेषभक्षणे प्रतिपत्तिः। वि.३।८।२१.

• हवि.शेषविषयकविचारः। भा. ३।४।१६–३।५।२०.

• हविःसामान्यं देवतासामान्यात् बलवत्। त्यागरूपे कर्मणि हविषोऽन्तरङ्गत्वात्, देवताया उद्दिश्यमानत्वेन बहिरङ्गत्वात्। वि. ८।१।१७. • हवि.सामान्यं देवतासामान्यात् बलीयः। अत एव ऐन्द्रे पुरोडाशे आग्नेयपुरोडाशस्य विध्यन्तः, आग्नेये पयसि च सान्नाय्यस्य विध्यन्तः। भा ८।१।१७।३२–३४.

• हवि.स्वीकारो देवतास्तित्वसाधकः 'अग्निरिद हविरजुषत' इत्यादिः, इति चेन्न, मन्त्राणां स्वार्थे तात्पर्याभावात्। वि. ९।१।४.

• 'हविष्कृत् एहीति त्रिरवघ्नन्नाह्वयति'। अवहननकाले एव अर्थेन हविष्कृदाह्वानं वा। तत्रायमेव समन्वयोऽनूद्यते। केवलं तु त्रिरावृत्तिर्विधीयते। लौकिकी हि लक्षणा। मन्त्रोऽपि च रूपादेव आह्वाने प्राप्तः सोऽपि अनूद्यते एव। चोदितश्च वाक्यान्तरेणावघातः शक्नोति कालं लक्षयितुम्। भा. ३।२।३।६. • 'हविष्कृदेहि इति त्रिरवघ्नन्नाह्वयति' इत्यत्र यदि 'हविष्कृदेहि इति अवघ्नन्' इति सम्बन्धः क्रियेत तर्हि मन्त्रः हन्ति प्रति उपदिश्येत। अथ 'अवघ्नन्नाह्वयति' इति सम्बन्धः क्रियेत तत्र मन्त्रस्य कालं हन्तिः लक्षयेत्। द्वितीयः सिद्धान्तः। ३।२।३।५. • 'हविष्कृदेहीति त्रिरवघ्नन् आह्वयति' या हविः करोति यजमानस्य पत्नी तदाह्वानप्रकाशनसमर्थो मन्त्रः। स तत्रैव विनियुज्येत, अवहन्तिसंयोगस्य कालार्थत्वेनाविरोधात्। अवघ्नन् एतेन आह्वयति इत्येव सम्बन्ध्य रूपादेव प्राप्तं आह्वानकाले मन्त्रमनूद्य त्रिरिति विधीयते अतः अवघ्नन्नित्यस्य स्वकाललक्षणार्थत्वात् नायथार्थं वचनम्, इति यथार्थ एव मन्त्रः। भा. ३।२।३।५. • 'हविष्कृदेहि' इति मन्त्र आह्वानाङ्गम्। ३।२।३।५–९. मीको. पृ. १०२२ 'आह्वानाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम्। • 'हविष्कृदेहि' इति मन्त्रः कस्याञ्चिच्छाखायां सकृत् पठितः कस्यचित् द्विवारं कस्यचिच्च त्रिवारम्। वि. ३।२।२. • 'हविष्कृदेहि' इति मन्त्रोक्ता हविष्कृत् पत्नी एव नाध्वर्युः दैवी वाग्वा। संकर्ष. २।१।११. • हविष्कृत्— देवतासामर्थ्ये या हविः सम्पादयति अवहननादिना सा। वि. ३।२।३. • हविष्कृत् यजमानस्य पत्नी। 'यजमानस्य पत्न्या हविष्कृति दृष्टार्थमाह्वानम्।' भा. ३।२।३।७.

हविष्कृत् सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्थां पशुं प्रत्याहूता सा कुर्यात् विद्यमानत्वात्। १२।२।३।११॥

सवनीयेषु पुरोडाशेषु हविष्कृत् न स्यात्, हविष्कृदाह्वानं न कर्तव्यम्। असौ पशुं प्रति आहूता, पशुमध्यपतिताश्च सवनीयाः। तेषु सैव विद्यमानत्वात् अवहननादि कुर्यात्। सा प्रकृतौ यदि सर्वार्थां अग्नीषोमीयसान्नाय्यार्थां स्यात् तदा इदमुक्तमस्माभिः। अन्यदा तु सवनीयार्थं हविष्कृदाह्वातव्या। कुत्वाचिन्तेयम्। के.

हविष्कृतः अध्रिगोः पुरोऽनुवाक्यामनोतयोश्च आवृत्तिः॥

हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात् स्यात्। ११।४।२०।५७॥

भाष्यम्— अथवा अधिकरणान्तरम्। ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः, तेषु हविष्कृदाह्वानम्। वाजपेये ऋतुपशवः प्राजापत्याश्च, तत्र अध्रिगुप्रैषः। कृष्णग्रीवयोः पुरोनुवाक्या मनोतासूक्तं च। तेषु चिन्ता। किं तस्य तस्य सकृत्प्रयोगः, अथवा आवृत्त्येति। तद्वत्त्वानुग्रहाय सकृत्, इति प्राप्ते, उच्यते। आवृत्तिः स्यादिति। कुतः? कालभेदात्। प्रातःसवने यद्धविष्कृदाह्वानमध्रिगुप्रैषश्च, तस्य कालभेदात् भवते विशेषः। प्रातःसवनीयानां पुरोडाशानामथ हविष्कृत् ऋतुपशूनां चाध्रिगुरिति। तथा कृष्णग्रीवयोः सौम्येन व्यवायात् पूर्वस्य कृष्णग्रीवस्येयं पुरोनुवाक्या मनोता चेति। सर्वत्र कालो भिद्यते। कालभेदात् भवते विशेषः। तस्मादावृत्तिः।

वाक्यायाः मनोतायाः मनोतासूक्तस्य च कालभेदात् भिन्नकल्पत्वात् आवृत्तिः स्यात् । हविष्कृच्च अध्रिगुश्च पुरोऽनुवाक्या च मनोता च तेषां समाहारः इति द्वंद्वे नपुंसकत्वम् ।

अध्रिगोश्च विपर्यासात् । ५८ ॥

अध्रिगो विशेषमाह । अध्रिगोः मन्त्रस्य सकृत्करणपक्षे विपर्यासात् विपर्यासप्रसङ्गात् आवृत्तिरेव । अध्रिगोः प्रैषमन्त्रस्य आश्रुतप्रत्याश्रुतादीनां प्रातःसवने अनुष्ठाने पर्यग्निकरणान्ते विहित उत्सर्गो बाधितः स्यात् । तृतीयसवने करणे च प्राजापत्याध्रिगो पुरस्तात् कर्तव्यानां परस्तात् करणेन क्रमलोपः स्यात् । तस्मात् अध्रिगोरावृत्तिः ।

करिष्यद्वचनाच्च । ५९ ॥

अत्रापि अध्रिगोरेव विशेषमाह । करिष्यत् उच्चारणानन्तरहिंसोत्तरक्षणे अनुष्ठापकं वचनं 'आरभध्वं' 'उपनयत' इति शब्दः यस्मिन् अध्रिगौ स करिष्यद्वचनः । प्रातःसवने अध्रिगौ सकृत् कृते पशुकर्मणा व्यवहितमेव मन्त्रप्रतिपादितस्यार्थस्य अनुष्ठानं स्यात् ततश्च वचनस्य बाधः स्यात् । तस्मात् हविष्कृदाह्वानाध्रिगुप्रैषादीनां आवृत्तिः कर्तव्या इति सिद्धान्तः । के.

※ हविष्कृदाह्वानं तार्तीयसवनिकपुरोडाशेषु सौम्यचरु-आश्विनद्विकपाले च भेदेन न कर्तव्यम् ॥

पशौ तु संस्कृते विधानात् तार्तीयसवनिकेषु स्यात् सौम्याश्विनयोश्चापशुभक्तार्थत्वात् । १२।२।४।१२ ॥

भाष्यम्— तार्तीयसवनिकेषु पुरोडाशेषु तु सौम्याश्विनयोश्च भेदेन हविष्कृत् स्यात् । कुतः ? पशौ संस्कृते (संसृते) विधानात् । पक्वे पशावेते विधीयन्ते । तस्मिन् काले पशुकी हविष्कृत् कृतार्थत्वादपवृक्ता । तस्मादन्या आह्वातव्या ।

योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् । १३ ॥

भाष्यम्— न वा अन्या आह्वातव्या । सैव क्रियमाणत्वात् । ननु कृतार्थत्वादपवृक्ताऽसौ । नापवृज्यते । कुतः ? योगाद्यज्ञाय । यज्ञायासौ पशुबन्धाय, युक्ता आदावेव । न केवलं सा यज्ञाङ्गानि सर्वाणि साधयितुम् । 'कस्त्वा युनक्ति स त्वा युनक्ति' इत्येवमादिना मन्त्रेण यज्ञार्थं युक्ता । तस्या यज्ञविमोके विसर्गो न्याय्यः । मध्ये त्यागः ? कस्याचिदापदि पुनस्तया कदाचित् कार्यं भवेत् । तस्मान्न भेदेनाऽऽह्वातव्या ।

सोम— पूर्वेण समाख्याबलात् पशुपाकपर्यन्तं भवप्रवृत्तत्वात् पाकात् पूर्वमाविषु प्रातःसवनीयमाध्यंदिनसवनीयकेषु प्रसङ्गसंभवेऽपि इह नास्ति प्रसङ्गः, पाकानन्तरमप्रवृत्तत्वात् हविष्कृतः इति पूर्वेणैवास्येव उत्थानात् संगतिः । सूत्रार्थस्तु— तार्तीयसवनिकेषु पुरोडाशेषु सौम्याश्विनयोश्च हविष्कृत् भेदेन न स्यात्, पक्वे पशौ तेषां विहितत्वेन तस्यास्तदानीमप्रवृत्तत्वात् इति ।

वि— 'अस्त्याहुतिश्चरौ सौम्ये नास्ति वा, पशुपाकतः । निवृत्तत्वादस्ति, नैवमनिवृत्ते पुरोस्थितेः ॥' आहूतिः हविष्कृतः आह्वानम् ।

भाट्ट— ऊहचिन्तायामेव तार्तीयसवनिकसवनीयहविःषु सौम्यचरौ आश्विनद्विकपाले च सवनीयपशुपाकोत्तरं क्रियमाणे भेदेन पुनराह्वातव्या, हविष्कृत्समाख्यया तस्या हविष्करणमात्रप्रयोजनकत्वेन वृत्ते पशुपाके तस्या अप्रवृत्तत्वात् । इति प्राप्ते, समाख्याया उपलक्षणत्वात् सहायकरणमात्रार्थे सा । अतः पाके कृतेऽपि आसवनीयपशुतन्त्र तस्याः सत्त्वात् आह्वातव्या । वस्तुतस्तु उपलक्षणत्वे प्रमाणाभावात् हविष्करणार्थत्वेऽपि कृतेऽपि कार्ये पत्नीसंयाजोत्तरमुत्थानविधानात् आसवनीयसमाप्ति तस्या विहारदेशे सत्त्वादुक्त एव प्रसङ्गः ।

मण्डन— 'तार्तीयेष्वपि नैव सा ।' सा हविष्कृत् ।

शंकर— 'सौम्यादावपि सा नैव ।'

* हविष्कृदाह्वानेन सवनीयपशुगतेन पशुपुरोडाशे प्रसङ्गसिद्धिः । (औषधार्थं हविष्कृदाह्वानं पशौ नास्त्येव एषा तु कृत्वाचिन्ता) । वि १२।२।३, * हविष्कृदाह्वानात् प्राचीनापूर्वप्रयुक्त एव दर्शपूर्णमासयोः

वाङ्नियम । ९।१।७, ● हविष्कृदाह्वाने प्रणीतासंबन्धिवाङ्नियमस्य त्याग. । वाङ्नियमस्य च मध्यकालीनाद्गजातापूर्वं प्रयोजक न परमापूर्वम् । ९।१।७.

● हविष्कृदाह्वानाभाव सवनीयपुरोडाशेषु । १२।२।३।११. मीको. पृ ४२४२ 'सवनीयपुरोडाशेषु हविष्कृदाह्वानाभावः' इत्यत्र अधिकरण द्रष्टव्यम् ।

● हविष्कृदाह्वानकाले अन्त्यबीजसंबन्धिनि एव वाग्विसर्गो राजसूये नानाबीजेष्टौ । ११।३।७।१७. मीको. पृ २३१३ 'नानाबीजेष्टौ अन्त्यबीजसंबन्धि०' इत्यत्र अधिकरण द्रष्टव्यम् । ● हविष्कृदाह्वानकाले पशुपुरोडाशसंबन्धिनि, वाग्विसर्गोऽग्नीषोमीये पशौ । भा. ११।३।८।१८. मीको. पृ १२२ 'अग्नीषोमीये पशौ वाग्विसर्ग ■' इत्यत्र अधिकरणे द्रष्टव्यम् ।

● हविष्कृदाह्वानमन्त्रः अवहननकाले पठनीय· । स चाह्वानाद्ग नावघाताङ्गम् । थि· ३।२।३, ● हविष्कृदाह्वानमन्त्र निरम्यपठनीय· । ३।२।३, ● हविष्कृदाह्वानमन्त्र सवनीयपुरोडाशेषु आवर्तनीय, न तु तन्त्र कालभेदात् । ११।४।२१.

● हविष्कृन्मन्त्रस्य सवनगतपुरोडाशेषु आवृत्ति ज्योतिष्टोमे । ११।४।२०।५७–५९. मीको. पृ. ४००१ 'हविष्कृ अभिगो.०' इत्यत्र अधिकरण द्रष्टव्यम् ।

● हविस्त्यागाभावाधान निर्वपणे प्रशेक्तव्यम् । भा. ११।४।१४।४४.

● हस्त निरुक्तिद्वितयम् । मु. पृ. १२८. ● 'हस्तेनावद्यति' पुरोडाशावदाने हस्त करण सामर्थ्यात् । थि १।४।११

● हस्तावनेजनं सर्वशेष 'हस्तावनेनिक्ते' इति । थि. ३।१।१४. ● हस्तावनेजन हस्तसंस्कारार्थम् । भा ३।१।१४।२८.

● हस्तावनेजनाधिकरणम् । हस्तावनेजनादीनां कृत्स्नप्रकरणाङ्गता । ३।१।१४।२४–२५. मीको. पृ. ९३१ 'अनवधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् ।

ई हस्तामलकन्याय । यथा हस्ते स्थित आमलक फल असंदिग्ध दृश्यते, तथा 'तत्त्वमसि' इत्यादिमहावाक्य कर्तृकर्मवासनाभ्यां प्रतिबन्धरहित सत् पूर्व परोक्षतया प्रकाशिते तत्त्वे अपरोक्षतया तत्साक्षात्करणसमर्थ ज्ञान जनयतीति भाव. । उक्तं च पञ्चदश्याम्– 'वाक्यमप्रतिबद्ध सत्प्राक्परोक्षावभासिते । करामलकवद्बोधमपरोक्ष प्रसूयते ॥' इति । साहस्री २८०.

● हस्तसंज्ञा क्षेत्रं संकेत्यते यदा अयमर्थो मया अभिप्रेतः, तदा अयं मया हस्तश्चालयितव्य इति । स यदा तथैव हस्त पुनश्चालयति तदा प्राची व्युत्पत्तिं स्मृत्वा हस्तसंज्ञात पुनरभिप्रायविशेषमवधार्य अर्थमवगच्छति । उपाधिमान् हस्तसंज्ञा । ऋजु. पृ १५१.

● हस्तिनो बाल कलभः । भा. ३।४।४।११ पृ. ९२०.

● हाउवाक्–सामानि त्रीणि अनुगानि । बाल पृ. ७२.

● हाउहोवा–साम अनुगम् । बाल पृ. ७२.

● हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तुम्, न अप्रमितविषयम् । बृहती. पृ २५५.

● हानोपायनाधिकरणम् । ( ३।३।१५।२६ मनूहाद्यधिकरण चेदमेव ) । ( शङ्का ) सुकृतदुष्कृतयोर्हानोपायने यत्र श्रुते, केवलोपायन वा यत्र श्रुतं तत्रोपायनस्य तद्धानान्वयेन निरपेक्षत्वेऽपि, यत्र निर्गुणविद्यायां केवलहान श्रुत 'अश्व इव रोमाणि विधूय पापं' इति, तत्रापि स्तुतिप्रकर्षलाभाय विद्यापेक्षया उपायनशब्दस्यान्वयो माध्यकारैरुक्त । ( उत्तरं ) हानोपायनाधिकरणे स्तुतिप्रकर्षो भाष्यकारै· अनुपदिष्टः केवलहानश्रवणे न तूपायनशब्दान्वये प्रमाणतया । प्रमाण तथाऽवगतम्– गुणविहीन किंचिदुपैति इति हानस्योपायनापेक्षा, गुणविहीनमपि सुकृतदुष्कृत पञ्चकनाथ कविदाश्रयमपेक्षते इति तदपेक्षा च हानुमपनेव । आभरणम् . ३।४।३।११ मनू.

● हारियोजनं अन्त्यदेव ग्रहणम्, तथा परिधयः प्रथमम्, न तयोः संकरः । भा. ४।३।१४।३६, ● हारियोजनं परिधिग्रहणानन्तरं अग्निष्टोमे । ११।३।१५।८६, ● हारियोजनम् । 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति । ११।२।७।३९, ● हारियोजनः ग्रहः अग्निष्टोमे तृतीयसवनान्ते । अत्र सत्याषाढः— प्रहृतेषु परिधिषु सर्वाण्येवाभिद्रुत्य हारियोजनेन चरन्ति । ९।४।४६ ॥ 'उपयामगृहीतोऽसि हरिरसि हारियोजनः' इति द्रोणकलशेन हारियोजनं ग्रहं आग्नीध्रो गृह्णाति । ४७ ॥ तं बह्वीभिर्धानाभिः श्रीत्वा न सादयति ।४८॥ शीर्षसंधि निधाय उन्निष्क्रम्य 'इन्द्राय हरिवतेऽनुब्रूहि, इन्द्राय हरिवते प्रेष्य' इति संप्रेष्यति । ४९ ॥ 'हरिः स्थ हर्योर्धानाः' इति त्रिरुक्त्वा (आमनः शुक्रस्य पाठो पुनः पुनः पूर्वा) वषट्कृते जुहोति (वषट्कारोत्तरं तूष्णीमेव त्रिरुक्तं इति ज्योत्स्ना, प्रागेव इति वैजयन्ती) अनुवषट्कृते पुनः हरति भक्षम् । ५० ॥ तं सर्वे समन्तः प्रतिनिधाय तस्मात् उपहवमिष्ट्वा 'इष्टयजुषस्ते देव सोम' इति विधूनियाकारं धाना भक्षयन्ति । ५१ ॥ तदस्य भक्षयित्वा धानाना निधानि कुर्वन्तो निरवधयन्तः 'आपूर्याः स्थाऽऽमा पूरयत' इत्युत्तरवेद्या नाभौ निदधाय उपयन्ति, 'रय्यै त्वा पोषाय त्वा' इति वा । ९।४।५२-५३ ॥ इति । ● हारियोजनः सवनीयविकारे सोमयागलिङ्गं न कार्यः । भाट्ट. ४।३।१२. ● हारियोजनस्य परिधिप्रहरणोत्तरकालत्वमाग्नेयानां नाह्नता । भा. ४।३।१४।३६, ● हारियोजने मात्रस्तुतोऽपि भक्षप्रतिपादनं ज्योतिष्टोमे । ३।५।१।३० पृ. १००६, ● हारियोजने सर्वे एव मात्रस्तुत्पहिताः भक्षयितारः इति सिद्धम् । भा. ३।५।१।३०.

● हारियोजनादि बर्हिःप्रहरणान्तं कर्म द्वादशाहे आद्येषु नवस्वहःसु एकादशे च न कर्तव्यं किंतु पत्नीसंयाजोत्तरं विरामः कर्तव्यः । अवशिष्टं च कर्म द्वादशेऽहनि पत्नीसंयाजोत्तरं कर्तव्यम् । त्रि. ९।१।१९.

● हारियोजनोत्तरत्वं पत्नीसंयाजानाम् । भाट्ट. ९।१।१९.

● हारियोजनगतसर्वभक्षन्यायः ३।५।१।२७-३० मीको. पृ. १६८९ 'मात्रस्तुतोऽपि हारियोजने०' इत्यत्र द्रष्टव्यः ।

● हारियोजनन्यायः । हारियोजने मात्रस्तुतोऽपि सोमभक्षः । ३।५।१।२७-३०, मीको. पृ. १६४९ 'मात्रस्तुतोऽपि हारियोजने सोमभक्षः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● हारियोजनपरिधिप्रहरणयोः कालार्थः संयोगः नाङ्गाङ्गिभावः । भा. ४।३।१४।३६.

● हारीतादिस्मृतिविशेषाः केचित् कविदेशाविशेषे दृश्यन्ते । ततश्च व्यवस्थया प्रामाण्यमिति चेन्न, अनुमितवेदमूलकत्वेन सर्वसाधारणत्वात् । वि. १।३।८.

● हिंसा च प्रतिषिद्धा । भा. १।१।२।२ पृ. १९.
● हिंसा प्राणवियोगः, प्राणवियोगानुकूलव्यापारो वा । मणि. पृ. ८, ● 'हिंसा हि फलभेदेऽपि भिन्ना तेभ्यः स्वरूपतः । सा हि प्राणवियोगात्मा श्येनसंज्ञाग्निवत् पृथक् ॥' पृ. ८. ● हिंसायाः क्रत्वर्थायाः नानर्थत्वम् । वि. १।१।२.

● हि-शब्दः चार्थे (क्वचित्) । मञ्जु. पृ. १४१. ● हि-शब्दः तथा इवार्थे (क्वचित्) । सु. पृ. ३५७, ● हि-शब्दः । निपातानामनेकार्थत्वात् (१) तस्मादर्थे हि-शब्दः । (२) हि-शब्दः प्रसिद्धार्थवाची । पृ. ४९०. ● हि-शब्दात् अनुवादत्वप्रतीतिः । वि. ३।८।४.

ॐ 'हितं मनोहारि च दुर्लभं वचः' इति न्यायः । इति भारविः, स्पष्टः । साहस्री. ९६१.

● हिरण्मय्यः शमीमय्यो वा स्रुचः संसार्यायाः वरुणप्रघासेषु सिद्ध्यन्ति । भा. २।१।४।१२.

● हिरण्यं अग्नेर्ना तेजः । भा. ८।१।१८।१५.

ॐ हिरण्यमाज्यधर्मं तेजस्त्वात् । ८।१।१८।३५ ॥

'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इत्यत्र कृष्णलगुञ्जाशतपरिमितं हिरण्यं हविः श्रुतम् । तत् हिरण्यं आज्यधर्मं, आज्यस्य उपांशुयाज-

अनेकार्थविधिप्रसङ्गात् कर्मस्थहिरण्यधारणानुवादेन सुवर्णशोभनत्वविधिप्राप्तौ उच्यते पुरुषधर्म इति । कुतः ? 'हिरण्यवाससोर्वर्णो भर्तुस्तावदनर्थकः । कर्मणा सह संबन्धे प्रमाणं तु न विद्यते ॥' प्रकरणाम्नानस्य हि एतदेव प्रयोजनम्, कथं नाम तदङ्गत्वं विज्ञायेत इति । यदि अप्रकरणाधीतस्यापि कर्माङ्गत्वं स्यात् ततः प्रकरणाम्नानं अनर्थकं भवेत् । यतस्तु वेदेनैव प्रकरणाप्रकरणाम्नानविवेकः कृतः । ततोऽवगम्यते नून प्रकरणाधीतानां पुरुषधर्मत्वमिति ।

अङ्गत्वदेवतत्वात् शेषः स्यात् । २१ ॥

भाष्यम्— तुशब्दः पक्षं व्यावर्तयति । न पुरुषधर्मो भवेत् । अग्निहोत्रादीनां शेषः स्यात् । कस्मात् ? अद्रव्यदेवतत्वात् । नात्र द्रव्यदेवतं श्रूयते । तच्छ्रवणात् कार्यं, यदन्यत्, इति परिकल्प्येत । अथ तु द्रव्यदेवतासंबन्धविमर्शितं धारणवचनः संस्कारपरो । संस्कारश्च शेषभूतस्यावकल्पते, नान्यथा । तस्मात् कर्मणा अग्निहोत्रादीनां शेषः । 'सुवाससा भवितव्यम्' इति ।

वा— यद्यपि वासस् निर्दिष्टविधानं तथापि कर्मशेष एव स्यात् । अन्यथा हि फलं कल्प्येत । ननु क्रतुसंबन्धोऽपि कल्पयितव्य एव । सत्यम्, प्रमाणवती हि तत्कल्पना । कर्मणश्च सामान्येन प्रयोजनाकाङ्क्षायां कर्मैव उपतिष्ठते । तेन तत्संबन्धः प्रमाणवान्, न स्वर्गसंबन्धः । एवं च मन्यते, यथा यागदानहोमान् मुक्त्वा नान्यत् प्रधानकर्मत्व प्रतिपद्यते । न चेह यागादित्वमस्ति, देवताद्यभावात् । अतः औत्सर्गिकेन अङ्गत्वेन कर्मशेषत्वम् । अथवा धारणमेतत् श्रूयते । तच्च उत्पत्त्यैव धार्यमाणशेषभूतम् । न च लौकिकस्य निष्प्रयोजनत्वात् संस्कारार्हत्वम् । अतः कर्माङ्गभूतयोः वासोहिरण्ययोः विधिः । अथवा तत एव अनेकार्थविधिदोषात् सति च संभवे बलाद्गुणे विधिरिति विचारणात् हिरण्यधारणं 'हिरण्यं हस्तेन भरति अथ गृह्णाति' 'हिरण्यं हस्ते कृत्वा षोडशिना स्तुवते' इत्येवमादिप्राप्तयविहितं अनूद्य सुवर्णता विधीयते । 'वासः परिधत्ते' इति च एतद्विहिते वाससि शोभनत्वम् । एवं च सूत्रकारेण 'हिरण्यमिति आत्तरूपं प्रतीयात्' इत्यादिपरिभाषणस्य एतदेव मूल्यम् । अन्यथा रजतजातरूपसाधारणे सति हिरण्यशब्दे अन्यतरावधारणमूलं अन्यत् कल्प्यं स्यात् ।

'अद्रव्यत्वात्' इति च (सूत्रे) नात्र द्रव्यं विधीयते, किं तर्हि ? तद्विशेषणमात्रविधानमेतत् । अतश्च यत्र द्रव्यं वचनेन गम्यते यमिति । 'यत्त्वत्र भाष्यकारेण देवताग्रहणं कृतम् । तदुत्सूत्रमयुक्तं च प्रधानं हि जपाद्यपि ॥' अयागानामपि प्राधान्यदर्शनात् न किंचित् देवताग्रहणेनेति ।

वेदसंयोगात् । २२ ॥

भाष्यम्— आध्वर्यवमिति वेदसंयोगः शेषभूतस्य युज्यते । शेषभूतो हि अध्वर्युणा क्रियते, न पुरुषधर्मः । दर्शपूर्णमासादीनां हि कर्मणां साङ्गानामध्वर्युः कर्ता । तस्मादपि कर्मधर्मा एवञ्जातीयका इति ।

वा— कर्माङ्गत्वे च अस्याः क्रियायाः आध्वर्यवसमाख्या विनियोक्त्री भविष्यति । पुरुषधर्मत्वे बाध्येत । यदाऽपि हिरण्यानुवादेन सुवर्णता विधीयते, तदाऽपि तद्विधिरप्रवर्तित्वात् अक्रियात्मकत्वाच्च नैव समाख्या व्याप्रियते इति वेदिकत्वसामान्यं वेदसंयोगस्यार्थः । तेन यो नाम वदेत् लौकिकोऽपि अस्त्येव वासोहिरण्यधारणप्राप्तिः, ततः तदनुवादेनापि शक्यं गुणविधानं इति, सोऽपि व्यावर्तितो भवति ।

द्रव्यपरत्वाच्च । २३ ॥

भाष्यम्— द्रव्यपरश्चात्र भवति निर्देशः, 'सुवर्णं धार्यम्' इति द्वितीयार्थसंयोगात् । द्रव्यसंस्कारश्च कर्मशेषत्वे प्रयोजनवान्, अनर्थकः पुरुषधर्मे ।

वा— पूर्वं धारणस्य स्वाभाविकमेव शेषत्वत्व इत्युपन्यस्तम् । इदानीं तत्रैव उपचयहेतुरुच्यते कर्मत्वनिर्देशात् इति । तत्र हिरण्य इति अप्रत्यक्षदर्शनात् 'द्वितीयार्थसंयोगात्' इति च भाष्यात् नीलान् इतिवत् द्वितीयेयं इति भ्रान्तिर्भविष्यति । कृत्प्रत्ययेन अभिहितत्वात् नात्र कर्मणि द्वितीया उपपन्ना, अपर्यन्तेयम् । द्वितीयार्थस्तु धार्यं इति ण्यत्प्रत्ययेन उक्तः इति द्रव्यपरत्वाभिधानम् । अत एव भाष्यकारेणापि 'द्वितीयार्थ

त्वेन नियता न क्रतुस्मृतिः । अतः पुमर्थता स्वर्गः फलोऽन्यद्वाऽस्तु वाञ्छितम् ॥' तस्मात् पुरुषार्थो धारणविधिः ।

भाट्ट— अनारभ्य 'सुवर्णं हिरण्यं भार्यम्, सुवर्णोऽस्य भ्रातृव्यो भवति' इति श्रुते न तावत् क्रतुगत-हिरण्योद्देशेन सुवर्णत्वविधिः, धारणप्राप्त्यभावेन अनुवादानुपपत्तेः । नापि 'हिरण्यं हस्ते संगृह्य षोडशिनः स्तोत्रमुपाकरोति' इति विहितक्रतुहिरण्यधारणानुवादेन सुवर्णत्वविधिः, विशिष्टोद्देशापत्तेः । अतः भार्यं इति कृत्यप्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात् तदुद्देशेनैव धारणाख्यसंस्कारविधिः । हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादत्वम् । न च एवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः, सुवर्णस्वरूपे आनर्थक्यात्, लौकिकक्रियासाधनीभूतग्रहणेऽपि च तत्सादृश्यात् । सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या स्वर्गार्थवादिकफलकल्पनस्य च आश्रयाभावात् अनुपपत्तेः । परिशेषादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तिः । इति प्राप्ते, न तावत् प्रकरणात् क्रतुसम्बन्धोपपत्तिः, अनारभ्याधीतत्वात् । नापि जुह्वादिवत् अव्यभिचरितक्रतुत्वात्, लोकेऽपि सुवर्णस्यैव व्यभिचारात् । न वा परिशेषात्, श्रुतकर्मत्वान्यथानुपपत्त्या सुवर्णस्य आर्थवादिकफलसाधनत्वकल्पनाया एव प्रसक्तेः परिशेषाभावात् । धारणस्य संस्कारकस्यापि आश्रयापेक्षया सुवर्णस्य तत्त्वेनापि अर्थाद्न्वये बाधकाभावात् । न चैवमपि, तथात्वे धारणसुवर्णोपकरणयोः द्वयोर्भाव्ययोः अपूर्वयोस्तत्त्वयोश्च कल्पने गौरवापत्ते, सुवर्णेऽपि अपूर्वविधित्वप्रसङ्गाच्च । 'अध्वर्युं वृणीते' 'स्वाध्यायोऽध्येतव्य' इत्यादौ तु उभयोरपि दृष्टार्थत्वात् उपगीत्वाभावेन संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेऽपि न दोषः । प्रकृते तु धारणेन सुवर्णं संस्कुर्यात् तेन च तदाश्रितेन फलं भावयेत् इति कल्पने गौरवम् । अतः कृत्यप्रत्यया एवैतत्र भावना । तस्या च आनन्तर्यत्वात् आर्थवादिकफलस्यैव भाव्यत्व न तु सुवर्णस्य, उद्देश्यानेकत्वप्रसङ्गात् । अतः सक्तुन्यायेन ( २।१।५ अधिकरणे ) विनियोगभङ्गात् सुवर्णहिरण्यविशिष्टधारणस्यैव अर्थकर्मतया विधीयते । किंच सुवर्णस्वरूपे आनर्थक्ये यथैव तत्कार्ये क्रतुः, एवं लौकिक्यपि क्रिया । तस्मादपि च नैवानर्थक्यम्, होमकर्मणि बलिहरणादिवत् निर्विषयत्वसम्पादकत्वेन धारणस्यसंस्कारत्वोपपत्तेः । अतः परिशेषाभावात् न क्रत्वर्थत्वम् । न च उभयार्थत्वम्, एकस्यैव विधेः क्रतौ प्रयोजकत्वं अंशान्तरे च प्रधानप्रयुक्तत्वात् अप्रयोजकता इति वैरूप्यापत्तेः । अतः सक्तुवत् विनियोगभङ्गमङ्गीकृत्य धारणस्य आर्थकर्मत्वेन युक्त । न च तथापि वैदिकनियमत्वसामान्यात् क्रत्वङ्गत्वम्, सादृश्येन क्रतूपस्थितौ धर्मातिदेशस्यैव अनुपत्तेऽपि बाधकाभावात् इति वाच्यम् । विधिफलेन उपस्थितेषु अनियमेन सर्वेषु इष्टेषु तदवनिरनिशयरात्स्यापि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्, आर्थवादिकफलस्य स्ववाक्योपात्तत्वेन ततोऽपि शीघ्रोपस्थितिकत्वाच्च । क्रत्वर्थत्वे तु स्वगतेन वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्रतोरुपस्थित्या तदङ्गत्वकल्पने गौरवम् । अत एव विश्वजिन्न्यायादौ न क्रत्वङ्गत्वम् । प्रकृते तु विशिष्टधारणस्य आर्थवादिकमेव फलं इति पुरुषार्थता । वस्तुतः तु— सुवर्णस्य कर्मत्वमेव, तस्यैव तु आर्थवादिकं फलम् । 'तेन' इति पदाध्याहारस्य क्रतुपक्षेऽपि समानत्वात् । न च अत्र आश्रयापेक्षा, विधिरेवम्र्थस्य संस्कारविधिनैव परिहारात् । 'सुवर्णोऽस्य भ्रातृव्यो भवति' इत्यत्र भविष्यदर्थत्वमात्रस्थले तु प्राचीनमतेऽपि अविशिष्टा । स्तुतिलक्षणा, सुवर्णपदे अपूर्वसाधनत्वलक्षणा च तत्राधिका, इति नवीनलाघवमिति । ३।४।१२.

मण्डन— 'पुंसो हिरण्यस्य धृतिः क्रतोर्न ।' ८.

शंकर— 'स्वर्णधारणमेव च ।' (न क्रत्वङ्गम्) ।

* हिरण्यधारणन्याय. (३।४।८) । भाष्यकारादिभिः प्रजापतिव्रतवाक्ये पर्युदासलक्षणमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितं तद्धि कलञ्जभक्षणनिषेध–हिरण्यधारणन्यायेन क्रत्वर्थत्वाद्यनुपपत्तेः उपेक्षितम् । भाट्ट. ४।१।३.

आह, ननु एतदुक्तम्, तस्याभावाद्वयवस्य पक्षपरिग्रहते इति । अत्रोच्यते । नाभावः । प्रत्यक्षा तत्रैकबुद्धिः । सा नहीषु इष्टकासु नावकल्पते । न च अनयत्र संधिर्दृश्यते पुरीषच्छन्नानाम् । तस्मात् पक्वामसंयोगेऽपि एकबुद्धेरुत्पादात् एकमिष्टकाभ्यो व्यतिरिक्तं द्रव्यं अस्ति निधानार्थमग्नेः । यदि वा इष्टकासंयूतिरपि एकबुद्धेरेवावगम्यते । यस्तु एकार्पणे न कृत्स्नार्पणमिति, सत्यम्, संस्यूतौ तत्र विच्छेदः क्रियते । द्विविधानि हि द्रव्याणि स्थावराणि जङ्गमानि च । तत्र स्थावरेषु विच्छेदो भवति यथा वनस्पतौ पर्णे गृहीत्वा कृष्यमाणे न कृत्स्नः कृष्यते स्थावरत्वात्, एवमिदमपि । स्थावरं हीद अग्निद्रव्यम् । तस्मात् सकृदेव प्रोक्षणं विकर्षणं च कर्तव्यमिति ।

टुप्— 'इष्टकाभिरग्निं चिनुते' इति शब्दतस्तावत् इष्टकानां (तृतीयान्तानां) पारार्थ्येनावगतत्वात् तदर्थं प्रोक्षणं न भवति, द्वितीयासंयोगात् अग्न्यर्थं प्रोक्षणम् । (अग्निशब्दश्च उत्पन्नवचनोऽपि प्रोक्षणादिनान्वयेषु तदाधारभूते स्थले लक्षणया वर्तत इति वेदितव्यम् ।) ननु अग्निशब्देन समुदायोऽभिधीयते इत्युक्तम् । उच्यते । प्रत्यक्षेण इष्टकाव्यतिरिक्तः अवयवी उपलभ्यते । न च कालान्तरे पुरुषान्तरे अवस्थान्तरे वा अविपर्यासात् भ्रान्त इति शक्यते कल्पयितुम् । अपि चात्मीयानवयवानपेक्ष्य इष्टकाऽपि अवयविनी भवत्येव । अथोच्येत, इष्टका अपनीय स निदर्श्यतां यदि व्यतिरिक्तोऽस्ति, तस्मादिष्टका एव परमार्थतः सन्तीति । (परिहरति- ) एवं वर्ण्यमाने भवता आत्मीयावयवव्यतिरिक्ता इष्टका निदर्शयितव्या, न च शक्यते (भवताऽपि निदर्शयितुम्) । अपि च इष्टकानामवयवान्तरम्, तेषामपि (अवयवान्तराणां) अन्ये, तेन परमाणुषु प्रोक्षणमवतिष्ठेत । न च शक्याः (ते) प्रोक्षितुम् । तस्मात् पूर्वपक्षिण. प्रोक्षणमेवानर्थकम् । अथ अवयवव्यतिरिक्ता इष्टका अस्ति, ततः अग्निरपि इष्यताम् । यदुक्तं एकेष्टकार्पणेऽपि न कृत्स्नः कृष्यते इति । तदुच्यते । यत्र यत्र द्रव्यान्तरबुद्धिः तत्र तत्र द्रव्यान्तरम् । न यत्र एकस्मिन्नवयवे कृष्यमाणे कृत्स्न. (अवयवी) कृष्यते । (बुद्धिरेवात्र प्रमाणम्, नापकर्षणमित्यर्थ ) । यत्र कृत्स्न. कृष्यते तत्रापि तथा दृष्टम् । यत्र तु एकस्मिन् कृष्यमाणे (स एव) एक. कृष्यते तत्रापि तथा दृष्टम् (न चैतावता अवयव्यपलाप शक्यते कर्तुम्) । न च एकस्मिन् कृष्यमाणे यस्मात् कृत्स्नः कृष्यते तस्मात् द्रव्यान्तरम् । न च द्वितीये कृष्यमाणे द्रव्यान्तर द्रव्यान्तरस्य कारणम् । (किन्तु-) यत्र द्रव्यान्तरबुद्धिर्न विपर्येति (तत्र अवयवे. अवयवी आरभ्यते इति) ।

चोदनासमुदायात्तु पौर्णमास्या तथात्वं स्यात् । २८ ॥

भाष्यम्— अथ यदुक्तं 'य एव विद्वान् पौर्णमासीं यजते' 'य एव विद्वानमावास्यां यजते' इति, नाम आग्नेयादिभ्य किंचिदर्थान्तरम्, तथा इहापीति । उच्यते । युक्त पौर्णमास्या तथाभाव । चोदनासमुदायो हि तत्र कर्म । न च कर्मसाध्य विद्यते । इह तु द्रव्यान्तरमस्तीत्युक्तम् । तस्मात् वैषम्य पौर्णमास्या इति ।

ज्ञा— अग्नौ श्रूयते 'हिरण्यशकलैरग्निं प्रोक्षति' इति । किं प्रोक्षणं सकृदेव स्यात् उत प्रतीष्टकं भेदेनेति । यदि इष्टकाव्यतिरिक्त. अवयवी अग्निशब्दाभिधेयः, ततः सकृत् । अथ इष्टका एव संहता अग्निधारणार्थेन स्थापिताः अग्निशब्देनाभिधीयन्ते, ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यम् (यद्यपि यत्नादिवत् इष्टकासंघ एव अग्निशब्दवाच्य इति पूर्वपक्षेऽपि यद्यपि उक्तम्, न तु संहता इष्टका इति, तथापि संघस्य अमूर्तस्य प्रोक्षणानर्हत्वात् संहतानामिष्टकानां अग्निशब्दवाच्यत्वमुक्तम्) । यत्र एकावयवाकर्षणे अवयवान्तरमाकृष्यते संधिश्च न दृश्यते तत्रैव देवदत्त-घटादौ अवयवी अभ्युपगम्यते । न चेह एकेष्टकाकर्षणे अन्यासामाकर्षणम्, संधिश्चात्र पुरीषच्छन्नानामपि इष्टकानामनुमानेन दृश्यते । तस्मात् नास्त्यवयवी 'पक्वामसंयोगे च न द्रव्यान्तरारम्भ' इति काश्यपीया. । तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् ।

साङ्कर्यम् । न चेदं उत्तरवेदिधर्माणां अग्नौ अतिदेश-कथन संकर्षे विरुध्येत इति वाच्यम् । देशवत् अग्नौ प्रकृतवैशेषिकधर्माम्नानेऽपि अपेक्षितहविर्धानपूर्वदेश-वर्तित्वादिकनियमधर्माणां स्थानापत्त्यविरोधेन उत्तर-वेदितः प्राप्तेरविरोधात् । उत्तरवेद्या तु यावदपेक्षित-धर्मसाकल्यात् न वैपरीत्याशङ्का । अतश्च प्रकृतौ वत्सप्रोक्षणादिधर्माणां अभ्युत्तरवेदिमात्रार्थत्वेऽपि यत्र विकृतौ तदुभयकार्यार्थं उक्तपरिमाणं स्वतःसिद्धभूमिकं तद्बहिःस्थावभूमिकं स्थण्डिलं अग्न्याधारत्वेन समाम्नातं तत्र प्रोक्षणादीनामूहसिद्धिः । संस्थानविशेषोपधायकक्रि-यासाधनीभूततद्द्रव्यतार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभा-वात् न प्रोक्षणादि इति ऊहविचारोपयोगित्वं चास्या-धिकरणस्य । यदि चैवंविधा विकृतिः न समाम्नायते तदा कृत्वाचिन्तया उदाहरणान्तरे वा ऊहोपयोगः अनुसंधेयः । प्रासङ्गिकं वा इदमधिकरणम् ।

मण्डन— ' द्रव्यैकभावात् तद्धर्मधर्माः । '

शंकर— ' नाग्निधर्मः प्रतीतत्वम् । ' ५।१।१४.

● हिरण्यशकलाधिकरणम् । ९।१।८।२६–२८ ॥ न चैवं वण्डुलव्यापारकर्मकत्वस्य पारम्पर्येण प्रधानीभूत-व्रीहिस्वरूपगतस्य प्रतिनीहि मिन्नत्वात् हिरण्य-शकलाधिकरणपूर्वपक्षन्यायेन प्रतिनीहि प्रोक्षणापत्तिरिति वाच्यम् । व्यापकत्वाभ्युपगमेऽपि ' अग्नये वो जुष्टं प्रोक्षामि ' इतिमन्त्रे तद्धाप्रवणेन तद्गप्रोक्षणम् दीयते । अत एव तद्वाक्यस्थनीहिपदे कालत्वानुरूपलक्षणा । कौ. ३।१।४।१० पृ. १५२.

● हिरण्यशकलमहत्त्वेन अभिषवणे अंशोः प्रोक्ष-णम् , तच ऊहेन न प्रतीतत्वम् । वि. ९।१।१८.

सू हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । १०।३। ३।१३ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघार-माघारयति ' इति श्रूयते । तत्र हिरण्यगर्भ० हिरण्यगर्भ-मन्त्रस्य गुणविधिः पूर्वस्य प्रथमस्य आघारस्य गुण-विधि. इत्यर्थः । मन्त्रलिङ्गात् । प्रजापतिवचनोऽयं मन्त्रः । हिरण्यगर्भो हि प्रजापतिः । प्राजापत्यश्च पूर्व आघारः । उत्तरस्तु ऐन्द्रः । तस्मात् मन्त्रलिङ्गात् पूर्वस्याघारस्य गुणः हिरण्यगर्भमन्त्रः इति पूर्वः पक्षः ।

प्रकृत्यनुपरोधाच्च । १४ ॥

प्रकृत्यनुपरोधात् प्रकृतेः प्रकृतिवत् इति चोदकस्य अनुपरोधात् विरोधाभावाच्च ' हिरण्यगर्भः समवर्तताग्रे ' इति मन्त्रः वायव्ये पशौ पूर्वस्याघारस्याङ्गं इति पूर्वपक्ष-सिद्धिः । इतरथा उत्तराघारस्य मन्त्रः अपनीयेत न चापनीतः ।

उत्तरस्य वा मन्त्रार्थित्वात् । १५ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे ' इति मन्त्रः आघारे उक्तः । तत्र पूर्वस्य आघारस्य गुणोऽयं मन्त्रः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । न पूर्वस्याघारस्य गुणः किंतु उत्तरस्या-घारस्य गुणोऽयं मन्त्रः स्यात् । मन्त्रार्थित्वात् । पूर्वस्या-घारस्य प्रकृतावपि नास्त्येव मन्त्रः । इति वायव्ये पशा-वपि पूर्वः आघारो न मन्त्रमपेक्षते । उत्तरस्य तु अस्ति मन्त्राकाङ्क्षा । तत्र प्राकृतं मन्त्रं बाधित्वा अयं वैकृतो मन्त्रो विहितः । तस्मात् हिरण्यगर्भमन्त्रः उत्तर-स्याघारस्य गुणो न पूर्वस्येति सिद्धान्तः ।

विप्रतिदेशात् तद्वृत्तौ विकारः स्यात् गुणा-नामुपदेश्यत्वात् । १६ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघार-माघारयति ' इति श्रुतम् । तत्र तद्वृत्तौ आघारवृत्तौ विप्रतिदेशात् गुणविधेरुपदेशात् ॥ मन्त्रः उत्तराघार-मन्त्रस्य विकारः बाधकः स्यात् । गुणानां उपदेश्य-त्वात् । उपदेशो हि मन्त्रविशेषः अत्र उत्तराघारा-घारे । तस्मादुत्तरस्य आघारस्य गुणविधिरयम् । इति सिद्धान्तः ।

पूर्ववित्प्रामन्त्रत्वदर्शनात् । १७ ॥

वायव्ये पशौ ' हिरण्यगर्भः समवर्तताग्रे इत्याघार-माघारयति ' इति विहितो मन्त्रः उत्तरस्याघारस्य गुण. इति सिद्धान्ते हेत्वन्तरमाह । पूर्वस्मिन् आघारे अमन्त्र-त्वस्य दर्शनात् ' न स्वाहेति करोति, मनसा च आह ' इति स्वरेण अमन्त्रं दर्शितम् । तस्मात् हिरण्य-

तत् कल्पनीयम्, उत्तराघारे तु तत् क्लृप्तम्, तस्य प्रकृतावपि समन्त्रकत्वात् । अतः कल्प्ने नियमादृष्टे मन्त्रविशेषमात्रविधान लघु, इत्युत्तराघारे एव मन्त्रविधियुक्तः ' इति । उक्तं च टुप्टीकायां ' मन्त्रनियमादृष्टमदृष्टं कल्पनीयं पूर्वाघारे, तत्तु क्लृप्तमुत्तराघारे, तस्मिन् सति कल्पयितुं न शक्यते ' इति । रसायनम्. पृ १०३. • कण्ठरथंतरस्य बृहद्रथंतरस्थानापन्नत्वेन तद्गतस्तोमाभिनर्गीरनंशजन्यादृष्टार्थत्वेनेव हिरण्यगर्भमन्त्रन्यायेन ( १०।३।२ ) कल्पनात् तत्रापि धर्मप्राप्त्युपपत्तिः । भाट्ट. ९।२।१८ पूर्वपक्षप्रघट्टे सिद्धान्ती, • कण्ठरथंतरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकत्वेन ऋगन्तरजन्यतत्तदृष्टसाम्याद्गुणाभिधानरक्तिविधानात् तत्तत्संस्कारसमूहप्रयुक्तधर्मप्राप्त्युपपत्तिः । ९।२।१४ सिद्धान्त', • सामन्तरनियमादृष्टभेदात् तन्नियमादृष्टसाधनत्वस्यैव च तद्गतविधौ उद्देश्यतावच्छेदकत्वात् कण्ठरथन्तरे च हिरण्यगर्भमन्त्रन्यायेन तद्भेदाभावात् उक्तस्तावत्प्रधर्माधर्मापत्तिः । ९।२।१४ पूर्वपक्षप्रघट्टे सिद्धान्ती

• हीनस्तोमकेषु यावदर्थं भाष्ट्र नाम निरर्नेषितम्यम् । भा. १०।४।१०।२०.

• ' हीष् ' इति निधन सौभरे काम्य वृष्टिकामस्य विहितम् । चि. ३।२।१३. • हीष्, ऊर्क्, ऊ इति निधनविशेषाणां सौभरे साम्नि एव फलभेदेन व्यवस्था न तु तेभ्य. सौभरात् पृथक् फलम् । सौभराधिकरणम् । २।२।१३।२८-२९.

• हीपाद्विन्यायः ( ९।२।१३ ) । हीपादिन्यायेन गर्भकामवाक्यमात्र-पशुप्रयोजकप्रणयनजनकत्वमवन्धेनैव प्रकरणानुरोधेन पशुदेशेन गोदोहनं विधीयते न तु साक्षात् । भाट्ट. ४।१।२ वर्णक ३ ( पूर्वपक्षे ).

• हुतद्विर्होद्दः शिष्टाचारकल्प्यविधिप्राप्तः — पूर्णयोगमाप्यर्थंकारार्थे अदृष्टार्थे सन्निपत्योपकारकं कर्म मधुभिर्न्यं वैदिकं कर्म । वाल. पृ ८३.

• ' हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः अथ वक्षसः ' अत्र अवदानेन हृदयादिमात्रहविष्ट्वविधानार्थं विधी यते । ततश्च क्रमबोधिका श्रुतिरपि अनुवाद एव, न तु क्रमे प्रमाणम् । भाट्ट. ५।१।१. • ' हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः अथ वक्षसः ' अत्र क्रमः पाठक्रम, न श्रौतः । अथशब्दः श्रुतिरपीयं सापेक्षत्वाद्दुर्बला । टुप्. ५।१।१।१ पृ. १२८९, • ' हृदयस्याग्रेऽवद्यति ' इत्येवमादीनि न यागं चोदयन्ति इति द्वितीयेऽध्याये स्थितम् ( २।२।६।१७ ) । १०।७।१।१.

• हृदयादीनामेव अवदानप्रबन्धितया श्रूयमाणाना हविष्ट्वेन, तदितरावयवाना हविष्ट्वपरिसंख्या । १०।७।२।३-९. • हृदयादीना निष्कर्षणं पशो. निगमनकर्म न आधन्याः । भा. १२।८।६।१३.

• हृदयाद्यङ्गानामेव हविष्ट्वं अग्नीषोमीये पशौ । भा. १०।७।१।१-२. • हृदयाद्यङ्गेष्वपि यथावत् पञ्चावत्तत्वमेव ज्योतिष्टोमेऽग्नीषोमीये पशौ । १०।७।२०।७२-७३. मीको. पृ. १२० ' अग्नीषोमीये पशौ यथायानि० ' इत्यत्र अधिकरण द्रष्टव्यम् ।

• हृदयाद्यवदानमेव पश्वालम्भस्य प्रयोजनम्, शङ्कम्प्रवेध लोहितनिरसनं च शेषप्रतिपत्तिः । चि. ४।१।१२. • हृदयाद्यवदानानि सान्नाय्यावदानप्रकृतिकानि । शा. २।२।६.

☞ हृदयादिन्यायः । अग्नीषोमीये पशौ अवदानेषु एकादशस्य इतरेषां परिसंख्या । पशौ हृदयादीनामेव अवदानप्रबन्धितया श्रूयमाणाना हविष्ट्वेन तदितरावयवाना हविष्ट्वस्य परिसंख्या ॥

हविर्भेदात् कर्मणोऽभ्यासस्तस्मात् तेभ्योऽवदानं स्यात् । १०।७।२।३॥

भाष्यम्— प्रथम हविर्भेद. शब्देन समधिगतम् । इदमिदानीं संदिह्यते, किं येन केनचिदङ्गेन हविषा यागो निर्वर्तयितव्य उत सर्वैरेवावदातव्यम्, अथवा परिसंख्या केनचिदिति । किं प्राप्तम् । सर्वेभ्योऽवदातव्यमिति, अवदानधर्मं अस्मिन् दृश्यते । कुत । हविर्भेदात् । भिन्नानि हवींषि हृदयादीनि । यावदवदाने गृह्यन्ते, अवशिष्टानि च यथाक्रम्या प्रणाड्या परिच्छिन्नानि तेभ्य. सर्वेभ्योऽवदातव्यम् ।

होमार्थं प्राप्नोति । इह तस्य हृदयादिभिः सह-च क्रियते । तेन हृदयादीनि यागत्वेन होमार्थानि भवन्ति, नान्यान्यङ्गानि पशवाङ्गैर्देवतासंबन्धीनि । न च एतस्मिन् प्रयत्ने हृदयादिविषये सति पशवाङ्गैर्देवतासंबन्धोऽन्येषामङ्गानां होमसाधनत्वेनोपपद्यते । हृदयादिष्वपि एकमाङ्गनिपात् गृह्यमाणेषु आङ्गैर्देवतासंबन्ध उपपद्यते एव । तस्मात् अन्यान्यङ्गानि परिसंख्यायन्ते । अपि च अनवदानीयशब्दो भवति 'मातस्नान् अनवदानीयान् गुदमद्धांश्च आजिसृद्भ्यो हरति' इति । यदि परिसंख्या तत्र किंचिदङ्गमनवदानीयं भवति । इतरथा सर्वमवदानीयं स्यात् । अनवदानीयशब्दो नोपपद्यते । तस्मात् परिसंख्येति । ननु शूलगुदाभिप्रायमनवदानीयं भविष्यति । नेत्युच्यते अनवदनीयं हि तत् । अनवदनीयहरणे आजिसृद्भ्यः इति चतुर्थी नोपपद्यते । नहि शूलगुदेन आजिसृतोऽभिप्रेयन्ते । स्यादेतत् परिसंख्यार्थं तत् भविष्यतीति । उक्तमेतत्, न देवताङ्गत्वेन स्वकार्याणि कर्तुं यान्तीति । तस्मात् न शूलगुदाभिप्रायम् ।

अब्राह्मणे च दर्शनात् । ८ ॥

भाष्यम्— इतश्च परिसंख्येति । कुतः ? अब्राह्मणे हि गर्भं दर्शयति । कथम् ? 'ककुभो राजपुत्र, प्राश्नाति भुवगोप.' इति ककुभो मन्त्र दर्शयति । इतरथा यागे प्रवृत्तस्य अदर्शनं स्यात्, सर्वप्रहरणं च भवेत् । निरवदानप्रतिषेधात् । तस्मादपि परिसंख्येति ।

शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् । ९ ॥

भाष्यम् — इतश्च परिसंख्येति । कुतः ? शृताशृतोपदेशात् । शृताशृतोपदेशो हि भवति 'ह्यान्यन्यभिमृशति शृतान्यशृतानि च' इति । यदि न परिसंख्या, सर्वेषां श्रपणं स्यात्, अशृतदर्शनं नोपपद्येत । परिसंख्याने सति हृदयादिभ्योऽन्येषां अयज्ञशेषत्वम् । यथा 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । तेषां तत्र श्रपणं न स्यात् । अशृतदर्शनं चोपपद्यते । तस्मादपि परिसंख्येति ।

शा— 'एकेनापि पशोर्यागसाधनत्वोपपत्तितः । तन्मात्रेणैव यागः स्यात् सर्वैर्वा युगपन्मतेः ॥' नैतदेवम् । 'अविशेषाद्धि सर्वेषां हविष्ट्वमवगम्यते । अवदानवचोभ्यस्तु विशेषोऽत्रावधार्यते ॥'

सोम— पूर्वाधिकरणोक्तसामान्यस्य विशेषपर्यवसाननिरूपणात् संगतिः ।

वि— 'एकेनाङ्गेन सर्वैर्वा यष्टव्यं दशभिर्यजि. ।, एषेव यागसिद्धं, हविषा मेदसोऽन्विते ॥ , एकादशभिरन्येषां परिसंख्या भवेदतः । न विरोधी गम्यमानस्य तद्गतोक्तिश्च योजिता ॥' तस्मात् एकादशभिरेव यागः ।

भाट्ट— प्रदेयभूतावयवश्च नैक एव प. कश्चित् । विशसनादितादर्थ्यग्रहस्य सकलपशुसाधनत्वान्यथानुपपत्त्या हि कल्प्यमानं स्वाश्रयसाधनत्वं अवयविनः सर्वावयवेषु व्यासज्यत्वात् सर्वावयवद्वारेणैव कल्पयितुमुचितम् । अतो विनिगमनाविरहात् सर्वेषामेव साधनत्वावगमात् प्रदेयत्वम् । 'हृदयस्याग्रेऽवद्यति' इत्यादिवचनानि तु क्रमविधानार्थानि । प्रदेयत्वेनैव एतेषु अवदानप्राप्तेः एतेषां क्रमपरत्वात् । अत एव एकादशानामयं क्रमः, अन्येषां तु अनियमः । अथवा 'हृदयस्याग्रेऽवद्यति' इत्यानुक्त्वा 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति' इति श्रवणात् एकादशसु द्विरवदान अन्येषु तु पञ्चावदानसाध्यत्वया निरवदाननियमपरत्वेन सार्थकानि । न तु इतरपरिसंख्यार्थानि । अत एव 'नाभ्यौरवद्यति न शिरसो नानूकस्य नापरसक्थ्योः' इति पर्युदासोऽपि संगच्छते । इति प्राप्ते, यथैव विशसनादिसंस्कारानुरोधात् पशोरवयवप्रकृतित्वं कल्पितादप्यवदानमेव साक्षात् हविष्ट्वमवगम्यते, तथैव 'हृदयस्याग्रेऽवद्यति' इत्यादिवाक्येषु हृदयादीनामेवावदानामेव श्रुतहविः संस्कारकावदानसंभवात् तेषामेव हविष्ट्वप्रतीतेस्तत्प्रकृतित्वमेव पशोरिति न सर्वेषामवयवानां साधनता । अत एव हृदयादिवाक्यानि तेषामवदानसंस्कारविधिद्वारा हविष्ट्वबोधकानि सन्ति इत-

प्राप्तिफलस्योपपादनार्थत्वेन अर्थवत्त्वोपपत्त्योः साध्याकाङ्क्षापूरणात् सूत्रस्य अन्यूनत्वम् । इति सुधा, पृ. ८८ ।

विधिः स्यात् इति भाष्ये अर्थवत्त्वोपपत्तिभ्याम् इति साधनस्य नान्वयो भवति इति, विधिः स्यात् इत्यत्र अपूर्वत्वात् इति हेतुः । अर्थवत्त्वोपपत्तिभ्याम् इति हेतोश्च दर्वीपिठरादेः प्राप्तिः इति साध्यं द्रष्टव्यम् । इति सुधार्थः ।

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य । २७॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय तस्य हेतुत्वेन 'तेन ह्यन्नं क्रियते' इत्युक्तम् । तेन शूर्पेण सह दर्वीपिठरादेरपि प्राप्तिः इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह ।

'शूर्पेण जुहोति' इति विधिः । 'तेन ह्यन्नं क्रियते' इति तस्य स्तुतिः न तु हेतुवादः । शब्दपूर्वत्वात् अन्नकरणत्वे होमसाधनता प्रति हेतुत्वस्य वेदैकसमधिगम्यत्वात् । वेदश्च शूर्पस्य होमसाधनत्वे शूर्पगतं अन्नकरणत्वं हेतुः इत्याह, न तु दर्व्यादिगतमपि । अतः तस्य च दर्व्यादिकस्य अपि अचोदना यतः अन्नकरण तेनतेन होतव्य इति विधेः अभावः । इति कुतूहलम् ।

अन्नकरणतया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वात् शब्देन च शूर्पेण होमकर्तव्यत्वे अन्नकरणत्वस्य हेतुत्वाभिधानात् तस्य च 'शूर्पेण जुहोति' इतिविधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थत्वावगतेः शूर्पस्यैव शब्दविहितत्वात् तद्वदन्नहोमे दर्व्यादेः अचोदना इत्येवं सूत्र भाष्यकृता व्याख्यातम् । इति सुधा, पृ. ८८ ।

एतदेव सूत्रं अन्नकरणत्वस्य होमसाधनतया स्तुत्येन शब्देन चोद्यमानतया इष्टत्वात् दर्व्यादेरकरणत्वात् अचोदना इत्यर्थपरम् । सुधा. पृ. ८९ ।

**व्यर्थे स्तुतिरन्याय्येति चेत् । २८ ॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय 'तेन ह्यन्नं क्रियते' इत्युक्तम् । इदं वाक्यं शूर्पस्तुतिपरं इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । ननु प्रकृष्टान्नसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे इति व्यर्थे प्रकृष्टान्नसाधनत्वरूपेण अर्थेन धर्मेण रहिते शूर्पे विषये स्तुतिः अन्याय्या इति चेत् पूर्वपक्षी ब्रूयात् ।

अर्थस्याभावो व्यर्थम् । अर्थाभावे अव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' (पा. २।४।८४) इति अम्भावाभावः । स्तुत्यवलम्बनस्य अर्थस्य अभावे सति स्तुतिरनुचिता । इति कुतूहलम् ।

शूर्पेऽपि अन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोति इति वार्तिकम् ।

**अर्थस्तु विधिशेषत्वाद् यथा लोके । २९ ॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति विधाय 'तेन ह्यन्नं क्रियते' इति शूर्पस्य स्तुतिः क्रियते न हेतुवादः इति सिद्धान्तोपोद्बलकं सूत्रम् ।

असत्यपि अर्थेऽस्ति स्तुत्यालम्बनकरणत्वं नाम । तदा च शूर्पेण जुहोतीति विधेः 'तेन ह्यन्नं क्रियते' इत्येष शेषो भवति । यथा लोके बलवान् देवदत्तो यज्ञदत्तादीन् प्रवहते इति । प्रकृष्टबलेऽपि बलवत्तमो वर्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते । ये तु देवदत्तात् निकृष्टबलाः तानपेक्ष्य भवति । एवं 'तेन ह्यन्नं क्रियते' इति प्रकृष्टान्नकरणेन सत्त्वतः शूर्पस्य निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति । तस्मात् स्तुतिरेव वाक्यशेषः ।

**यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् । ३० ॥**

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय 'तेन ह्यन्नं क्रियते' इति तस्य स्तुतिः कृता । नात्र हेतुवादः येन दर्वीपिठरादेरपि होमसाधनत्वेन प्राप्तिः स्यात् इति सिद्धान्तिना उक्तम् । इदं सूत्रं तु अभ्युपेत्यवादेन हेतुवादत्वाश्रयेऽपि दोषप्रसङ्ग इति

प्राप्तिपरत्वोपपादनार्थत्वेन अर्थवत्त्वोपपत्त्यो साध्या काङ्क्षापूरणात् सूत्रस्य अन्यूनत्वम् । इति सुधा. पृ. ८८ ।

विधिः स्यात् इति साध्ये अर्थवत्त्वोपपत्तिभ्याम् इति साधनस्य नान्वयो भवति इति, विधिः स्यात् इत्यत्र अपूर्वत्वात् इति हेतुः । अर्थवत्त्वोपपत्तिभ्याम् इति हेतोश्च दर्वीपिठरादेः प्राप्तिः इति साध्यं द्रष्टव्यम् । इति सुधार्थः ।

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य । २७॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय तस्य हेतुत्वेन 'तेन ह्यन्नं क्रियते' इत्युक्तम् । तेन शूर्पेण सह दर्वीपिठरादेरपि प्राप्तिः इति पूर्वपक्ष सूत्रेण प्राप्त तदाक्षेपेन निरस्यन् सिद्धान्त माह ।

'शूर्पेण जुहोति' इति विधिः । 'तेन ह्यन्नं क्रियते' इति तस्य स्तुतिः न तु हेतुवादः । शब्दपूर्वत्वात् अन्नकरणत्वे होमसाधनता प्रति हेतुत्वस्य वैदिकसमधिगम्यत्वात् । वेदश्च शूर्पस्य होमसाधनत्वे शूर्पगत अन्नकरणत्वं हेतुं इच्छति, न तु दर्व्यादिगतमपि । अत तस्य च दर्व्यादिकस्य अपि अचोदना यद्यत् अन्नकरणं तेन तेन होतव्य इति विधेः अभावः । इति कुतूहलम् ।

अन्नकरणतया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वात् शब्देन च शूर्पेण होमकर्मत्वे अन्नकरणत्वस्य हेतुत्वाभिधानात् तस्य च 'शूर्पेण जुहोति' इतिविधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थत्वावगते शूर्पस्यैव शब्दविहितत्वात् तद्वदन्ने होमे दर्व्यादेः अचोदना इत्येव सूत्र भाष्यकृता व्याख्यातम् । इति सुधा पृ. ८८ ।

एतदेव सूत्र अन्नस्वरूपस्य होमसाधनतया कल्प्येन शब्देन चोद्यमानतया इष्टत्वात् दर्व्यादिरकरणत्वात् अचोदना इत्यर्थपरम् । सुधा पृ. ८९ ।

व्यर्थे स्तुतिरन्याय्येति चेत् । २८ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति शूर्पं विधाय 'तेन ह्यन्नं क्रियते' इत्युक्तम् । इदं वाक्यं शूर्पस्तुतिपरं इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते । ननु प्रकृष्टान्नसाधनत्वं यथा स्थाल्यादौ तथा न शूर्पे इति व्यर्थे प्रकृष्टान्नसाधनत्वरूपेण अर्थेन धर्मेण रहिते शूर्पे विषये स्तुतिः अन्याय्या इति चेत् पूर्वपक्षी ब्रूयात् ।

अर्थस्याभावो व्यर्थम् । अर्थाभावे अव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' (पा. २।४।८४) इति अम्भावाभावः । स्तुत्यवलम्बनस्य अर्थस्य अभावे इति स्तुतिरनुचिता । इति कुतूहलम् ।

शूर्पेऽपि अन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोति इति वार्तिकम् ।

अर्थस्तु विधिशेषत्वात् यथा लोके । २९ ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' इति विधाय 'तेन ह्यन्नं क्रियते' इति शूर्पस्य स्तुतिः क्रियते न हेतुवादः इति सिद्धान्तोपोद्बलकं सूत्रम् ।

असत्यपि अर्थेऽस्मिन् स्तुत्यालम्बनकरणत्वं नाम । तदा च शूर्पेण जुहोतीति विधेः 'तेन ह्यन्नं क्रियते' इत्ययं शेषो भवति । यथा लोके बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते इति । प्रकृष्टबलेऽपि यज्ञदत्तो यदि मार्गो न सिंहः शार्दूलो वा अपेक्ष्य प्रयुज्यते । येन तु देवदत्तात् निकृष्टबलाः तावदेव भवति । एवं 'तेन ह्यन्नं क्रियते' इति प्रकृष्टान्नकरणेन स्थाल्या शूर्पस्य निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति । तस्मात् स्तुतिरयं वाक्यशेषः ।

यदि च हेतुरवतिष्ठेत निर्देशात्, सा-
दिति चेदव्यवस्था विधीनां स्यात् । ३० ॥

वरुणप्रघासेषु करम्भपात्रहोमेषु 'शूर्पेण जुहोति' ~ शूर्पं विधाय 'तेन ह्यन्नं क्रियते' इति तस्य स्तुतिः कृता । नायं हेतुवादः येन दर्वीपिठरादेरपि " तेन प्राप्तिः स्यात् इति सिद्धान्तिना उक्तम् । इदं तु अभ्युपेत्यवादेन हेतुवादत्वेऽपि दोषप्रदर्श

करणस्य समनन्तरं अभ्यर्हितपूर्वे ) विरोधाधिकरणाभ्युच्चय— (१।३।२) हेतुभूतहेतुदर्शनपरस्य स्वातन्त्र्येणापि अप्रामाण्यापादनशक्तिप्रतिपादनपरस्य च विरोधाधिकरणप्रकारत्वात् न तेन पृथक् सङ्गत्यपेक्षा । सोम. १।३।४.

* ' हेतुमति च ' ( पा. ३।१।२६ ) प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति । सि. कौमुदी.

* हेतुदर्शनाद्यः धर्मे स्मृतिद्वारा प्रमाणम् । वि. १।२।३.

* हेतुवन्निगदः अर्थवादः ' शूर्पेण जुहोति ' 'तेन ह्यन्नं क्रियते ' इति । बाल. पृ. ५०. * हेतुवन्निगदः ' स वै मुनामैराग्रेऽभिधारयति ततो हि प्रथमामाज्यभागौ यक्ष्यन् भवति ' इति । वा. ३।७।१।५, * हेतुवन्निगदानां अर्थवादत्वमुक्तम् । ३।६।७।१७ पृ. १०५२.

▣ हेतुवन्निगदाधिकरणम् । हेतुवत् निगद्यमानमपि वाक्य स्तावकमेव ॥

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् । १।२।३।२६ ॥

भाष्यम्— अथ ये हेतुवन्निगदाः 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते ' इत्येवमादयः । तेषु सन्देहः, किं स्तुतिस्तेषां कार्यमुत हेतुरिति । किं प्राप्तम् ? हेतुः स्यादुपकरणं होमस्य । ननु अप्रसिद्धे कार्यकारणभावे न हेतुव्यपदेशः । सत्यमेवं लोके, विज्ञायिष्यते तु वचनेन वेदे । शूर्पेण होमे कर्तव्येऽयमुपकरण हेतुरित्युपदिश्यते । किं प्रयोजनम् ? अन्यदपि दर्वीपिठराद्युपकरण यत् तेनापि नाम कथं होमः क्रियेतेति । कुतः ? तस्याप्यन्नक्रियासामर्थ्यत्वात्, शक्यते च तेनाप्यन्नं कर्तुम् । एतद्धि क्रियते स्तुत्यते । न हि वर्तमानकालः कश्चिदस्ति, यस्यार्थं प्रतिनिर्देशः । हेतौ च श्रुतिः शब्दः, स्तुतौ लक्षणा । यदि च दर्वीपिठरादि न साक्षादन्नं करोतीति नाप्युपकरणमित्युच्यते । व्यर्थं तस्मिन् शूर्पस्तुतिरन्यथिका स्यात् । शूर्पमपि हि न साक्षादन्नं करोतीति तेन विनाऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ।

वा— इह ये हेतुवन्निगद्यन्ते हिशब्दादिभिर्न च परमार्थहेतवस्त उदाहरणम् । तत्र यदि तावद्धेतुत्वं विधीयते ततः पूर्वेणैव गतम् । यदिह हेतुत्वं तच्छूर्पं होमसम्बन्धं प्रति न चाविहितोऽस्त्यस्तीति कस्य हेतुरुच्यते । अथ भूतानुवादमात्रं तत् चातुर्वेद्यपि इत्यवगतमिन्यनारब्धव्यमेतत् । उच्यते । न तावदनेनैव वाक्येन हेतुत्वं विधीयते । न च भूतानुवादमात्रं किं तर्हि हेतोः प्रसिद्धिपूर्वकत्वात्सिद्धवदुपदिष्टस्य वाक्यार्थसिद्ध्यर्थमित्थं तथाऽर्थापत्तिलभ्याद्वचनात्सिद्धिः । याऽपि चार्थवादाकाङ्क्षा कस्मादिति साऽप्यनेनैव हेतुना निवर्तते इति मन्यते । अथाप्यर्थवादत्वं तथाऽपि तदन्तर्नीतहेतुत्वमेवेति सर्वोपकरणविषयं विज्ञायते ततश्च हेतुरप्यस्तीति पूर्वः पक्षः । सम्बन्धस्य च विधेयत्वात्तद्गतमेव हेतुत्वं होमस्येति वदति । ' नन्वप्रसिद्धे कार्यकारणभावे ' इति । केचिदाहुः । कार्यकारणयोरेवानुमानम् । तथा च दर्शनेन्द्रियसामर्थ्येत्यत्रापि वक्ष्यति । तदयुक्तम् । अकार्यकारणभूतानामपि कृत्तिकादीनां अविरोद्धतयोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् । अतो गम्यगमकत्वस्यैव तल्लक्षणत्वात् मन्यते । ननु सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम् । सत्यम् । अन्यस्मिन्नेव तु सम्बन्धे सति पश्चात्प्रसिद्धमन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति । यद्वा साकल्यभिप्राययोरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन साऽवभूता तथैव हेतुता । अथ चोदाहृतविषयहेतुलक्षणमेतत् ।

अविनाभावो ह्यनेककार्यकारणस्वस्वामिसहचरभावादिप्रभेदभिन्नः, तत्रोपकरणता होमे हेतुत्वेनोच्यमाना सम्बन्धान्तराभावात् कारणत्वेन स्यात् । तदप्रसिद्धं तस्मान्न हेतुव्यपदेशः । सत्यं लोके हेतुव्यवहारकालान्तरप्रथमप्रमाणान्तरेण सम्बन्धप्रसिद्धिरपेक्ष्यते वेदे तु हिशब्दप्रतिपादितहेतुत्वान्यथानुपपत्त्या संबन्धाभिधायि दृष्टान्तवचनं कल्प्येत यद्यदुपकरणं तेन तेन जुहोतीति, तेन

चोपपन्न हेतुत्वम्। 'किं प्रयोजनम्' इति। यदि न हेतुत्वमिष्येतेत्यनेनाभिप्रायेण। अपरस्त्वाह व्यासो भिद्यमाना सर्वाङ्गसाधनसाधनको होमः सिद्धो भवति। 'कुतः' इति। स एव सिद्धान्ताभिप्रायः। अथवा कुतो दर्विपिठरादेः साधकतमत्वम्। इतरस्त्वाह अग्न-क्रियायां तावत्तस्यार्थवत्ताऽस्ति तावन्मात्रं वाऽऽश्रयिष्यते। 'शक्यते च तेनापि' इति। उपपत्तिशब्दस्यार्थः। पूर्वेण तु समानार्थता गम्यते। तेन विवक्षा। शक्त्यभिप्रायमेतत्। यदेव हि तदुपयोगिमात्रं तदेव शक्यते कथञ्चित्साधकतमत्वेन विवक्षितुम्। अथवाऽर्थवत्त्वं करणविभक्तिनिर्देशालम्बनमुपपत्त्या पुनर्वर्तमानापदेश-स्य हेतुत्वाभिधानात्तादृशस्य होमं प्रत्यनुपपत्त्याशङ्क-योपपत्तिं वदति। शक्यते च तेनेति। तत्र चोदयति। एतद्धि क्रियत इत्युच्यते तत्कथं शक्यत इत्यभिधीयते। वर्तमानक्रियत्वासंभवादित्युत्तरम्। यद्वा स्वयमेवा-ऽऽशङ्क्य परिहरति। 'यदि च न दर्विपिठरादि' इति। उभयोः परामर्शः। साधकतमत्व-वर्तमानत्वे चेत्तत्र न विद्येते शूर्पेऽपि तथैवेति स्तुतिर्न स्यात् तेन यथा तत्र स्तुत्यर्थः कथञ्चित् विद्यते तथा मम हेत्वर्थं इत्यविशेषः। 'हेतौ च श्रुतिः' इत्यादि, अर्थवद्वाक्यसंबन्धिशेषपाठस्ते द्रष्टव्यम्। 'स्तुतौ लक्षणा' इति। अन्नकरणत्वेन सर्वजनाभिमतेन प्राशस्त्यं लक्ष्यते। 'शूर्पेण' इति चास्मिन् पक्षे नित्यानु-वादोऽन्नकरणसामान्येनैव प्राप्तस्य। इत्थं वा सूत्रगम-निका। तदर्थवत्त्वं तादर्थ्यात्प्रयोजनवत्त्वमुप-पत्तिरित्यप्रसिद्धम्, संबन्धोऽपि कल्पनिकवाक्याश्रय-णात्। तस्माद्धेतुः।

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य। २७॥

भाष्यम्— न त्वेतदस्ति, शब्दपूर्वकोऽयमर्थोऽन्न-करण हेतुरिति। शब्दश्चान्नकरण शूर्पहोमे हेतुरित्याह। न च दर्विपिठरहोमे, तेन शब्दपूर्वं शूर्पम्, न च दर्वि-पिठरादेश्चोदना।

वा— शूर्पेणेति तावत्करणविभक्तिश्रवणेनावरुद्धो होमो नानुमानिकैर्दर्विपिठरादिभिः सह वाधविकल्पसमु-च्चयान्प्रतिपद्यते। होमश्च तेन निराकाङ्क्षीभूतो नान्य-स्यार्थयते। अनुत्थितायामेव च दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवच्छ्रुत्यनुमानं प्रतिबध्नाति। तेन ब्रवीति— 'अचो-दना च तस्य' इति। हेत्वपदेशश्च स्तुत्यैवोपपद्यमानः सन्नश्रुतदृष्टान्तकल्पनायै प्रभवति। शूर्पश्रुतिश्च विष्णुदेश-पातिन्यनन्यप्रयोजना विस्पष्टा च सती परित्यक्तुं न युज्यते। तस्माद्यद्वाऽन्नकरणत्वादित्येव कर्तव्य इत्यनेना-पेक्षितत्वाल्लक्षणयैतत्प्रतिपादयति प्रशस्तत्वादिति। अथ-वाऽन्नकरणत्वादिति श्रुतिवृत्तमेव। तत्र यथाश्रुतं विष्णु-देशो हेतुतामप्रतिपद्यमानः तदनन्तराकाङ्क्षितार्थोपप्लुत-हेत्वपेक्षयाशास्त्यहेतुत्वधार्यते, अन्नकरणत्वात्प्रशस्त इति। कल्पनाद्वयेऽपि च लोकप्रसिद्धदृष्टान्ताभावादश्रुतवचा-क्यानुमानप्रसक्तो भविष्यति। सिद्धं हि प्रशस्तानां कर्त-व्यत्वमन्नकरणानां च प्रशस्तत्वमिति। अचोदना च तस्येति व्याख्यान्तरम्। तत्र हि यद्यदन्नकरणं तच्चोद्यते न च दर्विपिठरादीनां करणता साधकतमस्य पाकादेः करणत्वात्। एवं चोत्तरसूत्रमापतति।

व्यर्थे स्तुतिरन्याय्येति चेत्। २८॥

भाष्यम्— इति पुनर्यदुक्तं तत्परिहर्तव्यम्।

वा— यत्पुनः शूर्पेऽप्यन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तं किं तत्राभिधीयते।

अर्थस्तु विधिशेषत्वाद् यथा लोके। २९॥

भाष्यम्— अस्मत्पक्षेऽर्थोऽस्ति। वाक्यशेषो हि स विधेस्तदा भवति। संवादश्च स्तुतिवचनत्वेन, यथा वयं शूर्पेणान्नं क्रियमाणं जानीमः, तथा शूर्पेणान्नं क्रियते इत्येव गम्यते। तदा चावर्तमानं स्तोतुं वर्तमानमित्युप-दिशति। त्वत्पक्षे एष दोषो यस्य ते हेतुविधिः। विधौ हि न परः शब्दार्थः प्रतीयते। न च वर्तमान-मुपदिशन् वेदः शक्यमर्थं विदध्यात्। अस्मत्पक्षे तु एष परशब्दः परत्र वर्तते। यथा लोके 'बलवान्देवदत्तो यज्ञदत्तादीन् प्रसहते' इति। प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वाऽपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलास्तानपेक्ष्य भवति। एवं तेन

हेतुत्वादस्य तद्गतमेवाप्रकरणत्वं वक्तव्यम् । सन्निवेशश्च तदर्थान्तरमेव तद्गम्यते । लोकेऽपि च य धर्मिणं प्रतिज्ञाय यो हेतुरुपदिश्यते स प्रथमं तावत्तद्गतविशेषात्मनैव प्रतीयते । तदनन्तरमस्य तु साध्यसाधनानुगमाभावात्सामान्यमात्र विवक्षितमिति दृष्टान्तप्रयोगवेलायामेवावधार्यते, येदहेतूनां पुनर्न सामान्यात्मना साध्यसम्बन्धोऽवगतो न विशेषात्मना सोऽधुनैवार्थापत्त्या कल्पनीय । तत्र विशेषस्योपादानात्सामान्यप्रसिद्धेश्च तदतिरिक्तनिमित्तस्यासंभवाद्गुपात्तविशेषमात्रोपसंहृतान्यथानुपपत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तद्कल्पनं हि हेतुनिर्देशः श्रुतो विरुध्यते । यदि दर्विपिठरादिगताग्निकरणत्वद्धोमसम्बन्धाविनाभावो न कल्प्यते । न किंचिच्छ्रुतं दृष्टं वा नावकल्पते । तस्मादीदृशं दृष्टान्तवचनं कल्प्य यद्यच्छूर्पाद्यक्करणं तेन तेन जुहोतीति । तदेतद्विशेषदृष्टमनुमानम् । लोकेऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते नाग्निमात्रम् । यथा च गमनं गोशब्दव्युत्पत्तिनिमित्तत्वेन उपादीयमानं सास्नादिमत्सामान्यमन्वयव्यतिरेकाभ्यां तद्गतमेव निमित्तं प्रतिपद्यते न गन्तृमात्रविषयमिति गोशब्दस्येवं तथा तथा शूर्पगतामकरणोपदेशात्तत्प्रयतहेतुत्वप्रसङ्ग । तथैवावगम्य स्यात् । यत्तदन्नकरणसमर्थं शूर्पं तेन तेन होतव्य न दर्विपिठरादिग्रहणम् । यथा चलन्तुपपन्नोऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपपन्नतो न दहेत न गत्क्वादयो वल्गुपपन्नाता दहन्ति । तस्माद्यथा । यदि पुनः शूर्पगताग्नकरणव्यतिरेकेण महासामान्यविषयत्वे ततो यद्गृहीतं तस्य तस्य का विद्यमानिमित्तता नियत इत्यनवस्थितत्वाद्धोमाश्रितत्र यथाश्रुतानुवाद सामर्थ्यमन्नकरणशब्द । तस्मादन्नहेतुत्वेन स्तुतिरत्रमेव यथेति ।

शा— एवं आनर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्च अर्थवादा विचारिताः । इदानीं हेतुप्रतियोगिनो विचार्यन्ते । एवं श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति । तत्र संशय किं शूर्पेण होमे कर्तव्ये अन्नकरणता हेतुः उत अर्थवाद इति । तत्र हि शब्दश्रुत्या हेतुत्व गम्यते, लक्षणया प्राशस्त्यम् । अनर्थकप्रायश्च अर्थवाद । हेतुस्तु अर्थवान् । कः पुनरर्थो हेतौ ? येन येन अन्न क्रियते शूर्पादन्येनापि दर्वीपिठरादिना तेन तेनापि होमसिद्धि हेतौ प्रयोजनम् । कथमप्रसिद्धाया व्याप्तौ हेतुत्वव्यपदेशः ? अत एव हेतुव्यपदेशात् व्याप्तिमन्तरेण अनुपपद्यमानात् व्याप्तिवचनं कल्प्यते, येन येन अन्न क्रियते तेन तेन होतव्यमिति । तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धे 'शूर्पेण जुहोति' इति अस्यानुवाद । तेन ईदृशमिदं वाक्यं श्रुतानुमितैकदेशनिगमं शूर्पस्य होमसाधनत्वं अन्नकरणत्वात् हेतो, अन्न शूर्पं अन्यत् वा यत् अन्नकरणं तेन होतव्यमिति पूर्वः पक्षः । सिद्धान्तस्तु शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते, न तत् आनुमानिकैर्दर्वीपिठरादिभिर्विकल्पितुमर्हति । न च वेदेन उच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते, येन स्यात् तत्र प्रमाणत्वात् अर्थवादस्तु अपेक्षितः प्ररोचनार्थत्वेन । तस्मादर्थवादत्वम् । एवं च अप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति । 'क्रियते' इति च अवर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति । नहि भूते भाविनि वा तादृशी प्रीतिः यादृशी वर्तमाने । तेन हेत्वर्थत्वेन लक्षणया वर्तमाननिर्देशो युक्त । विध्यर्थत्वे तु निष्प्रमाणक लक्षणाश्रयणम् । तस्मात् अर्थवाद एवम् ।

सोम— यदुक्तं सर्वेषां विधिनिगदानां स्तुत्यर्थत्वमिति, तदयुक्तम् । केषुचित् हेतुविधिसंभवात् इति पूर्वाधिकरणोक्ताऽऽक्षेपेण प्रवृत्ते. सगतिः । सूत्रार्थस्तु— 'तेन ह्यन्नं क्रियते' इति हेतुविधिः स्यात्, तथा सति दर्व्यादीनामपि होमसाधनत्वलाभेन अर्थवत्त्वात् हिशब्दश्रुत्युपपत्तेश्च ।

वि— 'तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुति ।, दिना श्रुता हेतुताऽत्र शूर्पमन्यच्च साधनम् ॥, शूर्पसाधनता श्रौती नाश्रौते सा विकल्प्यते । अतो निरर्थको हेतु स्तुतिस्तस्मात्प्रवर्तिका ॥'

भाट्ट— चातुर्मास्ये 'शूर्पेण जुहोति' इति शूर्पकरणकहोमं विधाय श्रुते 'तेन ह्यन्नं क्रियते' इत्यर्थवादे न स्तुतिलक्षणा। अपि तु होमसाधनत्वे साध्ये अन्नकरणत्वस्य हेतुत्वं विधीयते। न ह्यत्र पूर्ववत् मन्यत्र इव किञ्चित् कल्पनीयमस्ति, हिशब्दश्रुत्यैव हेतुत्वाभिधानात्। हेतुश्च व्याप्तिमन्तरेणानुपपन्नः यद्यदन्नकरणं तेनतेन होतव्यमिति व्याप्तिवचनं कल्पयति। ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेर्होमसाधनत्वप्रतीतेः विधौ शूर्पपदमुपलक्षणम्, अवयुत्यानुवादो वा। यद्वा— तच्छब्देन शूर्पस्यैव परामर्शात् तद्गतमेवान्नकरणत्वं हेतुः। तेन च विशिष्यैव व्याप्तिकल्पनात् अन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिरयं शूर्पपदमन्यथा नेयमिति पूर्वः पक्षः। सिद्धान्तस्तु— क्रियते इति लडन्तनिर्देशात् वर्तमानान्नकरणत्वस्य हेतुत्वं वाच्यम्। न च होमकाले अन्नकरणत्वं सम्भवति। अतो लटः भूतभविष्यत्कालान्तरलक्षणा विधौ तथाप्यावश्यकी। यद्यपि चेयं प्राशस्त्यलक्षणोपयोगिगुणघटकतया ममाप्यावश्यकी, तथाऽप्यनुवादत्वात् प्राशस्त्योत्पादकत्वाच्च न दोषः, वर्तमाननिर्देशं विना तदप्रतीतेः। किंच, अपेक्षितप्राशस्त्यपरत्वे संभवति नानपेक्षितहेतुपरत्वाङ्गीकारो युक्तः। अतः सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रामाण्यम्।

मण्डन— 'स्तुतिः शूर्पेऽन्नहेतुता।'

शंकर— 'शूर्पे हेतुविधिर्नास्ति।'

• हेतुवन्निगदाधिकरणं अर्थवादाधिकरणस्यैव शेषः। सु. पृ. ९१.

• हेतुविधिः अर्थवादः — 'चतुर्गृहीतान्याज्यानि भवन्ति, न ह्यत्रानुयाजान् यक्ष्यन् भवति' इति। बाल. पृ. ५२, • हेतुविधिर्मन्त्रः — 'इन्द्रो वामुशन्ति हि' इति। पृ. ६१.

• हेतुविधिस्वरूपो मन्त्रः — 'द्वादशार न हि तज्जराय' इति। बाल. पृ. ६२.

• हेतुविपर्यये प्रायेण कार्यविपर्ययो दृश्यते। भा. २।४।२।११ पृ. ६३६.

* हेतुहेतुमतोर्लिङा विधिः — 'यदि ब्राह्मणो यजेत' इति। बाल. पृ. २९.

* हेत्वाभासाः। अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानप्रकारो हेतुनिष्ठो दोषः हेत्वाभासः। भवति च असिद्धत्व-अनैकान्तिकत्व-बाधकत्वादिज्ञानाभावः प्रतिबन्धकाभावविधया अनुमितिकारणीभूतः तत्प्रतियोगिप्रमाप्रकारकत्वं असिद्धत्वादीनाम्, तेन हेतुनिष्ठो दोषो हेत्वाभासः। यादृशविशिष्टविषयत्वेन यथार्थज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्त्वं इति यावत्। यद्वा तादृशप्रमाविषयत्वम्। (तत्त्व इत्यस्य स्थाने) तेन दुष्टो हेतुर्हेत्वाभासः। 'धूमो वह्निव्यभिचारी' इत्यादिभ्रमवारणाय यथार्थेति। उपाधिवारणाय कारणेति। उपाधिज्ञानस्य साक्षात् प्रतिबन्धकत्वाभावेन तदभावस्य अनुमितिप्रयोजकतया हेतुत्वाभावात्।

ते (हेत्वाभासाः) त्रयः असिद्धानैकान्तिकबाधकाः। तत्र असिद्धिः स्वरूपासिद्धिः सम्बन्धासिद्धिः व्यतिरेकासिद्धिः आश्रयासिद्धिः व्याप्यत्वासिद्धिः इति पञ्चधा। तत्र हेत्वप्रसिद्धिः स्वरूपासिद्धिः। 'बुद्धो धर्माधर्मवेदी सर्वज्ञत्वात्' इति। अत्र सर्वज्ञत्वं हेतुः अप्रसिद्धः। पक्षे व्याप्यत्वेन अभिमतस्याभावः स्वरूपासिद्धिः इति अक्षपादीयमते तु ईश्वरे प्रसिद्धिसत्त्वे बुद्धे तदभावात् अप्रसिद्धिः।

पक्षे व्याप्यत्वाभिमतस्य हेतुतावच्छेदकसंबन्धेनाभावः संबन्धासिद्धिः। वह्निरदाहकः शीतत्वात् इति।

पक्षतावच्छेदकहेत्वोरभेदे व्यतिरेकासिद्धिः। गोशब्दः सास्नादिमद्वाचकः गोशब्दत्वात् इति। अत्रासाधारणानैकान्तिक इति अक्षपादीयाः। इदमेव पक्षमात्रवृत्तित्वं असाधारणस्य। अत्र साध्यवत् साध्याभाववत्त्वाघकतया अनुमितिप्रतिबन्धो दुरपह्नवीनम्।

पक्षाप्रसिद्धिः आश्रयासिद्धिः। आकाशो नित्यः निरवयवद्रव्यत्वात् इति। शौद्धान्तिकं (बौद्धं) आकाशामावादिनं प्रति आश्रयासिद्धिः। पक्षतावच्छेदकाप्रसिद्धिरपि सा। काञ्चनमयपर्वतो वह्निमान् इति।

पक्षैकदेशे हेतोरवृत्तिश्च व्याप्यत्वासिद्धिः । यथा वायुः आकाशश्च अनित्यः, मूर्तत्वात् इति । 'साध्ये साध्यतावच्छेदकस्य, हेतौ हेतुतावच्छेदकस्य अप्रसिद्धिः व्याप्यत्वासिद्धिः । काञ्चनमयवह्निमान्, काञ्चनमयधूमात् इति । एवं नीलधूमात् इत्यादावपि नीलधूमत्वस्य गुरुतया हेतुतावच्छेदकत्वेन साऽपि व्याप्यत्वासिद्धिः' इत्यक्षपादीयाः ।

साध्यसंदेहजनको हेतुः अनैकान्तिकः । संदेहजनकत्वं च साध्यतदभावसहचरितत्वज्ञानेन सत्प्रतिपक्षितत्वेन च । यथा नित्यः शब्दः अमूर्तत्वात् इति । अत्र अमूर्तत्वं अनित्यक्रियादिसाधारणत्वात् साध्यसंदेहजनकम् । एवं वायुः अप्रत्यक्षः अरूपिद्रव्यत्वात्, वायुः प्रत्यक्षः महत्त्वे सति उद्भूतस्पर्शवत्त्वात् । अत्र उभयोः समबलत्वात् साध्यसंदेहजनकतेति ।

सत्प्रतिपक्षस्थले साध्यतदभावव्याप्यताज्ञानात् परस्परानुमितिप्रतिबन्धः, न संशयाकारानुमितिः इति अक्षपादीयाः ।

अत्राहुः । स्थाणुपुरुषत्वव्याप्यवत्ताज्ञाने प्रत्यक्षसंशयवत् सत्प्रतिपक्षस्थलेऽपि संशयाकारानुमितिरस्तु । यत्र एककोटिव्याप्यदर्शनं प्रबलं तत्र अधिकबलतया द्वितीयकोटिभानप्रतिबन्धात् न संशयः । फलबलेन च अधिकबलत्वाभावः कल्प्य इति ।

अत्र नव्याः । तदभाववत्ताज्ञानस्येव तदभावव्याप्यवत्ताज्ञानस्यापि लौकिकसंनिकर्षाजन्यज्ञानत्वमेव प्रतिबध्यतावच्छेदकम्, तेन न संशयाकारानुमितिः इत्याहुः ।

बाधकस्तु साध्याभावसाधकः । अयं विरुद्ध इति अक्षपादीयाः । यथा शब्दो नित्यः कृतकत्वात् इति । अत्र कृतकत्वं अनित्यत्वसाध्यं नित्यत्वं बाधते । अयं स्वपक्षाभावनिर्णयसाधक इत्युच्यते इति दिक् । मणि पृ ४०-४२

० 'हेमन्ते शाकमेधैर्यजेत' चातुर्मास्येषु । भा ११।२।३।१२

☞ हेरम्बनरसिंहन्याय । यथा हेरम्बनरसिंहयोरेकदेशे गजत्वं सिंहत्वं वाऽपरस्मिन् नरत्वमिति देशभेदेन विरोधाभावाच्चैकस्याऽऽर्हतस्यैकस्मिन् देश एव सत्त्वाऽसत्त्वादिना अनेकान्तत्वाभिधाने दृष्टान्ताऽनुपपत्तेरिति रामानुजीया इति । सादसी ७०७

० 'होतव्यमग्निहोत्रं न होतव्यम्' इत्यादावर्थवादः । भाट्ट १०।८।५.

● होता आध्वर्यवकरणमन्त्रं कुर्यात्, होत्रं तु मन्त्रं कश्चित् होतृपुरुषः कुर्यात् पुण्डरीकाविनामधने यूपपरिव्याणे बहिरङ्गो वा कश्चित् । भा ३।८।१०।२१ ● होता ऋत्विक् । पशौ इडायां 'अध्वर्यूमी होते हरन्ति' अनया अध्वर्युभ्या शिष्टयाऽन्यया होतुः इडोपहवमानबाधः । वि १०।७।४ ● होता तावत् अग्नेर्गार्हपत्यस्य, पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन सन्तोषयन् यागस्य कर्ता इत्युच्यते । भा. ११।२।१०।४८ ● होता प्रथमवर्गस्थ ऋत्विक् । अयं पूर्णां दक्षिणां द्वादशगोरूपां लभते । वि ३।७।१७ ● होता प्रातरनुवाकमनुब्रूते । भा ३।७।९।२२.

☞ 'होतर्यज, प्रशास्तर्यज' इति प्रैषे विकल्पः ॥

सर्वेष्वमेधे सहाध्वर्युणादौ होतृयाज्यया हुत्वा ततस्तेषां मध्ये होत्रादीनां मध्यतःकारिणां चमसान्यत्र विनियुज्य अवशिष्टचमसेषु सहोपहवेन पुनः सोममभ्युन्नीय ते क्रमेण मैत्रावरुणादिकर्तृकयाज्याभिः जुहोतीति स्थितिः । तत्र पुनरभ्युन्नीतहोमव्यवस्थितकर्तृकप्रैषगणमध्ये 'होतर्यज, प्रशास्तर्यज' इति श्रुतौ प्रैषौ, तत्र होतृशब्देन मैत्रावरुण एवोच्यते । 'सोमस्याध्वरस्य यज्ञक्रतो ससहोत्रा प्राचीर्वषट्कुर्वन्ति' इति वचनेन तस्यापि याज्यायामधिकारात् । मुख्येन होत्रा प्रथमवषट्कृतत्वाच्च प्रशास्तृशब्दस्यापि मैत्रावरुणवाचित्वात्तस्य प्रैषे द्वयोः अन्योर्विकल्पः इति कल्पसूत्रमतेन प्राप्ते, ससहोतृप्रैषयोः पठितयोर्होतृप्रशास्तृशब्दयोः प्रतिनियतनिर्देशादेव भिन्नार्थत्वात् तयोर्मध्यतःकारिचमसहोमीयमैत्रावरुणप्रैषयाज्यायां होतर्यजत्यत्र होतुरेवान-

सिद्धत्वाच्च मुख्यहोतैवोच्यते । तदर्थैकत्वात् वाक्यायाः होतृप्रयाजोर्वैकयोर्विकल्पः, न त्वेकस्मिन्नेव प्रयाजादि वक्तरि प्रैषयोर्विकल्पः । अथवा, मैत्रावरुणेनाध्वर्यु-णाऽपि होता प्रैषणीय इति न कोऽपि विकल्प इति । संकर्ष. २।३।१४.

● 'होतारमध्वर्युर्दीक्षयति' । वि. ३।७।१७.

■ होतारमपि जुह्वानं स्पृष्टो दहति पावक इति न्यायः । अयं चण्डकोपाना कश्चिदपि प्रियो न भवतीति द्योतयतीति । साहस्री. ९८७.

● होतारं वृणीते । भा. ३।७।९।२४, ● होत्रा हौत्रं कर्तव्यम् । ३।७।१९।४०, ● होत्रे ऋग्भिर्युक्तं रथं ददाति वाजपेये नान्य न चान्यस्मै । १०।३।२१। ७९. ● होतुः अध्वर्योश्च एकस्मिन् पात्रे यदा भक्षण तदा लिङ्गवाक्याभ्यां होतुः प्रथमभक्षणं ततोऽध्वर्योः । न तु अध्वर्योः प्रथमभक्षः । वि. ३।५।१३. ● होतु-रपि अध्वर्युवचनात् प्रवरेषु आनुपूर्वीनियमः । संकर्ष. ३।४।८. मीको. पृ. १००५ 'आर्षेयवरणे अध्वर्यु-वशात्०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होतुरेव ऊर्ध्वज्ञुत्वादिर्वरणधर्मः, न सर्वेषामृत्विजाम् । संकर्ष. ४।२।५. मीको. पृ. १८२१ 'वरणधर्मः ऊर्ध्वज्ञु-त्वादिः०' इत्यत्र अधिकरण द्रष्टव्यम् । होतुरेव प्रवर पूर्वः, अध्वर्योरुत्तरः । संकर्ष. ४।२।६. मीको पृ २८१० 'प्रवरः होतुरेव पूर्वः०' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः वरणमन्त्रस्यानुज्ञातृत्वम् । भा. ९।८।१०।२१ पृ. ११२६. ● होतुः कृत्स्नैडामक्षस्य अप्यूर्ध्वा निवृत्तिः आग्निमारुते यत्ते । १०।७।४। १९-१६. मीको. पृ. ११५ 'अप्यूर्ध्वा-याप.' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होतुः क्रियमाणानुवादी मन्त्र पूर्वाभिधाने 'युवा सुवासा०' इति । भा ९।८।१०। ११, ● होतुश्चमसः । होता यत्र चमसं, भक्षयति, भक्षाति, ■ होतुश्चमसः । ३।५।७।२२. ● होतु-श्चमसभक्षणे वषट्कारः कारणम् । वि. ३।०।१०- ● होतुः पुरस्तात् मैत्रावरुणः, अच्छावाक, भक्षयन्ति च । वि. ३।७।१७. ● होतुः पृष्ठे वैरूपं

विश्वजिति सर्वपृष्ठे । भा. १०।६।५।१४. ● होतुः पृष्ठे निवेशो वैरूपादिसाम्नां ऊर्ध्वादिक्रतौ, न कृत्स्ने क्रतौ । १०।६।६।१५-२१. मीको. पृ. १०८६ 'उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टाना०' इत्यत्र अधि-करण द्रष्टव्यम् । ● होतुः पृष्ठस्तोत्रे एव बृहद्रथन्तरयो समुच्चित्य निवेशः सत्त्वादौ उभयसामके क्रतौ । १०।६। ८।२४-२६. मीको. पृ. ४०३६ 'सत्त्वादौ उभय सामके क्रतौ०' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः पृष्ठस्तोत्रार्थं पादहिरण्यवत्यादिसाम्नां मध्ये वैरूपस्यैव निवेशः विश्वजिति । १०।६।५।१३-१४. मीको. पृ. ३६९० 'विश्वजिति पादहिरण्यवत्यादिसाम्ना मध्ये०' इत्यत्र अधिकरणं द्रष्टव्यम् । ● होतुः प्रथम भक्षः एकपात्रे बहुभिः सोमभक्षणे । ३।५।१३। ३६-३९. मीको. पृ. १७९२ 'ज्योतिष्टोमे, एकपात्रे बहुभिः ०' इत्यत्र अधिकरण द्रष्टव्यम् । ● होतुः प्राग् वरणात् सामिधेनीकर्मणा संयोगः 'अवृतः सामि-धेनीरन्वाह' इति । भा. १२।१।१८।४१. ● होतु-र्यजमानयेऽपि यजमानादन्यो नामनीयते ज्योतिष्टोमे ऋतुमद्यागेषु यजमानस्य स्वय याज्यापाठाद्धे । भा. ३।५।१८।४४-४६. ● होतुः वरण अदृष्टार्थम् । तत् दीक्षितेषु कर्मसु दीक्षणीयादिषु कर्तव्यम् । भा. १२।१। १८।४१. ● होतुः वरण दर्शपूर्णमासार्थमेव, वरणात् प्रागपि सामिधेनीषु तस्य प्रवृत्तेः । अत एव ज्योतिष्टोम गौणिकेषु सोमिकवरणात् पूर्वमिष्टिषु वरण कर्तव्यम् । वि. १२।१।१८, ● होतुः वषट्कर्तो भक्षहेतुः सत्प्रस्था च । निमित्तयोश्च समुच्चयः । प्रतिनिमित्तमदृष्ट भिन्नम् । ३।५।१२. ● होतुर्विहारद्वये तन्त्रम् । पदन प्रयोगेषु । ११।३।१०।४४-४८. ● होतुः नैव साम विश्वजिति । भा. ७।३।३।८.

● होत्रादीनां च सदसि कर्मप्रवृत्ते. अतएव वषट्-कारप्रभृत्यन्तर्नियमप्रतार्थं सदसि धिष्ण्याः अन्वेतव्याः । पा. ३।५।११।१२.

● होतृकामः 'प वामदेव भजीतन् स्मादिनुपये. रगर्थ हस्य स्वर् कुर्वन्' इत्यादिः दर्शपूर्णमासादौ

अन्येष्व । अस्थियज्ञे मृताधिकारपक्षे तु न संभवति । वि. १०।२।२२. ● होतृकामानामननुष्ठानं अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२२।५६–५७. मीको. पृ. ७६० ( ६ ) ' अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● होतृपुरुषः प्रास्तुत् नाम ज्योतिष्टोमे । भा. ३।५।१।२७.

● होतृमैत्रावरुणयोः द्वयोः वरणं निरूढपशुबन्धे । संकर्ष. ३।४।१३. मीको. पृ. २३७१ ' निरूढ० पशुबन्धे होतृ० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

※ होतृवरणं दार्शिकं ज्योतिष्टोमे इष्टिपशुषु कर्तव्यम्, ब्रह्मवरणं तु न कर्तव्यम् ॥

प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत । १२।१।१८।३६ ॥

भाष्यम्— दर्शपूर्णमासयोः होतुर्वरणं आम्नातम् ' अग्निर्देवो दैव्यो होता देवान् यक्षत् ' इति । तत् चोदकेन ऐष्टिकेषु कर्मसु सोमाङ्गभूतेषु प्राप्यते । अस्ति तु सोमेऽपि होतुर्वरणं ' अग्निर्होता स मे होता होतस्त्वं मे होताऽसि इति होतारं वृणीते ' इति । तत्र विचार्यते, किं ऐष्टिकेषु कर्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्तव्यं उत नेति । किं प्राप्तम् ? न कर्तव्यमिति । कस्मात् ? वरणं तावदानत्यर्थम् । सौमिकेन च वरणेन आनतो होता । तादृग्स्य सोमस्य करणेन च आनतस्य आनमनकार्यमस्ति । तस्मात्र कर्तव्यम् । एवं प्राप्ते, ब्रूमः । प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत । नैतदस्ति, ' सौमिकं वरणं प्रमन्नात् दार्शपौर्णमासिकस्य कार्यं साधयिष्यति ' इति । प्रवृत्ते वरणात्, प्रवृत्ते कर्मणि दार्शपौर्णमासिकं वरणं क्रियते । अतस्तत् नानत्यर्थम् । किं तर्हि ? धर्ममात्रम् । न चेत् क्रियेत तेन गुणवैगुण्यं स्यात् । तस्मात् प्रतिकर्म भेदेन कर्तव्यम् ।

ब्रह्माऽपीति चेत् । ३७ ॥

भाष्यम्–– इति चेत् पश्यसि प्रवृत्तवरणात् होतुर्वरणं प्रतिकर्म कर्तव्यमिति, ब्रह्माऽपि प्रवृत्ते कर्मणि व्रियते प्रणीताप्रणयनकाले । तस्मात् तस्यापि वरणं धर्ममात्रम् । अतस्तदपि प्रतिकर्म कर्तव्यम् । वक्तव्यो वा विशेषः ।

न प्राङ्नियमात् तदर्थं हि । ३८ ॥

भाष्यम्–– न ब्रह्मवरणं कर्तव्यम् । किं कारणम् ? प्राङ्नियमात् प्राग्वरणादित्यर्थः । सत्यम्, प्रवृत्ते कर्मणि ब्रह्मणो वरणम् । प्राग्वरणात् न किंचित् ब्रह्मत्वमस्ति । वरणादुत्तरकालं ब्रह्मणः कर्म, तदर्थं वरणं कर्मार्थम् । तस्मान्न धर्ममात्रम् । किमर्थं तर्हि ? आनत्यर्थमेव । सौमिकेन वरणेन आनतोऽसौ । तस्मात् ब्रह्मवरणं न कर्तव्यम् ।

निर्दिष्टस्येति चेत् । ३९ ॥

भाष्यम्–– अथोच्येत, अस्ति अमावास्याया औपवसथ्ये अहनि वेदिकर्म निर्दिष्टम्, ' पूर्वेद्युरमावास्यायां वेदिं करोति ' इति । तत्र वेदिपरिग्रहप्रभवः ब्रह्मणा क्रियते । तेन ब्रह्माऽपि प्रवृत्तवरण इति ।

नाश्रुतित्वात् । ४० ॥

भाष्यम्–– पूर्वेद्युरमावास्याया वेदिकरणं श्रुतम्, न परिग्रहणम्, अश्रुतत्वात् । यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्मार्थत्वात् । न प्राक् वेदिकरणात् पूर्वपरिग्रहः । तथापि ब्रह्मणा प्रसवो दातव्यः । बाढम् । अथ तर्हि अन्यः परिहारः । दर्शपूर्णमासप्रकरणे हविषा अभियासनादूर्ध्वं वेदिकरणमाम्नातम् । ब्रह्मवरणमपि प्रणीताप्रणयनकाले प्राक् ब्रह्मत्वप्रवृत्तेः दृष्टार्थत्वात् आनत्यर्थम् । एवं स्थिते अमावास्याया वेदिकरणं वचनेनोपदिष्टम् । तस्मिन्नपकृष्यमाणे परिग्रहोऽपि अपकृष्टः, प्रसवोऽपि, ब्रह्मवरणमपि, प्रधानदेशकालत्वात् गुणानाम् । एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः । उभयत्र अप्रवृत्ते ब्रह्मत्वे । तस्मादुभयत्र आनत्यर्थम् । अतो न प्रतिकर्म ब्रह्मवरणं कर्तव्यं सौमिकेनैव वरणेन आनतत्वात् ब्रह्मणः ।

होतुस्तथेति चेत् । ४१ ॥

भाष्यम्–– इति चेत् पश्यसि, यद्यपि प्रवृत्ते कर्मणि ब्रह्मणो वरणम्, न च वरणात् प्राक् किंचित्

एव । भा. ६।६।११।४०, * होमाः कर्मसंयुक्ताः यथादयः उदाहरणम् । एते हि सर्वकर्मणां क्रत्वादीनां शेषभूता उत वैदिकादीनां अग्निहोत्रादीनां इति संशये वैदिकाना एव शेषभूताः इति सिद्धान्तः । ३।४।९। १९–२७. * होमाः चतुर्विधाः– ऐष्टिकाः, पाशुकाः, सौमिकाः, दार्विहोमाश्चेति । वि. ११।३।२. * होमस्य त्यागात्मकत्वम् । भा. २।२।११।२५ पृ. ५४३. * होमस्य पुरुषार्थस्य दीक्षितकर्तृकत्वपर्युदासः ज्योतिष्टोमे । १०।८।७।१२–१५. 'नदीक्षिताधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * होमस्य फलार्थत्वम्, अभिषवस्य च होमार्थत्वम् । भा. ३।५।११।३२, * होमस्य मन्त्रदेवताविशाषणत्वम् । २।२।११। ३५. * होमस्य यागात् भिन्नता । 'तथा द्रव्यार्थसंकल्पस्यावितरत्वावधारणात् । प्रक्षेपाधिकत्वमात्रत्वाद्यागाद्धोमस्य भिन्नता ॥' वा. २।१।१।१ पृ. ६४९. * होमयोः । विक्षेपफलीकरणहोमयोः अन्याधोत्तरत्वं नास्ति । भाट्ट. ५।१।१९. * होमानामुपनयनादीनां लौकिकत्वमानुष्ठानम् । ६।८।२।१८–१९. मीको. पृ. ११४७ 'उपनयनहोमाधिकरणम्' इत्यत्र अधिकरणं द्रष्टव्यम् । * होमानामेव नामधेयं दर्विहोमशब्दः, न यागानाम् । ८।४।१।४. मीको. पृ. १०१८ 'दर्विहोमशब्दः होमानामेव०' इत्यत्र अधिकरणं द्रष्टव्यम् । * होमानां भेदनादिनिमित्तकानां दर्शपूर्णमासमात्राङ्गता । ६।२।१५।४५–४७. मीको. पृ. २०६९ 'दर्शपूर्णमासाङ्ग भेदनादिनिमित्तकहोमाः' इत्यत्र अधिकरणं द्रष्टव्यम् । * होमानां मूलप्रकृतिः अग्निहोत्रम् । वि. ८।१।३ वर्णकं २. * होमानां लौकिकानामेव वाचकः पाकयज्ञशब्दः । संकर्ष. २।४। ११. मीको. पृ. २५३४ 'पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः' इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ होमे पुरस्तात्स्वाहाकारा अपि मन्त्राः करणम् ॥

'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा' इत्यादौ मन्त्रान्ते पठ्यमानस्वाहाकाराणां प्रदानार्थत्वेऽपि 'स्वाहा वाचे स्वाहा वाचस्पतये' इत्यादौ पुरस्तादुच्यमाणानां न तदर्थत्वम्, स्वस्थानप्रच्युतानां न पुरुषार्थादीनां कण्डूयनाद्युद्धरणादिकार्याक्षमत्वदर्शनात् । अत एव इमपदस्य गिरापदस्थाने एव निवेशो द्विरावृत्तिश्च कल्प्यते । तस्मात् 'स्वाहा यज्ञं वातादारभे' इत्यादावपि ■ होमार्थता । इति प्राप्ते, तत्र चतुर्थ्या अभावात् प्रदाननिर्धारणेन होमार्थत्वाभावेऽपि यागादीनां चतुर्थ्यन्तत्वेन देवतात्वावगमात् यत्र क्वापि स्थितस्य दीयस्वेव पदस्यान्वयप्रत्यासत्तिनाकाङ्क्षाभावात् देहि देहि ब्राह्मणाय इति वाक्यान्यायमविशेषेण योगानुभवाच्च प्रदानार्थत्वैव । अत एव 'पुरस्तात् स्वाहाकारा वा अन्ये देवा उपरिष्टात् स्वाहाकारा वा अन्ये' इति श्रुत्योभयोरपि प्रदानार्थत्वमनूद्यते । संकर्ष. २।४।१७.

* होमेषु आहवनीयसंयोगो भवति । भा. ३।४। ९।२६. * होमेषु सर्वेषु । अनारभ्योच्यते 'चतुर्गृहीतं जुहोति' इति सर्वहोमेषु । भा. ४।१।१७।१८ । अनारभ्यविधानात् होममात्रे चतुर्गृहीतम् । वा.

* 'होमाङ्गस्य च (मन्त्रस्य) व्यापारं न कस्यचिद्दपीष्यते ।' वा. ३।२।५।१२ पृ. ७६१.

* होमान्तं अवदानमेकः पदार्थः । तेन दर्शपूर्णमासयोः आग्नेयाग्नीषोमयोः अनुसमयः । वि. ५।२।४.

* होमाभिषवौ ज्योतिष्टोमे सोमभक्षणे एकं निमित्तम् । ६।८।७।२४–२५. मीको. पृ. १८३७ 'ज्योतिष्टोमे होमाभिषवौ सहितौ०' इत्यत्र अधिकरणं द्रष्टव्यम् । * होमाभिषवौ सोमभक्षे समुच्चित्य निमित्तान्तरम् । ३।५।११।३२. मीको. पृ. १८११ 'ज्योतिष्टोमे सोमभक्षे०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

■ होमाभिषवाभ्यां च । ३।५।११।३२ ॥

सिद्धान्तसूत्रम् । सोमभक्षस्य निमित्तद्वय प्रागुक्तम् । तृतीयनिमित्तप्रतिपादनार्थमिदं सूत्रम् । सोमलतां अवहत्य रसनिष्पादनं अभिषवः । होमश्च अभिषवश्च ताभ्यां उभाभ्यां मिलित्वा एकेन निमित्तेन तृतीयेन सोमं भक्षयेत् । चकारः पूर्वनिमित्तसमुच्चयार्थः । पूर्वसूत्रात् भक्षयेत् इति पदस्यानुवृत्तिः । तृतीयमिदं

निमित्तं अध्वर्योरुच्यते । न च अध्वर्युचमस इति समाख्याऽस्ति । नापि तस्य प्रायो वषट्कर्तृत्वम् । के.

● होमाभिषवयोः वर्ता भक्षणं प्रति व्यङ्गत्वेन पूर्वमप्रसक्तात् ' हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा० ' इत्यनेन विधीयते । वि. ६।४।७, ● होमाभिषवयोः सहितयोः भक्षणनिमित्तता न प्रत्येकम् । ६।४।७.

● होमाभिषवनिमित्ताः वषट्कारनिमित्ताश्च सोमभक्षा ज्योतिष्टोमे । ते च न परिक्रयार्थाः किन्तु संस्कारार्थाः । भा. १०।२।१।२१.

● होमाभिषवनिमित्तकभक्षप्रतिपादनं ज्योतिष्टोमे । भा. ३।५।११।२२ पृ. १००९.

होमाभिषवभक्षणं च तद्वत् । ६।४।७। २४ ॥

अग्निष्टोमे ' हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति ' इति भक्षणं श्रुतम् । तत्र भक्षणे होमश्च अभिषवश्च प्रत्येकं निमित्तं यथा पञ्चशरावे प्रत्येकस्य हविषः आर्तिः निमित्तं तद्वत् इति पूर्वपक्षमाह । होमश्च अभिषवश्च होमाभिषवौ । होमाभिषवाभ्यां संयुक्तं होमाभिषवसंयुक्तम् । होमाभिषवसंयुक्तं च तत् भक्षणं च होमाभिषवभक्षणं इति शाकपार्थिवादिवत् समासः । तद्वत् हविरार्तिवत् इत्यर्थः । चकारेण दृष्टान्तसंगतिरुक्ता ।

उभाभ्यां वा, नहि तयोर्धर्मशास्त्रम् । २५ ॥

होमाभिषवभक्षणे होमश्च अभिषवश्च प्रत्येकं निमित्तं इति पूर्वपक्षे प्राप्ते वाशब्देन निवारयन् सिद्धान्तमाह उभाभ्यां । होमाभिषवाभ्यां मिलिताभ्यामेव निमित्तेन सोमभक्षः स्यात्, न प्रत्येकं निमित्तेन । यतो होमाभिषवयोः धर्मस्य भक्षणस्य शास्त्रं विधानं नहि, नास्त्येव । यदि तयोर्धर्मो विधीयेत ततो होमाभिषवौ प्रधान इति भक्षणं गुणः प्रतिप्रधानं भिद्येत । अथ पुनः उभाभ्यां निमित्ताभ्यां भक्षणं विधीयते । तस्मिन् विहिते एकोऽर्थो विहितो भवति, तेन एकं वाक्यम् । तदेतावति पर्यवसितं भवति ' अभिषुत्य हुत्वा भक्षयन्ति ' इति । तेन उभौ मिलितौ निमित्तं इति सिद्धान्तः । के.

● होमावृत्तिः दर्शादौ भेदनादिनिमित्तावृत्त्या । वि. ६।२।९.

● होमतन्त्रत्वयन् । युगपदनेककपालभेदने होमतन्त्रत्वयन् वारुणेष्टेः तन्त्रत्वप्रसक्तौ । भाट्ट. ५।२।२.

● होमदानपानानामुत्कर्षो दीक्षाकालोत्कर्षे । ६।५।१०।३८–३९. मीको. पृ. २१०८ ' दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

● होमपाकयोः अर्थतः क्रमः । वि. ५।१।२.

● होमपादः । संकर्ष. २।४।१–३०.

● होममात्रे चोदिते वेदाध्यायी शक्तः इत्यधिक्रियते, नाविद्वान् । भा. ३।८।८।१८.

● होममात्ररूपेण फले विहितस्य कर्मणः द्रव्यादिग्रहणे विरोधाभावः । सु. पृ. ७३७.

होमलक्षणम् ॥

तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् । ४।२।१३।२८ ॥

भाष्यम्— अथ किंलक्षणको जुहोतिरिति । तदुक्ते यजयुक्तेऽर्थे जुहोतिः श्रूयते, आसेचनाधिके । तस्मात् यजतिरेवाऽऽसेचनाधिको जुहोतिः । हुतमनेनेत्येवंजातीयके वक्तारो भवन्ति लोके । वेदेऽपि यजतिचोदितं जुहोतिनाऽनुवदति । ' संग्रामिणं चतुर्होत्रा याजयेत् ', ' चतुर्गृहीतमाज्यं कृत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धम् ' इति । अथ ददातिः किंलक्षणक इति । आत्मनः स्वत्वनिवृत्तिः, परस्य स्वत्वेन सम्बन्धः । यजतिददातिजुहोतिषु सर्वेषूत्सर्गः समानः । तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रम्, जुहोतिरासेचनाधिकः, ददातिरुत्सर्गपूर्वकः परस्वत्वेन सम्बन्ध इत्येष एषां विशेष इति ।

[ शा– वि–भाट्ट–मन्त्येषु इदमधिकरणं पूर्वाधिकरणे अन्तर्भावितम् । ]

मण्डन— 'प्रक्षेपयुक्तो यजिरेव होमः ।' 'त्यागः परस्वीकरणं च दानम् ।'

त्रिभिरेव शिलादिवत्सर्वत्रस्थितविधिविशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ।

**लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥**

भाष्यम्— इह पदेन कस्यचिदुत्तरं सूत्रम् । कानि तानि पदानि ? अथ किमर्थं न लिङ्गाद् व्यवस्था ? यथा 'शुक्लो होता' इति । नास्ति तन्नित्यमेषां लिङ्गम्, यथायथादर्शनमनुवर्तते । येऽपि श्यामा बृहन्तो लोहिताक्षास्तेऽपि न सर्वे आह्नीनैबुकादीन् कुर्वते । अनेवंलिङ्गा अपि चानुतिष्ठन्ति । तस्मान्न व्यवस्था । शुक्लो होतेति प्रत्यक्षा श्रुतिः ।

वा— 'व्यक्त्याकृत्यभिधेयेऽर्थे प्रत्याख्याते विशेषणे । लोहिताक्षादिचिह्नानामधुनाऽन्या निराक्रिया ॥' जातिव्यक्तिवाच्युपपदाभावेऽपि कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवत् अधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते— 'लिङ्गाभावाच्च नित्यस्य नास्ति कर्तुर्विशेषणम् । नियतेन हि लिङ्गेन नित्यं कर्तोपलक्ष्यते ॥ यच्चेह दाक्षिणात्यानां लोहिताक्षादि कल्प्यते । अन्येषामपि तद्दृष्टं तदनाचरतामपि ॥ दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि । तस्मादव्यवस्थितैश्चिह्नैर्नाधिकारो विशेष्यते ॥' यस्तु लिङ्गविशेषणं नित्यशब्दं मन्यते तस्य व्यर्थतां नीभूतलिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यमपेक्षत्वात् स्वार्थाभिधानमध्यतरत्वेन सामर्थ्यनिदानाभावात् भवितव्यमेवेह समासेन देवदत्तस्य गुरुकुलमिति यथा । नैतत्तुल्यमनेनेष्टमपेक्षान्तरसंगतेः । नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥' गुरुशब्दस्य हि शिष्यापेक्ष एवात्मलाभ इति देवदत्तशब्दोपात्तशिष्यसम्बन्धानिराकाङ्क्षीकृतस्वार्थत्वाच्चाभ्यधिकापेक्षाकृतसामर्थ्यप्रतिघातप्रसङ्गः । 'इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया । न च लिङ्ग्यभिधाय्येतन्नित्यस्येति पदं मतम् ॥' यद्यपि चैवं गम्यगमकसम्बन्धे सति लिङ्गशब्दः प्रवर्तते तथाऽपि गुरुशिष्यपितापुत्रादिसंबन्धवन्नास्य तत्पक्षवृत्तिनिमित्तसम्बन्धिशब्दत्वप्रसिद्धिः । 'लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते । लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥' लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति न संबन्धिशब्दत्वेनोच्यते तथाऽपि तु क्रियागतकारकान्तरापेक्षां न मुञ्चतीति काम 'लिङ्गिनो लिङ्गदर्शनम्' इत्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यस्य पुनर्लब्धस्वार्थं लिङ्गापेक्षितं तद्धर्मतया षष्ठ्योपनीयत इति तत्संबन्धापेक्षायामपरिहार्योऽसामर्थ्यप्रसङ्गः । तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधिकारविशेषणं वा नियतस्य कर्तुर्नियमस्याधिकारस्य वा न प्रतिपादकं किंचिच्चिह्नमस्तीति न तदभिधाय्युपपदविशेषितव्यवस्थितहोलाकादिविधानोपपत्तिः ।

**आख्या हि देशसंयोगात् ॥ १९ ॥**

भाष्यम्— अथ कस्मान्न समाख्यया नियमः । ये दाक्षिणात्या इति समाख्यातास्ते आह्नीनैबुकादीन् करिष्यन्ति, ये उदीच्या इति समाख्यातास्ते उद्वृषभयज्ञादीन्, ये प्राच्या इति ते होलाकादीन् । यथा, 'राजा राजसूयेन' इति । नैतदेवम् । देशसंयोगादाख्या भवति । दक्षिणदेशान्निर्गत प्राक्षु वा उदक्षु वाऽवस्थित आह्नीनैबुकादीन् करोत्येव । उदीच्याश्च देशान्तरे उद्वृषभयज्ञादीन्, प्राच्याश्च होलाकादीन् । अयदेशश्च देशान्तरगतो न नियोगतः परपदार्थान् करोति । तस्माच्च व्यवस्था । 'राजा राजसूयेन' इति तु नियता जातिः ।

वा— 'इदानीं तु यदाचारमत्यन्तमनुवर्तते । तत्प्राच्यादिसमाख्याख्यमुपन्यस्तं विशेषणम् ॥' सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैः क्रियन्ते समाख्यावर्जितेषु च नोपलभ्यन्ते । तस्मात् समाख्याविशिष्टविध्यनुमानात् तत्संयुक्तप्रमाणत्वमेव न्याय्यमिति । तत्र समाधिः । 'आख्या हि देशसंयोगात्तस्मात्कर्तृषु वर्तते । आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥ देशश्च दिग्विदिष्टत्वादिग्रूपं ध्यानस्थितम् । न च तद्देशसम्बन्धादनाचारोऽनुवर्तते ॥ निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्य

दर्शनात् ॥' समाख्यायामावश्च देशादन्यन्निमित्तमस्ति तद्विशिष्टनिधिविहिताश्चाऽऽचारा. केवलमेव तद्देशसम्बन्ध मनुवर्तेरन् । उभयथाऽपि तु व्यभिचाराच्च देशनिमित्त-समाख्यानिशिष्टविधानकल्पना घटते ।

न स्याद्देशान्तरेष्विति चेत् । २० ॥

भाष्यम्— इति चेत् पश्यसि, यदि देशसंयो-गात् आख्या भवेत्, देशान्तरस्थस्य न भवेत् । भवति च देशान्तरस्थस्य, 'माथुर.' इत्यतद्देशस्यापि मथुरया । तस्मान्न देशसंयोगादाख्या ।

वा— अथवाऽनयैवोपपत्त्या स्वाभ्युपगमस्थीयपक्षोपपत्तिः प्रत्यवतिष्ठमान आह– 'न स्याद्देशान्तरेष्विति चेत्' इति । 'यदि देशनिमित्तत्वात्समाख्या दूषिता त्वया । तस्यमन्यनिमित्तत्वं वक्तुमस्या मया पुनः ॥ सति देशनिमित्तत्वे न स्याद्देशान्तरेष्वियम् । तस्मात्किमपि जात्यादि ध्रुवमस्या निबन्धनम् ॥ अस्तु वा निर्निमित्तैव विशेष्यति तथाऽपि तु । क्रियाचारनिमित्तानां किं निमित्तान्तरेण न. ॥' तस्मादनिमित्तया समाख्ययैवाधिकारविशेष-विधेर्न व्यभिचारिदेशनिमित्तत्वमस्या. कल्पयितव्यमि-त्युक्ते अभिधीयते ।

स्याद् योगाख्या हि माथुरवत् । २१ ॥

भाष्यम्— देशसंयोगनिमित्तायामप्याख्यायां देशा-न्निर्गतस्य तदाख्या न विरुद्धा । यत एषा योगाख्या योगमात्रापेक्षा, न भूतवर्तमानभविष्यत्सम्बन्धापेक्षा । यतो दृश्यते मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन्, मथुराया निर्गतश्च । यस्य त्वतोऽन्यतम. सम्बन्धो नास्ति न स माथुरः । तस्मात् समाख्यया व्यवस्था ।

वा— 'संसर्गैर्बहुभिर्देशसमाख्या हि प्रव र्तते । निवासभवजातत्वतदागमनहेतुभिः ॥' 'सोऽस्य निवास.' तत्र भवस्तत्र जातस्तत आगत इत्येवमादिनिमित्तपरित्यागेन न कदाचिन्माथुरादि-समाख्या वर्तते । न चैषा देशसंयोगं व्यभिचरति । न चेनामाचारोऽनुवर्तते तन्निवासिनामपि केषाञ्चिदना चरणाचिरनिर्गतपुत्रपौत्रादीनां च देशान्तरेष्वप्याचरणा-दिति न समाख्यया निरवविधिसिद्धिः । यत्तु मथुरा-मभिप्रस्थितो माथुर इति भाष्यकारेणोक्तं तत् 'तद्गच्छति पथि दूतयोः' इति वा दूतविषयं कल्पयितव्यम-प्रत्ययिनोक्तत्वाद्वा उपेक्षितव्यम् । सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात् ।

कर्मधर्मो वा प्रवणवत् । २२ ॥

भाष्यम्— अथ कस्मान्न कर्माङ्ग देशः । यः कृष्णमृत्तिकाशाय, स आह्नीनैबुकादीनाम्, यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति ।

वा— इदानीं कर्तृविशेषणविशिष्टविध्यनुमानाप्रति-हत. कर्माङ्गभूतप्राग्देशादिनिष्ठानुमानसंभवं मन्यमान आह— 'कर्मधर्मो वा प्रवणवत्' इति । 'प्रागुदक्प्र-वणो यद्वत्प्राचीनप्रवणोऽपि वा । देशो भवति कर्माङ्गं प्राग्देशादिस्तथा भवेत् ॥' इति ।

तुल्यं तु कर्तृधर्मेण । २३ ॥

भाष्यम्— यथा कर्तर्य पत्नस्थित लिङ्ग दर्शनादि न पक्षार्थ. तत्राकुर्वन्ति, तद्वद्देशलिङ्गम पलस्थितम् । कृष्ण-मृत्तिकाशयेऽप्यन्ये न कुर्वन्ति, तथाऽन्यलिङ्गेऽपि कुर्वन्ति । तस्मात् देशतो व्यवस्था । प्राचीनप्रवण तु श्रुत्या नियत वैश्वदेवस्य ।

वा— 'तुल्यं तु कर्तृधर्मेण' तथैवमनव-स्थितम् । द्विकर्तृकप्रमृत्तिकाप्रायप्रमृतिव्यभिचा-रत. ॥ प्राग्देशो यो हि केषाञ्चित्सोऽन्येषां दक्षि-णापथः । तयोदक्प्रत्यगित्येव तैकरूप्येण गम्यते ॥ मृत्तिकाद्यपि यच्चिह्नं तत्रान्यत्र च तत्समम् । होलाकादिविधिस्तस्मान्न तेनापि विशेष्यते ॥ पुरुषापेक्षयाऽऽचारस्तस्मिन्नपि न दृश्यते । अन्य-स्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणम् ॥' इति ।

वा— स्मृतीनां आचाराणां च विरोधाविरोधयोः प्रामाण्याप्रामाण्ये प्रतिपादिते । स्वातन्त्र्यं च स्मृतीनां निरस्तम् । इदानीं केषाञ्चित् आचाराणां स्मृतीनां च व्यवस्था अव्यवस्था वा इति चिन्त्यते । होलाकादयो हि केश्चिदेव प्राच्यादिभिरनिमित्तैरनुष्ठीयन्ते न सर्वैः । एवमपि मानवातिरिक्ताश्च स्मृतय. केश्चिदेव का

पठ्यन्ते न सर्वैः। तदेतान् स्मृत्याचारानुदाहृत्य विचार्यन्ते। किमेते तेषामेव धर्मा उत सर्वेषामिति। तदर्थं च किं तेषां स्मृतिर्मूलभूता व्यवस्थितविषया शक्यते कल्पयितुं उत सर्वसाधारण्येन एव इति। तत्र 'लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते। धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते॥' स्मृत्याचारलिङ्गगम्या श्रुतिर्न प्रत्यक्षा। तच्च लिङ्गं केषुचिदेवोपलभ्यते। अतस्तद्विषयतयैव श्रुतिरनुमातुं शक्यते। नहि तस्याः सर्वविषयत्वे प्रमाणमस्ति। व्यवस्थितविषयत्वेऽपि स्मृत्याचारयोरुपपत्तेः। यदि च साधारणी श्रुतिः स्यात् ततस्तन्मूलौ स्मृत्याचारावपि सर्वपुरुषगामिनौ स्याताम्। यदि हि आलस्यादिनिमित्तमितरेषामनाचरणं तदा स्यादपि साधारणानुमानम्। यत्तु प्राच्याद्यभिमानिनामाचरणमितरेषां च अनाचरणं न तत्साधारणानुमानेऽवकल्पते। तस्मात् व्यवस्थितमेषां धर्मत्वम्। इति प्राप्ते, अभिधीयते– 'विशेषाभावमात्रेण प्रसिध्येत्सर्वधर्मता। विशेषणाद्व्यवस्था स्यात् तच नेहोपपद्यते॥' यदुक्तं सर्वधर्मत्वे प्रमाणं नास्तीति तदयुक्तम्। नहि सर्वधर्मत्वादिना प्रमाणमुपन्यसितव्यम्। उभयवादिसिद्धेनैव विधिना असति विशेषोपादाने सर्वधर्मत्वसिद्धेः, व्यवस्थादिना तु वक्तव्यं विशेषे प्रमाणम्। तच नास्ति। यथाहि स्मृतयः तावत् साधारण्येनैव विदधतीति न तेषु चरणविशेषोपादानमस्ति। स्मृत्यनुसारेण च श्रुतिकल्पनमिति तदपि साधारणं न्याय्यम्। पाठव्यवस्था तु कर्तृसाधारणत्वात्। कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वग्रन्थमध्यापयामास। ते अपि अन्यान् छन्दोगान् इत्येवं गौतमीयस्य छन्दोगैः पाठः। तथा आपस्तम्बग्रन्थस्य तैत्तिरीयैरध्यापनादपि इति व्यवस्थितधर्मविषयत्वं अप्रमाणकम्। आचाराणां तु सदाचारिमनुष्य अनाचारिमनुष्ययोश्च स्वरूप आकृतिजातिगुणसंस्थानादिकं न किंचित् विशेषणं संभवति, यदुपादाय होलाकाद्यधिकारं विदध्यात्। तथा प्राच्यादिमनाचरत्स्वपि व्यभिचारिणी तद्देशगतानामपि केषांचित् अनाचरणात्। चिरविनिर्गतपुत्रपौत्रा-दीनां च अन्यत्रापि समाख्याया आचरणात्। तस्मात् असति विशेषणे सर्वधर्मत्वं आचाराणां स्मृतीनां च इति सिद्धम्।

सोम— विषयपरिशोधनेन तत्प्रामाण्यस्य स्थिरीकरणात् प्रामाण्यस्य स्वातन्त्र्याभावस्य च असत्त्वे व्यवस्थानिवारणानुपपत्तेश्च संगतिरिति। सूत्रार्थस्तु– अनुमापकस्य व्यवस्थितत्वात् व्यवस्थासंयुक्तमेव श्रुतिरूपं प्रमाणमनुमेयं स्यादिति।

वि— 'होलाकादेर्व्यवस्था स्यात्साधारण्यमुताग्रिम। देशभेदेन दृष्टत्वात् साम्यं मूलसमत्वतः॥ प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ पदे। अर्थाबोधादमानत्वे चेत् न सामान्यानुमाननतः॥'

भाट्ट— अथ यत्र स्मृतिषु पाठव्यवस्था यथा गौतमीयाः छन्दोगैरेव, तथा आचारेषु कर्तृव्यवस्था यथा होलाकादि प्राच्याद्यभिमानिभिरेव, तत्र तदनुमेयश्रुतिरप्यनुमापकस्य नियतविषयत्वात् नियताधिकारिकैवेति नान्यैस्तदनुष्ठेयम्। इति प्राप्ते, यद्यप्यनुमापकं नियतविषयं तथाऽपि नानुमेयश्रुतौ विशेषणं प्राच्यत्वादि दातुं शक्यम्। न हि प्राच्यत्वं नाम सदाचारिमनुष्यगत जातिव्यक्तिगुणसंस्थानादिभिर्निर्वक्तुं शक्यम्। तत्र तद्देशगतानामप्यनाचरणात् चिरनिर्गतपुत्रपौत्राणामप्याचरणाच्च। अतो विशेषणाभावात् सर्वविषयत्वम्। गौतमीयादिस्मृतेस्तु न छन्दोगाधिकारलक्षणम्, येन श्रुतावपि तत्संभाव्येत। पाठमात्रं तु तेषां स्मृतिकर्तृसम्प्रदायाधीनत्वादुपपद्यते। कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् ग्रन्थमध्यापयामास। तेऽप्यन्यानित्येवं पाठः तन्मात्रे व्यवस्थित इति तत्रापि सर्वविषयत्वमेव।

मण्डन— 'होलाककर्मानियमेन कार्यम्।' 'होलाककर्म' होलाकाद्याचारानुष्ठानम्, 'अनियमेन' व्यवस्थितविषयत्वाभावेन सर्वजनसाधारण्येन, 'कार्यम्' कर्तव्यमिति योजना।

शंकर— 'होलाकाद्यव्यवस्थितम्।'

● होलाकाधिकरणम्। (१।३।८)। दाक्षिणात्यानां मांसभक्षणवर्जनाचारः, प्राच्यादीनां च मांसभक्षणा-

चार. । तयोभाभ्यामाचाराभ्या श्रुत्यनुमान सामान्यत एव स्यात्, दाक्षिणात्यप्राच्यायुपपदकल्पनाया. होलाकाधिकरणे निरस्तत्वात् । बाल. पृ. १३९.

**होलाकाधिकरणन्याय.** । साहस्री ८५९.

* होलाकादय. किं प्राच्यानामेव धर्म उत सर्वेषा इति संदेहे सर्वेषामिति सिद्धान्त । भा. १।३।७। १५–२३.

* होलाकाद्याचारा· भविष्योत्तरादौ निबद्धा· । सु. पृ. १८९.

* होलाकाद्याचारव्यवस्थाकारणं कर्तृविशेष एव न देश. । सु. पृ. २५७

* होलाकोत्सवादि· सदाचार शिष्टाचारत्वात् प्रमाणम् । वि. १।३।४ वर्णक ३.

* हौत्रं, आध्वर्यव, औद्गात्र इति समाख्यया धर्मनियम । वि. ३।३।६. * हौत्रमाध्वर्यवमौद्गात्रमिति समाख्यया होतु· अध्वर्यो उद्गातुश्च तत्तत्कर्मभि· संबन्ध । ३।३।६।१३. मीको. पृ ४१५९ 'समाख्याऽधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम् । * हौत्र इति वृद्धिदर्शनात् होतृशब्दात् तस्येद कर्म इत्येवमन्वाख्यान इति गम्यते । वा ३।७।१९।४०. * हौत्र इति समाख्याया अर्थवत्त्वात् होता हौत्रस्य कर्ता भवति । भा. १२।४।१४।३५, * हौत्रमिति समाख्यातानि कर्माणि होत्रा कर्तव्यानि । ३।३।६।१३, * हौत्र वैष्णव अमावास्यां प्रकृत्य आम्नायते 'इद विष्णुर्विचक्रमे०' 'प्रतद्विष्णु स्तवते वीर्येण०' इति । १०।८।१७।५३, * हौत्र होत्रा कर्तव्यम् । ३।७।१९।४०.

**हौत्रास्तु विकल्पेरन्नेकार्थत्वात् । १२।३।१६।३६ ॥**

हौत्रा , होत्रा अनुवचनीया ये मन्त्रा. यूपोच्छ्रयणार्था वा यूपपरिव्याणार्था वा ते एकार्थत्वात् एककार्यकरत्वात् विकल्पेरन् इति पूर्व. पक्षः ।

समुच्चयो वा क्रियमाणानुवादित्वात् । ३७ ॥

न विकल्प. किंतु समुच्चय. स्यात् हौत्राणा मन्त्राणाम् । क्रियमाणानुवादित्वात् । अध्वर्युणा क्रियमाण अनुवदन्ति इति क्रियमाणानुवादिन । इति सिद्धान्त· ।

समुच्चयं च दर्शयति । ३८ ॥

'त्रि प्रथमामन्वाह, त्रिरुत्तमाम्' इत्यादि लिङ्ग हौत्राणा मन्त्राणा समुच्चय दर्शयति । के.

* हौत्रप्रवचनाख्य. ऋग्वेद । सु पृ. ७५७, ११००.

**हौत्रमन्त्राणां समुच्चय. ॥**

हौत्रास्तु विकल्पेरन्नेकार्थत्वात् । १२।३।१६।३६ ॥

भाष्यम्— हौत्रास्तु ये मन्त्रा यूपोच्छ्रयणीया वा 'उच्छ्रयस्व वनस्पते' इति, यूपपरिव्याणार्था वा 'युवा सुवासा.' इति, ते विकल्पेरन् । कुत ? एकार्थत्वात् । एकार्था एते उच्छ्रयणस्य, परिव्याणस्य चाभिधायका । एकैकश्च तेषामितरानपेक्षस्तदभिदधाति । तस्माद्विकल्प ।

समुच्चयो वा, क्रियमाणानुवादित्वात् । ३७ ॥

भाष्यम्— समुच्चयो वा हौत्राणाम् । कुत· क्रियमाणानुवादित्वात् । करणाना विकल्प उक्त. न चैते करणा. । क्रियमाणानुवादिन एते क पुनरनयोर्विशेष ? करणा. करोमीत्येव प्र कुर्वन्ति । क्रियमाणानुवादिन एव कर्तव्यमिति कथ कृत्वा ? उच्यते । अध्वर्योस्तावत् करोमीत्येते प्रत्ययेनार्थ. । असति ह्येतस्मिन् क्रियैव न प्रवर्तते एष च प्रत्यय सति पूर्वस्मिन् प्रत्यये भवति । यो स्मरति इद मया कर्तव्यमिति, स तत् करोति क्रियमाणानुवादिनश्चाध्वर्युणा क्रियमाणमर्थमनुवद 'अञ्जन्ति त्वामध्वरे देवयन्तः' इति । सोऽनुवा अलमध्वर्यो स्मृतिं कर्तुम् । अतस्तत्स्वरूप. । तेन कर्मणा आकाङ्क्षितत्वात् स्मरणार्था एते विज्ञायन्ते स्मरणार्थस्य च मन्त्रस्य आम्नानसामर्थ्यात् स्मारित कृ मदृष्टार्थाय भवति यथाप्रेषित कृतम् । ननु वि

देव स्मृतिर्भवति । सत्यम्, विधिशब्दादपि सामर्थ्याद्भवति । मन्त्रादपि भवति । मन्त्रस्य आम्नानसामर्थ्यान्मन्त्रेण कर्तव्या । प्रवृत्तेषु च कर्मसु स्मृतिसंतानेनार्थः इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्यैकस्मिन्नेव प्रयोगे संभवः इति क्रियमाणानुवादिनां हौत्राणां समुच्चयः ।

समुच्चयं च दर्शयति । ३८ ॥

भाष्यम्— ' त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह, ज्योतिष्मतीरनुब्रूयात् ' इति । अनेकसंनिपाते चैतद्भवति प्रथमा, उत्तमेति । तस्मात् समुच्चयः ।

शा— ' उच्छ्रयस्व वनस्पते ' इत्यादयो ये क्रियमाणानुवादिनो हौत्रा मन्त्राः तेषामपि करणवत् एकार्थत्वात् विकल्पप्राप्तौ उच्यते । करणानि हि कर्मानुष्ठानकरणभूतां स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति । न च एकेन तत्सिद्धौ इतरेण कार्यमस्तीति युक्तः तत्र विकल्पः । क्रियमाणानुवादिनस्तु अध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः । स्मृत्यविच्छेदश्च आन्तादपेक्षितः इति सर्वेषां समुच्चयः ।

के— ब्राह्मणविहितानां प्रथमादिमन्त्राणामिव हौत्राणामपि विकल्प इत्युत्थानात् दृष्टान्तसंगतिः ।

वि— ' उद्दिवस्पृशच्छ्रयस्वेति विकल्पो वा समुच्चयः । , विकल्पः स्मारकत्वैक्यात्, दाकारान्यत्वतोऽन्तिमः ॥ ' ' कर्तव्यं करोति ' इति स्मृतिप्रकारान्यत्वात् कार्यैक्याभावात् समुच्चयः ।

द्वितीयवर्णकमारचयति— ' उच्छ्रयस्व समिद्धस्वेत्यादीनां किं विकल्पनम् । समुच्चयो वा, कार्यैक्यादाद्यो, ऽनुस्मृतयेऽन्तिमः ॥ '

भाट्ट— ये तु क्रियमाणानुवादिनो हौत्रा मन्त्राः, तेषामपि क्रियमाणकर्मस्मृतिजनकत्वेन दृष्टार्थत्वस्यैव मन्त्राधिकरणे कौस्तुभे स्थापितत्वात् करणमन्त्रवत् विकल्पः । इति प्राप्ते, करणमन्त्रजन्यस्मृतेः अनुष्ठानजनकत्वेन एकेन सिद्धौ इतरस्य वैयर्थ्यापत्तौ विकल्पः । प्रकृते तु अध्वर्युणा क्रियमाणस्य बहुक्षणव्यापिनस्तस्य कर्मणः स्मृत्यविच्छेदार्थं पुनःपुनः स्मरणात् अनेकैरपि मन्त्रैः तत्तद्व्यापाराणां स्मरणोपपत्तेः अष्टदोषदुष्टविकल्पायोगेन युक्त एव समुच्चयः । अत एव ' त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ', ' ज्योतिष्मतीरनुब्रूयात् ' इत्यादिकानि लिङ्गान्यपि संगच्छन्ते ।

मण्डन— ' हौत्रो मन्त्रः स्यात् समुच्चेय एव । '

शंकर— ' क्रियमाणानुवादिषु । ' समुच्चयः ।

• हौत्रकाध्यायः । संकर्ष. ३.

⌛ ह्रदनक्रन्यायः । यथा ह्रदनक्रयोः परस्परवियुक्तयोः धीवरेण प्रधर्षणीयता भवति, संयुक्तयोस्तु परस्परसाहाय्यमाचरतोर्दुर्धर्षता भवति, तथा प्रकृतेऽपि । (अतः रक्ष्यरक्षकभावे अयं न्यायः) । साहस्री. २९२.

• हृसीयसी गायत्री । पादेषु अक्षराणि ६।६।७। उदा० ' प्रेष्ठमु प्रियाणां ' ( ऋसं. ८।१०३।१० ) किंवा ७।६।६। उदा० ' इन्द्रः सहस्रदाव्ना ' ( ऋसं १।१७।५ ) ।

देव स्मृतिर्भवति । सत्यम्, विधिशब्दादपि सामर्थ्याद्भवति । मन्त्रादपि भवति । मन्त्रस्य आम्नानसामर्थ्यान्मन्त्रेण कर्तव्या । प्रवृत्तेषु च कर्मसु स्मृतिसंतानेनार्थः इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्यैकस्मिन्नेव प्रयोगे संभवः इति क्रियमाणानुवादित्वाद्धौत्राणां समुच्चयः ।

समुच्चयं च दर्शयति । ३८ ॥

भाष्यम्-- ' त्रिः प्रथमामन्वाह, त्रिरुत्तमामन्वाह, ज्योतिष्मतीरनुब्रूयात् ' इति । अनेकसंनिपाते चैतद्भवति प्रथमा, उत्तमेति । तस्मात् समुच्चयः ।

शा— ' उच्छ्रयस्व वनस्पते ' इत्यादयो ये क्रियमाणानुवादिनो हौत्रा मन्त्रा, तेषामपि करणवत् एकार्थत्वात् विकल्पप्राप्तौ उच्यते । करणानि हि कर्मानुष्ठानकरणभूता स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति । न च एकेन तत्सिद्धौ इतरेण कार्यमस्तीति युक्तः तत्र विकल्प । क्रियमाणानुवादिनस्तु अध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्था । स्मृत्यविच्छेदश्च आन्त्यादपेक्षित इति सर्वेषा समुच्चय. ।

के-- ब्राह्मणविहितानां प्रथमादिमन्त्राणामिव हौत्राणामपि विकल्पं इत्युत्थानात् दृष्टान्तसंगतिः ।

वि-- ' उद्दिधेत्युच्छ्रयस्वेति विकल्पो वा समुच्चय. । , विकल्प स्मारकत्वैक्यात्, दाकारान्यत्वतो ऽन्तिमः ॥ ' ' कर्तव्य करोति ' इति स्मृतिप्रकारान्यत्वात् कार्यैक्याभावात् समुच्चय. ।

द्वितीयवर्णकमारचयति— ' उच्छ्रयस्व समिद्धस्वेत्यादीनां किं विकल्पनम् । समुच्चयो वा, कार्यैक्यादाद्यो, ऽनुस्मृतयेऽन्तिमः ॥ '

भाट्ट— ये तु क्रियमाणानुवादिनो हौत्रा मन्त्राः, तेषामपि क्रियमाणकर्मस्मृतिजनकत्वेन दृष्टार्थत्वस्यैव मन्त्राधिकरणे कौस्तुभे स्थापितत्वात् करणमन्त्रवत् विकल्पः । इति प्राप्ते, करणमन्त्रजन्यस्मृतेः अनुष्ठानजनकत्वेन एकेन सिद्धौ इतरस्य वैयर्थ्यापत्तौ विकल्पः । प्रकृते तु अध्वर्युणा क्रियमाणस्य बहुक्षणव्यासक्तस्य कर्मण स्मृत्यविच्छेदार्थं पुन पुन. स्मरणात् अनेकैरपि मन्त्रै. तत्तद्व्यापाराणां स्मरणोपपत्तेः अदृष्टोपदुष्टविकल्पायोगेन युक्त एव समुच्चयः । अत एव ' त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ', ' ज्योतिष्मतीरनुब्रूयात् ' इत्यादिकानि लिङ्गान्यपि संगच्छन्ते ।

मण्डन-- ' हौत्रो मन्त्र स्यात् समुच्चेय एव । '

शंकर— ' क्रियमाणानुवादिषु । ' समुच्चय. ।

• हौत्रकाध्यायः । संकर्ष. ३.

ह्रदनक्रन्यायः । यथा ह्रदनक्रयोः परस्परवियुक्तयोः धीवरेण प्रधर्षणीयता भवति, संयुक्तयोस्तु परस्परसाहाय्यमाचरतोर्दुर्धर्षता भवति, तथा प्रकृतेऽपि । (अत. रक्ष्यरक्षकभावे अय न्यायः) । साहस्री. २९२.

• ह्रसीयसी गायत्री । पादेषु अक्षराणि ६।६।७। उदा० ' प्रेष्ठमु प्रियाणां ' ( ऋसं. ८।१०३।१० ) किंवा ७।६।६। उदा० ' इन्द्रः सहस्रदाना ' ( ऋसं १।१७।५ ) ।